॥ श्रीहरिः ॥

# भक्ति-रसार्णवः






वेद-वेदान्ततत्त्ववेत्तृभिः
यतिचक्रचूडामणिभिः अनन्तश्रीविभूषित-
श्री हरिहरानन्द सरस्वती ( करपात्र ) स्वामिपादैः
संग्रथितः



न्याय-वेदान्त-साहित्याचार्येण, एम. ए. इत्युपाधिभृता
श्री गोविन्द नरहरि वैजापुरकरेण
संपादितः



कलिकातास्थ
भक्ति-सुधा साहित्य परिषद्
द्वारा प्रकाशितः




॥ श्रीः ॥

# जमनिका

कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया सिध्येद् भक्त्या विनाशयः ॥

परमेश्वरो जगन्निर्माय क्रीडति । क्रीडानुरूपमेव च जगन्निर्माणकर्मतां नीतम् । ‘स एकाकी नारमते’ति श्रुतेः । रसमयं जगदसर्जि । प्रतिपदमिदं सौन्दर्येण औदार्येण चमत्कारेण सारेण कलया मालिन्यानाविलया अविकलया चमदचीकरत् प्रासीषधत् । प्रकृतिविकृतयोऽनूनाः कृतयो महाबिलानिलानलसलिलाचलाः सागर-भूधरजलधरकिसलयधरादयः सन्निवेशमधुरा रचनाचातुर्योदञ्चितमहनीयमहिमानः अजागारिषत उदभावयिषत । पल्लववलयितवलयाः कुसुमनिकरमकरन्दतुन्दिलभृङ्ग-सङ्गसङ्गीतमलयमारुतान्दोलितवल्लीमतल्लीमालासंवलिता मधुरिमधुरीणा श्रीण-रमणीयवरणीया वासनाः सन्तो विलासाः समुदलासिषत । अधः प्रशस्यशस्य-श्यामलाः शष्पकदम्बमेदुरा अमलकमलदलमण्डलमण्डनमण्डितमुद्राविनिद्रान्तराला विशालविस्तारस्रस्तरविसरसरसा भुवां प्रदेशाः, उपरि ताराफेनपुञ्जपिञ्जरितः सूर्याचन्द्रातन्द्रसौदामनीवनीस्वच्छगुच्छच्छविच्छुरितः समुल्लोचचञ्चुरितलावण्या-वर्णनीयनितान्तकान्तिकान्त आश्चर्यचर्याचरुर्चितः सौभाग्याखर्वगर्वसर्वङ्कषो जगदा-भोगो व्यराजि । कियद्रुचिरं कियन्मनोहरमिदम् !

गङ्गातुङ्ग तरङ्गभङ्गप्रक्षालिता क्षीरसिन्धुफेनराशिधवलाट्टहासाट्टालिकाकोदण्ड-चक्रवाललतानन्दवनीसुषमा हिमालयविन्ध्योद्दण्डभुजदण्डमण्डिता सागरत्रितय-संवीक्षण-रक्षण-विलक्षण-शताधिकयोजनदीर्घोल्लाघ-भूभागभाग्य-गौरवा तत्रापि भारतवसुन्धरा पुण्यरमणीयतरङ्गिणरिङ्गणकमनीयकलेवरा स्वातन्त्र्यरक्षण-विचक्षणनवजागरण-शस्त्रास्त्रनिर्माणकौशल-कलाकलापकलित-सुसज्जसैनिक - विशाल-विशङ्कटसमवाय-हुङ्कारभर्त्सितसमरतविन्नरतविहस्त-सपत्नशौर्यवीर्यनिकुरम्बा धनधान्य-भूरिभरभारसौरभसंभृता पञ्चाशत्कोटिजनताजनार्दनप्रबोधावन्ध्यत्रिसन्ध्याश्रान्तपरि-श्रमक्रमाक्रान्ताशेषविशेषप्रदेशसहस्रसंकुला हरिता भरिता प्रतिनगरं प्रतिपथं मन्दिर-

सहस्रशोभिनी तीर्थसार्थसंवलिता समुद्यद्यज्ञयागभूमधूमा प्रातरारभ्य आराध्यवैदिक-वेदघोषदुन्दुभिनिनादमहोत्सवा महाभारत-रामायण-पुराणप्रवणा उदात्तचारित्र्यचुञ्चुः समुद्द्योतते ।

अत्रारण्यान्यो गिरयः सरितः सरोवराणि विविक्तानि अपरिमितलावण्यानि तपस्विसिद्धैराद्रियन्ते । स्थाने स्थाने शास्त्रचर्चा गीर्वाणगणवाणी-गौरवागूरिता आकर्णनमनोहरा उद्घाट्यन्ते । क्वचित्सङ्कीर्तनानि भगवन्नाम्नाम्, अन्यत्र पूजनानि नानाविधानधन्यानि क्रियन्ते । व्रतव्राताः कुत्रचित् साध्यन्ते । कुहचन समुपासनाः सम्पनीपद्यन्ते । श्रवण-मनन-निदिध्यासनाऽध्यवसायैः स्थानान्तरे अविद्यां विधूय समुपात्तसप्तमभूमिकासंक्रमक्रमा आश्रमतुरीयनिरता अदृष्टमात्रे विश्रमोपशाम्यन्तो वैराग्यसौभाग्यचतुष्टयीविनिवेदितरहस्यवश्यभावा उद्बोधनानुभानुपरास्तसमस्ता-नल्पसङ्कुलशः निर्वासना निर्मनस्काः समाधिद्वितयीक्रमप्राप्तिसंपत्तिभरितभूरि-भाग्या अनपेक्षितसमुपस्थितस्थान्युपनिमन्त्रणयन्त्रणा ब्रह्मणि परावरे परस्मिन् समवलीयन्ते ।

अत्र केचिद् भावुकाः सरसहृदया रससुधासरोवगाहकुशलाः स्निग्धवृत्तिप्रवाहपटला-मोदमधुरधाराऽऽस्वादकषायितान्तस्तरङ्गतुङ्गभङ्गावलीढाः सगुणब्रह्म लीलावलोकना-लोककलाकलितललितमतिमन्तः श्रवणकीर्तनप्रमुखासु भेदकूटावच्छिन्नप्रतियोगिताक-भेदभरितविभ्रमासु अन्यथासिद्धित्वपर्याप्त्यवच्छेदकताक-प्रतियोगिताका-ऽभाववत्वे सति स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्वे सति स्वसमानाधि-करणान्योन्याभावप्रतियोगितानवच्छेदकत्वे सतीति वा पूर्ववर्तित्वविशिष्टकलेवरां समाधाय भक्तिव्यक्तिं विहरन्तः शृण्वन्तो भगवल्लीलाः पश्यन्तस्तद्विग्रहमाधुर्यं समुच्चारयन्ते । नामानि समुच्चकैमुक्तकण्ठं निमज्जन्तः भावनापीयूषकूपेषु चरणसरसी-रुहमरन्दसन्दोहपानमदमाद्यन्ते ।

गुरुतरविभ्रमनोहरे तस्मिन् समयेऽस्मिन् विश्वेऽसहायमात्मानं मन्वानाः कराल-गरलज्वालाजालजटिलेऽकाण्डप्रकाण्डप्रचण्डताण्डवं प्रलयकालमिव नेदीयांसमासा-दयति समस्ते विग्रस्ते विहस्ते विश्वस्मिन् विष्टपे सुपर्वाण इव निर्वाणमितरत्र अप्रतिपनीपद्यमाना निर्वेदयन्तः सर्वथा स्वनिर्वेदनं विदधाना । अमन्दानन्दतुन्दिले सौन्दर्यसारसर्वस्वे कृपाकूपारापारपूरे निरन्तरनवनवचन्द्रिकाचमत्कारचञ्चूर्यमाणामृत-

बिन्दुसन्दोहधवलमौलिमाले भूरिभूतिवैभवविभाविभासिते भगवति प्रभूतभूतभावने मृत्युदर्पदलनमहनीयमहामहिमनि सर्वेश्वरे सर्वशक्तिमति श्रीविश्वनाथे समुद्दण्डभुजदण्डाखण्डभुवनमण्डलरक्षणसक्षणविलक्षणपराक्रमे लक्ष्मीलताबाहुपरिरम्भसंरम्भसंभ्रमविभ्रमोदञ्चितरोमाञ्चकञ्चुके श्रीमन्नारायणे शृङ्गारोद्गारसहस्रमयमिव सङ्गीतविलासोल्लासमयमिव उद्दामकामकमनीयकलाकलापमयमिव अपरमिव वृन्दावनं द्वितीयमिव गोलोकलोकालोकं निखिलमेव लोकं निर्मिमाणे श्रीकृष्णे वा दशकण्ठकण्ठकुण्ठनाकुण्ठितवैकुण्ठे श्रीरामे वा लावण्यलीलावलयवलयितकोटिकोटिब्रह्माण्डमण्डलोल्लासकौशलपेशलसामर्थ्यसार्थसंभृतायां सुषमासौरभसंभारभासुरमुग्धदुग्धोदधिमध्यविराजिताम्भोजराजि - राजसिंहासनसमासीन-कामराजोत्सङ्गसङ्गोच्छलित-तारुण्यारुण्यरमणीयवरणीय-वरेण्यायां गिरिराजिराज-तनयायां वा प्रेमस्थेमभाजः प्रकर्षभावनावशात् विरहवन्त इव प्रियामयीं त्रिजगतीं समुपास्यमयीं निभालयन्तः क्षणक्षणविलक्षणां वैयाकुलीं कलयन्तः कृतार्थयन्ति स्वात्मलाभम्, समुज्ज्वलयन्ति देशम्, समुद्धरन्ति कुलम्, स्थापयन्ति यशः, परिप्राप्नुवन्ति सालोक्यम्, सामीप्यम्, सारूप्यम्, सार्ष्टिं सायुज्यं वा ।

सेयं प्रेमाम्बुधारामयी भगवती भक्तिः कर्ममिश्रा ज्ञानमिश्रा विशुद्धा चेति नानाप्रवाहानातन्वाना चरमपरमपञ्चमपुरुषार्थरूपेति भावुकशिरोमणयः, तत्त्वसाक्षात्कारस्वरूपेति श्रीमद्भगवत्पूज्यपादाः । 'रसो वै सः,' 'रसं ह्येवायं लब्ध्वा आनन्दीभवति' इति श्रुतेः शब्दार्थोभयालङ्कारालङ्कृत-दोषकदम्बकलङ्कपङ्कातङ्कानुम्भित-विभावानुभावसञ्चारिनिकरवृत्तिव्यञ्जनाभिव्यज्यमाननिरावरणचैतन्यानन्दतुन्दिल-विभावानुभावसञ्चारितसंवलित-रत्यादिगुणप्रगुणितस्थायिभावरसरूपेति सहृदयश्लाघ्याः पण्डितराजप्रभृतयः साहित्यसौहित्या महान्तो मधुसूदनसरस्वतीप्रमुखा दार्शनिकाश्च ।

१. तदेतत्सौन्दर्यं मधुरमधुरं दोषविधुरं, समग्राङ्गोपाङ्गं कलिकुलमलक्षालनरसम् ।
सहस्रैर्भूतानामपि जननजातैरसुलभं, कृपासिन्धोरेकप्रबलकरुणाप्राप्यममलम् ॥

२. प्रमथ्य क्षीराब्धिं भजनमहिमोद्गारसुरभिं, वगाह्य प्रोद्‌वद्धं सहृदयधुरीणैः प्रविततम् ।
प्रमाणैः सत्तर्कैर्ग्रथितमथितं स्वानुभवतः, समुत्तोल्यानीतं विशकलितमान्ध्यापनयनम् ॥

३.सुखं सेव्यं सर्वैर्भंजनपरमैर्मानवगणैः, पुमर्थान् प्रेप्सद्भिर्भुवनतले जातमनिशम्
निगूढं निर्व्यूढं तदनु परमप्रौढमसमं प्रबन्धं सद्बन्धं भजनरससिन्धुं व्यरचयन् ॥

४.करामत्रापात्रा यतिवर-महाचार्यचरणाः, यशोधन्याऽनन्या हरिहरपरानन्दविभवः ।
महान्तः श्रीमन्तो धृतसकलशास्त्राधिमतयो, महाराज्ञा भक्ते रसभरसमास्वादनिमृताः॥

५.तपःपूतात्मानो यमनियमभाजः स्तुतिशतैः, श्रुतिस्मृत्यारूढैरपि परमतन्त्राधिकरणैः ।
अहोरात्रावृत्तैर्मुखरितमुखा मध्यविरताः, कथाव्याख्यानानानयनिपुणतायोगगुरवः ॥

६.विभिन्दाना ग्रन्थीनपि विबुधवन्द्यैरशिथिलं परं याताः पारं विदितपरमानन्दवपुषः ।
निमग्ना आनन्दोच्छलितरससारे परशिवे, न्यभान्त्सुः सन्दर्भामृतरसमहाम्भोधिविसरम् ॥

पुण्यस्वर्णमहीधराग्रशिखराबुद्भूय धाराशतैः
सोत्फालां दधती गतिं भरतभूसौभाग्यमातन्वती ।
विश्वोड्डामरकण्टकं निजगुणोत्कुद्दालकैः क्षिण्वती
गङ्गा भक्तिमहेश्वरी विजयते प्रोद्दामवामा हरेः ॥ ७ ॥

वैशिष्ट्यं वहते न जातु जडिमा तथ्यो रमाधीश्वरे
भेदा न प्रतिभान्ति निर्मलतनावीशेऽद्वितीये शिवे ।
भेदाभेदविरुद्धता, परिणतिस्तस्मिन् विशुद्धे कथं
स्वात्मानन्दमहोत्सवोऽयमधुना तस्मात् समुज्जृम्भितः ॥ ८ ॥

अवेद्ये प्राकाश्यव्यवहृतिसमर्हत्वसुभगे
परब्रह्मानन्दे स्वथ च सगुणे सुन्दरहरे ।
परे कारुण्याब्धौ निभृतमतयो भक्तिसरसाः
कृतार्था भूयासुस्त्विह यतिवर्या व्यवसिताः ॥ ९ ॥

काशीपीठाधिनाथेन शङ्कराचार्यभिक्षुणा ।
महेश्वरेण रचिता सेयं जमनिकाऽगलत् ॥ १० ॥

—श्री महेश्वरानन्द सरस्वती
( काशी-सुमेरुपीठाधीश्वर-
जगद्गुरुशङ्कराचार्यपादाः )

धर्मसङ्घः, दुर्गाकुण्डम्,
वाराणसी
विजयादशमी, २०२५ वि०



# आमुखम्

महतः प्रमोदस्य आत्मनश्च सौभाग्यस्य पदमेतत् मन्ये यदयं विश्वरससारसर्वस्व-मूर्तेः भगवतो निरतिशयभक्तेः रसार्णवो 'भक्तिरसार्णवः' सहृदयानां विदुषां कर-कमलयोः उपायनीक्रियते । भक्तिरसार्णवोऽयं बहोः कालात् पूर्वं समाराध्यगुरुचरणैः अनन्तश्रीविभूषितैः करपात्रस्वामिपादैः प्रथित्वा सम्पादनाय प्रकाशनाय च कस्मैचन विदुषे समर्पित आसीत् । परं दौर्भाग्यादयं ततो लुप्तः । श्रीचरणैः पुनर्महता श्रमेण मूलभूत-विशकलितटिप्पणादिकं संयोज्य द्वितीयवारं प्रथितो नैकैर्नव्यैः विषयैश्च सुपरिष्कृतः । ततोऽस्य सम्पादनाय प्रकाशनाय च तैरयं तेषां विधेयः कृपया समा-ज्ञप्तः । विषयस्य गुरु-गहनतरत्वाद् आत्मनश्च सीमितं बुद्धिबलं वीक्ष्य ग्रन्थस्यास्य सम्पादनकर्मणि जातवेपथुरप्ययं जनो 'गुरोराज्ञा गरीयसी'ति मत्वा प्रावर्तत ।

भक्तिरसप्रधानत्वादेव मध्ये मध्ये नैकवारं चर्चितस्यापि विषयस्य भङ्ग्यन्तरेण विवेचनमत्र यत्समुपलभ्यते, तन्नूनं पुनरुक्तवदाभासालङ्कारमेव पुष्णाति । तेन किमपि कमनीयं नव्यमेव व्यङ्ग्य सहृदयान् चमत्कुर्वद् विलसति । अत एव ग्रन्थे सा व्यासशैली तथैवाऽक्षुण्णा प्रस्थापिता मयाऽस्य सम्पादनं कुर्वता, विशेषतो भक्तिरस-निरूपणप्रसङ्गे । न च तत्र कमपि तार्किकसुलभं परिष्कारं कृत्वा भक्ते-रात्मा दूषित इति सप्रश्रयं सूच्यते ।

ग्रन्थप्रतिपाद्यविषये वक्तव्यं चेत् श्रीचरणैः भक्तिरसनिरूपणात्मके अष्टमे प्रकरणे रसविषयकं शास्त्रकृतां निखिमपि विचारं संग्रथ्य तदालोके भक्तिरसस्य शास्त्रीयं मूल्यमापनम्, राधातत्त्वरहस्यम्, वृन्दावनीय-विविध-भक्तिसाम्प्रदायिक-मतसमीक्षणञ्च कृतम् । तत्पोषणायैव प्रारम्भिकेषु त्रिषु प्रकरणेषु भजनीय-तत्त्व-विषयकः समग्रो दार्शनिको विस्तरः, ततः परतरेषु त्रिषु प्रकरणेषु राधा-कृष्णयोः वेदप्रतिपाद्यत्व-निरूपणमुखेन विमर्शनीय-वैदिकसूक्तानामपि श्रीकृष्णपरत्वं महत्या प्रौढ्या प्रस्थापितम् । सप्तमे प्रकरणे पुरुषसूक्त-देवीसूक्तयोः परमं तात्पर्यं प्रकट-यद्भिः श्रीचरणैः व्यञ्जनया तत्तत्त्वं राधाकृष्णयोरेव प्रतिष्ठापितम् । अन्तिमेषु त्रिषु प्रकरणेषु नवमेन प्रकरणेन भगवद्धामरूपादीनां परब्रह्मात्मकत्वम्, दशमेन च निराकारब्रह्मप्रतिपत्तेरपि भक्तिरूपत्वं संसाध्य रुद्रसंख्यकेन चरमेण प्रकरणेन

अद्वैतस्थापनाचार्याणां श्रीमधुसूदनसरस्वती-स्वामिपादानां पन्थानं समाश्रित्य 'भक्तिः मुक्तिशताधिका' संसाधिता श्रीचरणैः।

युक्तमेवैतत्, भगवति भक्तैर्ये केचन अचिन्त्यानन्तगुणगणाः कल्प्यन्ते, ते नूनं तेषामेव समुद्धाराय। येन रूपेण यः समुपास्यते, तस्मिन् तद्रूपप्राप्तिर्भवतीति शास्त्रकृतां सर्वतन्त्रसिद्धान्तः। भक्तैश्च तादृशगुणगणविशिष्टो भगवान् समुपास्येत चेत्तेषु ते गुणा अर्थत एव संक्रान्ता भवेयुः। तेन च भक्तानां चरमोत्कर्षः। निर्विचिकित्सितमेतद् यद् ब्रह्मणः परमार्थतोऽनतिशयत्वेऽपि विशुद्धशक्तिसाहचर्येण चमत्कृतितारतम्यं सहृदयानुभवसिद्धम्। तत्र ब्राह्माण्यपि सुखानि गोष्पदायन्ते। द्विपरार्धगुणीकृतो ब्रह्मानन्दो भक्तिरसाम्भोधेः परमाणुतुलामपि नैति। अतः शक्तिसहकृतान्तःकरणव्यङ्ग्यभगवति तद्रहितान्तःकरणव्यङ्ग्यब्रह्मापेक्षया नूनमेव वैशिष्ट्यं यच्च अद्वैतसम्प्रदायोन्नायकशिरोमणिभिः आराध्यचरणैः प्रायः शताब्दित्रयानन्तरे श्रीमधुसूदनसरस्वतीपादैरिव देवगिरा गुम्फितं सद् देववाणीवाङ्मय-रत्नभाण्डागारे चूडामणिकल्पमाचन्द्रदिवाकरौ विद्योतेत। विद्वत्सु रसिकेषु भक्तेषु च नितान्तं कृपालवस्ते अस्य महत उपकारस्य कृते धन्यवादपात्रीकृताश्चेत् सर्वं स्वारस्यमेव विलुप्तं स्यात्। अतस्ते एतदर्थं शतशो नमस्या एव।

अन्यच्च, अनन्तश्रीविभूषितैः जगद्गुरुशङ्कराचार्यैः काशीसुमेरुपीठाधीश्वरैः महेश्वरानन्दसरस्वती-स्वामिपादैः पुनः स्वीयभूमिकया संभूष्यायं राजमुद्राङ्कितः कृतः किल। यतो हि पूर्वाश्रमत एव ( श्री पं० महादेवशास्त्री कवि-तार्किकचक्रवर्ती ) ते साहित्यदर्शनाचार्यत्वेन सुख्याताः, नैके साहित्य-दर्शनाचार्याः शिष्यत्वेन परिकल्पिताश्च। इदानीं पुनर्जगद्गुरुपदे विराजन्त एव। कृपयाऽनया तैर्वयं सुबहूपकृताः।

श्रीचरणानामस्य बहुमूल्यस्य प्रसादस्य समुपलब्धौ तेषां सचिव-शिष्यवराणां विद्वद्वराणां श्रीमार्कण्डेय-ब्रह्मचारि-महोदयानां महत्तमं श्रेयो मनागपि विस्मर्तुं न शक्यते। नात्र लेशतोऽप्यतिशयोक्तिर्यद् अपेक्षितग्रन्थ-ग्रन्थांशसौलभ्यकरणम्, तत्र तत्र तदंशयोजनम्, समप्रलेखनम् एवमादिकार्यैः ब्रह्मचारिपादानां सहयोगैरेव पाठकेभ्य इममुपायनीकर्तुमहं प्राभवमिति। अतस्तेऽस्मिन् विधौ सगौरवं स्मरणीयाः।

सर्वमप्येतत् संयोजितं कार्यं प्रकाशयितुं यदि कश्चित् तादृशः सहृदयो भक्तो नासाद्येत, तदाऽपि बहुमूल्यस्यास्य उपायनस्य पाठकानां करसरोरुहेषु समर्पणं परं

दुःशकं स्यात्। कलिकातास्थ -'भक्तिसुधा-साहित्य-परिषदः' सभ्यैः विशेषतः श्रेष्ठिवर-भक्तवरैः श्री हनुमान्प्रसाद धानुका महोदयैः ग्रन्थस्यास्य प्रकाशनस्य निखिलोऽपि भारः स्वात्मनि स्वेच्छया परिगृहीत इति तेषां सहृदयता नूनं विज्ञैर्नैकैः धन्यवादवचनैरुपश्लोक्येत। -

सन्मार्ग-मुद्रणालय-व्यवस्थापकानां श्रीनारायणस्वरूपब्रह्मचारिणामपि बहुमूल्यः सहयोगोऽस्य प्रकाशनेऽस्माभिर्लब्ध इति तेऽपि सादरं धन्यवादार्हाः। मुखपृष्ठस्य भावभरित-चित्राङ्कनकलायै काशिकाः मूर्धन्याः भारतीय-संस्कृति-समुन्नायकचित्र-कलाप्रस्तोतारः कलाकाराः श्री वैजनाथ वर्म महाभागा अपि अस्माकं नैकान् साधुवाद-नर्हन्ति, येषां मुखपृष्ठस्य-चित्रकलया ग्रन्थे स्वर्णसौगन्ध्ययोगः सञ्जातः। अन्ते च सहृदयभक्तिप्रवणा विद्वांसः पाठकाः सधन्यवादं प्रार्थ्यन्ते यदत्र अनवधानजाः सर्वास्त्रुटीः क्षन्त्वा भवन्तोऽस्य रसं समास्वाद्य स्वात्मानमाप्याययन्तु, अस्मांश्च कृतकृत्यान् विधास्यन्त्विति।

श्रीगङ्गाधरशास्त्रि-भवनम्
३०।४० घासीटोला, वाराणसी
अनन्तचतुर्दशी, २०२५ वि०

विदुषामाश्रवः
—गोविन्द नरहरि वैजापुरकरः



# अनुक्रमः





।। श्रीहरिः ।।

# भक्ति-रसार्णवः

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ।।

अथायं प्रस्तूयते 'भक्तिरसार्णव'नामा प्रबन्धः । तत्रादौ भजनीयतत्त्वं यथा—

: १ :

## भजनीय तत्त्वम्

श्रीमतोऽचिन्त्यानन्तकल्याणगुणगणाकरस्य भूम्नोऽघटितघटनापटीयस्या सत्त्वासत्त्वाभ्यां निर्वक्तुमनर्हया सकलाश्चर्यैकभूम्या अनन्तशक्तिमूलभूतया मायया प्रवहमाणे प्रपञ्चे प्रेक्षावद्भिः सूक्ष्मेक्षिकया पर्यालोच्यमाने क्रमेण आत्मैव सर्वोत्कृष्टतत्त्वमाभाति । तस्य कैश्चन अणुत्वम्, कैश्चिन् मध्यमत्वम्, कैश्चिद् विभुत्वमुपेयते । विभुत्वेऽपि कैश्चिद् अचित्त्वम्, चित्परिणामित्वम्, चिदचित्त्वम्, अपरैश्च चिद्रूपत्वम्, असङ्गत्वञ्चाऽभ्युपेयते । तत्राप्यन्यैः कस्यचिदात्मविशेषस्य क्लेशकर्मविपाकाशयैरपरामृष्टस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वं सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्चोपेयते । यद्यप्यत्रैव सद्वितीयत्वं चिदचिद्विशिष्टत्वं चिदचिद्भिन्नाभिन्नत्वं तत्रापि स्वाभाविकौपाधिकाचिन्त्यभेदाभेदपक्षाः शुद्धाद्वैताद्वैतपक्षाश्च भवन्ति ; तथापि भक्तिरसायनकारास्तु अद्वैतसिद्धान्तानुसारिणः । परमार्थतया स एव भोक्तुः आत्मापीत्यौपनिषदनयः । वस्तुभूतं तत्त्वं तदेवेति श्रीमद्भागवतेऽपि ( १.२.११ ) —

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।। इति ।

अद्वयं यज्ज्ञानं सर्वविधभेदशून्यं यत्स्वप्रकाशं ज्ञानं तदेव तत्त्वमिति तत्त्वविदो वदन्ति । तदेव अद्वितीयत्वात् त्रिविधपरिच्छेदशून्यत्वेन अनन्तम्, ज्ञानत्वादवेद्यत्वे सत्यपरोक्षत्वात् स्वप्रकाशम्, अद्वितीयत्वादेव सर्वोपद्रवविवर्जितत्वात् परमानन्दरूपं त्रिकालाबाध्यत्वात् परमसत्यञ्च । तदेव अनतिशयबृहत्त्वाद् ब्रह्मात्मनामपि आत्मत्वात् परमात्मा, अचिन्त्यानन्तभगैः कल्याणगुणगणैश्च सेव्यमानत्वात् भगवानित्यप्युच्यते ।

यत्तु—कैश्चिद् ब्रह्मतायां ज्योतीरूपतया एतस्य अमूर्तता, भगवत्तायाञ्च ज्योतिष्मत्त्वेन मूर्तता, प्राकृतगुणगणराहित्येन निर्विशेषता, अप्राकृतानन्त-कल्याणगुणगणाकरतया सविशेषता च प्रोच्यते। तन्न; 'तत्त्वं यज्ज्ञान-मद्वयमि'ति तत्त्वलक्षणस्यैकविधत्वेन तदनुपपत्तेः। एतेन किरणादित्यवद् ब्रह्म-भगवतोभेदः, कृष्णादित्यस्य किरणरूपं ब्रह्मेत्याद्युक्तयोऽपि भावमात्रमूलिकाः, न तत्त्वानुसारिण्यः, तथात्वे अनौपनिषदत्वापत्तेः। श्रीमद्भागवते च—

यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्।

—१०।१४।३२

इति कृष्णस्य पूर्णब्रह्मत्वोक्तिः, अथातो ब्रह्मजिज्ञासेति चतुर्लक्षण्याम् उत्तरमीमांसायामपि ब्रह्मण एव विचार्यत्वोक्तिरिति तस्यैवौपनिषदत्वमपि स्पष्टमेव।

अपि च—ज्योतिर्ज्योतिष्मतोर्भेदे स्वगतभेदप्रसक्त्या अद्वयमित्यस्य अनौपचारिकत्वानुपपत्तिः। तयोर्भेदाभावे धर्मधर्मिभावश्च निर्मूलः। विरुद्धत्वान्न स्वाभाविको भेदाभेदः सम्भवत्युक्तिकः, औपाधिकश्चातात्त्विक एवेति तन्मूलकवादोऽपि तथाविध एव। अचिन्त्योऽपि मनोवचनातीतत्वा-दनन्तत्वाद्वा अनिर्वचनीयत्वाद्वा नाद्यो। तथाऽनुपगमादेव नान्त्यः; तथात्वे सिद्धान्तहानिः।

एकमेवाद्वितीयमिति त्रिविधभेदनिषेधिका श्रुतिस्तु स्वगतभेदमपि निषेध-त्येव। सदेव सोम्येदमग्र आसीदिति श्रुतौ इदमर्थस्य सदात्मकत्वावधारणेऽपि एकम् एव अद्वितीयमिति विशेषणत्रयोपादानं त्रिविधभेदवारणायैव; अन्यथा तदानर्थक्यापत्तिः। एवमेव नेह नानास्ति किञ्चन, नात्र काचन भिदास्ति इति श्रुत्योः किञ्चन-काचनशब्दाभ्यां नानाभिदादिपदव्यवहृतस्य भेदस्य सर्व-विधस्यैव निषेधः। 'नात्र कश्चन घट' इत्युक्तौ घटत्वावच्छिन्नप्रतियोगिता-कस्यैव निषेधास्यावगमदर्शनात्।

अपि च—ज्योतिष्मदादित्यस्थानीयाद् भगवतः सकाशाज्ज्योतिस्थानी-यस्य ब्रह्मणो न्यूनत्वे ब्रह्मत्वमेव नोपपद्यते। सङ्कोचे मानाभावेन सत्यं ज्ञान-मनन्तं ब्रह्मेति श्रुतौ अनन्तपदसमभिव्याहारेण च निरतिशयबृहतोऽर्थस्यैव ब्रह्मशब्दार्थत्वात्। ततो यत्रातिशयकल्पना परम्परायां वाचस्पतेरपि मतिः श्राम्येत् तस्याः समाप्तावेव अनतिशयबृहत्त्वोपपत्त्या यस्यैव भगवतः कृष्णस्य वाऽनतिशयबृहत्त्वमुच्यते तस्यैव ब्रह्मत्वोपपत्तिः।

इयांस्तु विशेषः—आदित्यस्थानीयस्य ज्योतिष्मतः किरणानां ज्योतिषां प्रदेशेषु भवन्मतेऽविद्यमानत्वेन देशपरिच्छेदः, अस्मन्मते तु भगवतः कृष्णस्य

वा सर्वविधपरिच्छेदराहित्येन अनतिशयबृहत्त्वोपपत्त्या तत्रैवानुपचारेण अद्वयत्वानन्तत्वब्रह्मत्वाद्युपपत्तिः। एवमेव अप्राकृतगुणसत्त्वेऽपि प्राकृतगुण-राहित्याभिप्रायेण निर्गुणत्वाभिधानेऽप्राकृतकायसत्त्वेऽपि प्राकृतकाय-राहित्यमात्रेण कायत्वाभिधाने निष्क्रियत्वाऽव्रणत्वादिशब्दानामपि तथार्थ-त्वापत्तिः। न च तत्र सगुणत्वादिश्रवणं विशिष्यते; सक्रियत्वादिश्रवणस्यापि सत्त्वे तदनुपपत्तेः। तथा च अनिर्वाच्याचिन्त्य-दिव्यलीलाशक्त्या अप्राकृत-दिव्यगुणगणाद्यङ्गीकारेणैव निर्गुणस्यापि सगुणत्वाद्युपपत्तिः।

निर्गुणं मां गुणाः सर्वे भजन्ति निरपेक्षकम्।

इत्याद्युक्तेः। न च सधनस्य धननिरपेक्षत्वेऽपि निर्धनस्य निरपेक्षानुप-पत्तिवत् सगुणस्य गुणनिरपेक्षत्वेऽपि निर्गुणस्य गुणानपेक्षतानुपपत्तिरिति वाच्यम्; तत्र गुणकृत्याभावेन तदुपपत्तेः। निर्धनस्यानाप्तकामस्य भवत्यपेक्षा, पूर्णकामस्य भगवतस्तु गुणाद्यनपेक्षता युज्यत एव। तथा हि—ब्रह्मणि परमात्मनि भगवति महत्त्वातिशयाधायकत्वेन आनन्दातिशयाधायकत्वेन वा अनर्थनिबर्हकत्वेन वा गुणानां नोपयोगः। तस्य निरतिशयबृहत्त्वात् निरतिशयानन्तानन्दरूपत्वात् नित्यनिरस्तसमस्तानर्थसत्ताकत्वाच्च नेतोऽन्यो गुणोपयोगः। अतस्तत्र गुणकृत्याभावेन निर्गुणोऽपि निरपेक्ष एव।

यत्तु—कैश्चिन्निराकारस्य प्रेमानास्पदत्वमुच्यते। तदप्यज्ञानविजृम्भितम्; परमाभिमतसगुण-साकारप्राप्तिसुखस्यापि निराकारत्वे सत्यपि प्रेमास्पदत्व-दर्शनात्। तं निर्गुणं निरपेक्षं गुणाः स्वगुणत्वाय भजन्ति। यथा कौस्तुभ-मणेरधिभूषणाय तत्तपस्तुष्ट इव तमङ्गीकरोति, न कण्ठभूषणाय। एवमेव गुणानां गुणत्वायैव तत्तपस्तुष्ट इव तानङ्गीकरोति, न स्वस्य सगुणत्वाय अनर्थ-निबर्हणाय महत्त्वातिशयानन्दातिशयाधानाय वा। श्रीधरस्वाम्यादिभिरपि तत्त्वश्लोके ब्रह्मणि परमात्मनि भगवति न वैलक्षण्यमङ्गीकृतम्, निर्मूलत्वा-च्छास्त्रयुक्तिविरुद्धत्वाच्च।

चयस्त्विषामित्यवधारितं पुरा
ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः॥

इति न्यायस्य नात्रोपपत्तिः। सर्वान्तरतमे ब्रह्मणि भगवति परमात्मनि सन्निधानासन्निधानादिकृतस्य तारतम्यस्यानुपपत्तेः। लक्षणैक्येन लक्ष्य-

नन्वेवं कार्यत्वेन अनित्यत्वानुमाने घटादिषु रूपसाहचर्यं लिङ्गस्य दृष्टमिति तद्विशिष्टस्यैव तस्य व्याप्यत्वे रूपाभाववति वायौ तदसिद्धिः, तत्सिद्धौ वा रूपस्यापि सिद्धिः स्यात्। न त्वेवम्; प्रत्यक्षबाधात्।

ननु साहचर्यमात्रमप्रयोजकम्, व्याप्तिरेव प्रयोजिका। सा च कार्यत्वनित्यत्वयोरेवेति वायावपि तत्सिद्धौ रूपाऽसिद्धिश्चेत् तर्हि प्रकृतेऽपि कर्तृत्वप्रयोजकं ज्ञानेच्छाप्रयत्नवत्त्वमेवेति शरीरित्वस्य तत्साहचर्यवत्त्वम्, अतो नेश्वरे तत्सिद्धिः। अन्यथा दृष्टान्तीयाशेषधर्मोपपत्तिः पक्षे स्यात्। तथा च घटदृष्टान्तेन जलेऽनित्यत्वसाधने पृथिवीत्वादिकमपि सिद्ध्येत्।

किञ्च—चेष्टां विना प्रयत्नमात्रेण कुलालादेर्घटादिकरणे सामर्थ्याभावात् चेष्टाश्रयस्य शरीरस्य सहकारित्वमस्तु नाम। ईश्वरस्तु प्रयत्नमात्रेणैव सर्वकरणसमर्थ इति न तदपेक्षा। किञ्च—शरीरस्य परिच्छिन्नत्वनियमेन युगपत् सकलदेशगतकार्यानुत्पत्तिप्रसङ्ग इति चेत्?

नैतत् साधीयः; ज्ञानादिमत्त्वस्येव शरीरत्वस्यापि अन्वय-व्यतिरेकसिद्धत्वात्। तथा हि—यत्र कुलालादिषु कर्तृत्वं तत्र शरीरत्वम्। यत्र च मुक्तात्मसु अशरीरित्वं न तत्र कर्तृत्वम्। अत ईश्वरस्यापि कर्तृत्वात् शरीरित्वमवश्यमङ्गीकर्तव्यम्, लोके तथादर्शनात्। अन्यथा इच्छादिकमपि च सिद्ध्येत्, अविशेषात्।

अथ चेष्टां विनाऽपि प्रयत्नमात्रेण कार्यकरणे समर्थत्वादीश्वरस्य न तदाश्रयतत्सिद्धिरिति ब्रूषे; तदा इच्छाप्रयत्नौ विनाऽपि ज्ञानमात्रेणैव तथाकरणसमर्थत्वादीश्वरस्य नेच्छादिमत्त्वमपीत्यपि सुवचम्। न च शरीरस्य परिच्छिन्नत्वे नोक्तदोषापत्तिरिति वाच्यम्; अन्यथानुपपत्तिबलात् सिद्ध्यच्छरीरं यावताऽनुपपत्तिपरिहारस्तावद्रूपमेव सेत्स्यति। शरीरपरिच्छेदानित्यत्वनियमस्तु अनुपपन्नः। पक्षधर्मताबलाद् अपरिच्छिन्ननित्यस्यैव सिद्धेः।

वस्तुतस्तु—परिच्छेदानित्यत्वाद्यनुपपत्त्युद्भावनस्य शरीरसिद्ध्यासिद्धिव्याहतत्वेन असंभव एव। अन्यथा ज्ञानस्याप्यनित्यत्वनियमेन ईश्वरज्ञानस्यापि अनित्यत्वप्रसङ्गः।

यत्तु—'ईश्वरस्य कर्तृत्वेन शरीरित्वसाधन ईश्वरासिद्धौ आश्रयासिद्धिः, तत्सिद्धौ च धर्मिग्राहकप्रमाणेन अशरीरस्यैव सिद्धत्वेन तद्बाधः' इति। तत्तु अविचारितरमणीयम्; तथा हि—अत्र धर्मिग्राहकं प्रमाणं किमिति भवान् पृच्छ्यते? कार्यलिङ्गकमनुमानमिति चेद् ब्रवीति भवान्, तदा तेन कर्ता परं सिद्ध्यति, नान्यत्।

ननु सत्यमेतत्, परन्तु कर्ता स्वयं कर्तृत्वेन सिद्ध्यन् स्वकर्तृत्वनिर्वाहकमादायैव सेत्स्यतीति वदामः। अहो! किं तन्निर्वाहकम्? ज्ञानेच्छा-

वैलक्षण्यानुपपत्तेरेकत्रैव अनतिशयबृहत्तमत्वेन आत्मनामप्यात्मत्वेन गुणगणसेव्यत्वेन च ब्रह्म-परमात्म-भगवत्त्वाद्युपपत्तेश्च ।

सकलसच्छास्त्रतात्पर्यगोचरस्य अशेषविशेषातीतस्य निर्गुणस्य निराकारस्य सच्चिदानन्दघनस्य अचिन्त्यशक्त्यानन्तकल्याणगुणगणाकरस्य अनन्तकोटिकन्दर्पसुन्दरस्य शक्रशतकोटिविलासस्य नभश्शतकोटिप्रविस्तारस्य वायुशतकोटिविपुलबलस्य रविशतकोटिप्रखरप्रकाशस्य शशिशतकोटिसुशीतलस्य कालशतकोटिदुस्तरस्य अमितकोटितीर्थपावनाभिधानस्य मेरुशतकोटिनिश्चलस्य सिन्धुशतकोटिगम्भीरस्य कामधेनुशतकोटिकामपूरकस्य शारदाशतकोटिचतुरस्य विधिशतकोटिसृष्टिनिपुणस्य विष्णुशतकोटिपालकस्य रुद्रशतकोटिसंहारकस्य धनदशतकोटिसमैश्वर्यस्य मायाकोटिशतदुर्घटघटनापटीयसः शेषशतकोटिधारकस्य भगवतोऽनुपमत्वमेव ।

वस्तुतो यथा शतकोटिखद्योतैरपि नादित्यस्योपमेयत्वं तथैवानन्तकोटयादित्यैरपि प्रकाशप्राखर्यादौ भगवतो नोपमेयत्वं सम्भवति । तत एव अशेषविशेषातीतस्य अनन्तगुणगणाकरस्य भगवतः संस्तवे मनोवचनातीतत्वादनन्तगुणत्वाच्च ब्रह्मादीनामप्यसामर्थ्यं श्रूयते । भक्तकल्पपादपस्य सर्वेऽपि गुणा भक्तोपयोगिन एव । सर्वशास्त्रपरमतात्पर्यविषयस्य कर्मोपासनतत्त्वज्ञानादिसमाराध्यस्य भगवत एव मुक्तोपसृप्यत्वमपि तत्र तत्रोक्तमेव । मुमुक्षुर्वै शरणमहं प्रपद्ये, यमेवैष वृणुते, तमेव चाद्यं पुरुषं प्रपद्ये, आत्मक्रीड आत्मरतिः इत्यादिश्रुति-स्मृतिभिर्मुमुक्षूणां मुक्तानाञ्चाप्यस्यैव प्रपदनीयताबोधनात् ।



: २ :

## भजनीयस्य शास्त्रैकसमधिगम्यत्वम्

यद्यपि 'सर्वकारणत्व-सर्वाधारत्व-सर्वाधिष्ठानत्व-सर्वप्रकाशकत्वादिभिः भूत-भौतिकानि स्वोपादानगोचरापरोक्षज्ञानवज्जन्यानि विलक्षणकार्यत्वात् शय्याप्रासादादिवदि'त्याद्यनुमानैरपि सर्वेश्वरस्य सिद्धिर्भवति; तथापि धर्मस्येव ब्रह्मणोऽपि वेदादिशास्त्रैकसमधिगम्यत्वमेव आचार्यैरङ्गीक्रियते। अनुमानादीनां वेदोक्तार्थस्य बुद्ध्यारोहाय असम्भावनादिदोषनिराकरणाय चोपयोगः।

यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति।
यत्प्रयन्त्यभि संविशन्ति, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं
ब्रह्म, जन्माद्यस्य यतः, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्।

इत्यादि श्रुति-सूत्र-रामायण-भारत-पुराण-तन्त्रागमादिभिरेव प्राधान्येन परमेश्वरोऽवगम्यते। नानुमानादीनां स्वातन्त्र्येण ब्रह्मणि प्रामाण्यम्, नानादोषदूषितत्वात्। तदुक्तं न्यायकणिकाकृद्भिः—

"विमतं धीमत्कर्तृकं कार्यत्वादित्यनुमानात् नेश्वरसिद्धिः; जीवजत्वेन सिद्धसाधनत्वात्। उपकरणाद्यभिज्ञकर्तृकत्वसाधने कतिपयतदभिज्ञतायां सर्वज्ञासिद्धेः। सर्वतदभिज्ञकर्तृकत्वसाधने सपक्षस्य साध्यहीनत्वात् कुम्भं निर्मितवतः कुलालस्य चैत्रकर्म्योऽयमित्याद्यनवबोधात् साधारणेऽपि सिद्धसाधनत्वात्, मनःसंयोगहीनस्य चोपलब्धेरभावाद् अमनस्कस्यापि ऐश्वर्यवशादुपलब्धिसम्भवे तत एव विनैवोपलब्ध्या जगन्निर्माणसम्भवेन उपलब्धिमत्कर्तृकस्यैव विलोपापत्तेः" इति।

शुद्धाद्वैतिभिश्च—'यत्तु जीवादृष्टसम्पादितशरीरं भूतावेशन्यायेन ईश्वर आविश्य कार्यं कृत्वाऽऽवेशं त्यजति, ज्ञानेच्छाप्रयत्नातिरिक्त-विशेषधर्माभावादि'ति। तत्तूपेक्ष्यम्; ईश्वरस्य अकर्तृत्वापादकत्वात्। तथा हि—तन्मते हि सावयवत्वेन अनुमितकार्यत्वक्षित्यादिपक्षक-कर्तृपूर्वकत्वसाध्यक-कार्यत्वलिङ्गकानुमानेन जगत्कर्तृत्वेनैव ईश्वरसिद्धिः। कर्ता चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमानेव लोके दृष्टः इति द्व्यणुकादिनगसागरान्तस्य च पक्षीकरणेन तत्कर्तृत्वेन सिद्धं तदुपादानगोचरापरोक्षज्ञानादिमान् नित्यः सर्वज्ञ एव भवतीति तादृक्तत्सिद्धिः। तथा च यथा लोके ज्ञानादिमत एव कर्तृत्वं दृष्टं तथेश्वरेऽपि शरीरित्वसिद्धिर्निष्प्रत्यूहा, कर्तृत्वस्य शरीरित्वव्याप्यत्वात्।

प्रसङ्गः स्यात्। कुत एतत्? यतो लोके कार्यकर्तृत्वं तद्वतामेव दृष्टं न तद्रहितानाम्; तर्हि शरीरस्यापि तत्समानयोगक्षेमत्वात् ज्ञानेच्छाप्रयत्नशरीरवत्त्वेन सेत्स्यति, लोके दर्शनस्य समानत्वादिति बुद्ध्यस्व।

ननु शरीरस्य महत्त्वेन उद्भूतरूपवत्त्वेन च चाक्षुषत्वं कथं न स्यात्। लौकिकप्रत्यक्षाविषयत्वादिति ब्रूमः। श्रूयते हि देवानामपि इन्द्रादीनामप्रत्यक्षत्वं विग्रहवताम्, किं पुनरखिलदेवदेवस्य अप्रत्यक्षत्वे शङ्का नाम। किञ्च—शङ्कानां तत्सिद्ध्युत्तरकालीनत्वात् तत्सिद्ध्यनवसरपराहतत्वेनैव नोदयसंभव इति संक्षेपः।

एतेन—'कार्यस्य शरीरादिमत्कर्तृपूर्वकत्वनियमः प्रत्यग्रजायमानाङ्कुरादावेव शरीरिणः कर्तुरनुपलम्भान्निरस्त' इति निरस्तम्। उक्तयुक्तिभिस्तत्रापि शरीरकर्तृकत्वस्यैव सिद्धेः। अतो ज्ञानदुर्बलव्यामोहनमात्रपरं मतमेतत्, न तु सच्छास्त्रीयमिति विद्वद्भिरुपेक्ष्यम्। एतदपि त्वन्मतानुसारेणैवोक्तम्। अस्माकं तु प्रतिसत्कर्णजिह्वाग्रजागरूकोक्त-श्रुति-स्मृति-पुराण-वाक्य-तत्त्वसूत्र-भेरीघोषोद्घुष्टतया सर्वतः पाणि-पादान्तत्वेन अचिन्त्यानन्तशक्तिमत्त्वेनैव भगवान् सिद्ध इति नानुमानशङ्कापेक्षाऽपि इत्यलं प्रसक्तानुप्रसक्त्या।

तथैव श्रीरामानुजाचार्यैश्च—क्षित्यादिषु सावयवत्वेन कार्यत्वमपि नानुमातुं शक्यम्। अकार्यम् अशक्यक्रियत्वात् अशक्योपादानविज्ञानत्वात्, महाभूतशब्दवाच्यत्वाच्च आकाशवदिति भट्टभास्करोक्तैः प्रत्यनुमानैस्तस्य सत्प्रतिपक्षितत्वात्। यदि चाकाशे निरवयवत्वस्य अनुकूलतर्कस्य सत्त्वेन क्षित्यादि-वायुपर्यन्तेषु च तदभावेन उक्तहेतूनामप्रयोजकत्वं विभाव्यते, तदापि कार्यत्वेन हेतुना बुद्धिमत्कर्तृपूर्वकत्वमात्रसिद्ध्या तादृशक्षेत्रज्ञानामेव कर्तृत्वेन सिद्धिरिति हेतोरर्थान्तरसाधकत्वान्नैते ईश्वरसाधकाः।

न च क्षित्यादिवायुपर्यन्तस्य पक्षीकरणेन तदुपादानगोचरापरोक्षज्ञानादिमत्कर्तृकत्वस्य क्षेत्रज्ञेष्वशक्यवचनतया पक्षधर्मताबलात् तत्सिद्धिः। 'विवादाध्यासितं क्षित्यादिकं स्वोपादानगोचरापरोक्षज्ञानादिमदनेककर्तृपूर्वकं कार्यत्वात् विचित्रसन्निवेशसार्वभौमसदनवदि'ति दृष्टान्तेन अनेककर्तृसिद्ध्या पक्षधर्मताया दुर्बलत्वात्। महीमहार्णवादीनां कार्याणामनेकत्वात् तेषां सर्वेषामेकदा एकेन निर्मितत्वे प्रमाणभूतस्य हेतोरभावात् पृथग्भूतेषु कार्येषु कालभेद-कर्तृभेदयोः प्रत्यक्षसिद्धत्वेन प्रत्युत बाधाच्च। न च जीवानां तादृशनिर्माणशक्त्यदर्शनेन तन्निवृत्तौ कार्यत्वबलेनैव तत्सिद्धिरिति वाच्यम्; पूर्वमशक्तानामपि पश्चात् पुण्यविशेषोपचयेन शक्तिदर्शनात्। पुण्यविशेषोपचयेन अतिशयितादृष्टसंभावनया च सादृशविलक्षणकार्यकर्तृत्वस्यापि संभवात्।

इदमेवोक्तं कपिलाचार्यैः—मुक्तात्मनः प्रशंसावाक्यमुपासासिद्धस्य वा इति सूत्रे। इदं योगिनोऽप्युपलक्षणम्। किञ्च—युगपत्सर्वोत्पत्ति-स्थिती न प्रमाणपदवीं व्रजतः, लोके क्रमेणैव तयोर्दर्शनात्। युगपत्तत्कल्पकस्य हेतोरशक्यवचनत्वात्। क्रमेण तत्कल्पने विरोधाभावाच्च। अतः क्षित्यादिकं बुद्धिमदेककर्तृकं कार्यत्वाद् घटदित्यत्र तत् नैककर्तृकं कार्यत्वात् घटस्तम्भादिसमूहवदिति दृष्टान्तेन हेतोः साधारणत्वम्। तथा भू-भूधरादिनिष्ठं कार्यत्वं न बुद्धिमदेककर्तृकत्वसाधकं समूहनिष्ठत्वात् घटपटस्तम्भादिसमूहनिष्ठकार्यत्ववदिति अनुमानान्तरादपि तथा।

किञ्च—इदं क्षित्यादिगतं कार्यत्वं युगपदुत्पद्यमानसर्वगतं वा क्रमिकोत्पद्यमानसर्वगतं वा? आद्ये आश्रयासिद्धत्वम्, द्वितीये तु विरुद्धम्। तस्मान्न कार्यत्वलिङ्गकानुमानेन ईश्वरसिद्धिः। नापि जगत् एकचेतनाधीनम्, अचेतनारब्धत्वात् नीरोगस्वशरीरवदित्यनुमानात् तत्सिद्धिः। तथा हि—किमिदमेकचेतनाधीनत्वम्? एकचेतनायत्तोत्पत्तिस्थितिकत्वमिति चेत्, न; नीरोगस्यापि शरीरस्य पितृपुत्राद्यनेकचेतनादृष्टजन्यत्वेन तदुत्पत्तिस्थित्योस्तदधीनत्वेन एकचेतनाधीनत्वाभावाद् दृष्टान्ते साध्यवैकल्येन हेतोरसाधारणत्वापत्तेः।

किञ्च—शरीरस्थितिरपि किं स्वावयवसमवेतता, उत प्राणनम्? आद्ये अवयवाधीनत्वान्न चेतनापेक्षा घटादिवत्। द्वितीये क्षित्यादीनां शरीरत्वाभावेन पक्षेऽसंभव इति पक्ष-सपक्षानुगतस्थित्यनुपलम्भः। नापि एकचेतनाधीनप्रवृत्तिकत्वम्। पक्षान्तर्भूतेषु गुरुतररथ-शिला-महीरुहादिषु अनेकचेतनाधीनप्रवृत्तिकत्वदर्शनेन व्यभिचारात्। नापि चेतनमात्राधीनत्वम्; सिद्धसाधनत्वात् अर्थान्तरापत्तेश्च।

किञ्च—ईश्वरः कर्ता न भवति प्रयोजनशून्यत्वात्, अशरीरत्वाच्च मुक्तात्मवदिति बाधकानुमानादपि नेश्वरकर्तृत्वसिद्धिः। किञ्च अत्यन्तापरिदृष्टेश्वराख्यपुरुषस्य तस्मिन् सामर्थ्यविशेषस्य च कल्पनेऽत्यन्तक्लृप्तानां गौरवात् जीवानामेव तपोयोगयागादिलब्धसामर्थ्यानां कर्तृत्वेन कल्पनं लघीय इति अचेतनारब्धत्वलिङ्गकानुमानेनापि नेश्वरसिद्धिरित्याहुः।

तस्माद् भजनीयस्य ब्रह्मणः शास्त्रैकसमधिगम्यत्वेन वेदादिशास्त्राणामेव तत्र मुख्यं प्रामाण्यम्। अनुमानादयस्तु तत्सहकारितयैव उपयुज्यन्ते, न स्वातन्त्र्येणेति दिक्।

: ३ :

# तत्त्वे मतान्तराणि सिद्धान्ताश्च

अत्र केचित्—

"वदन्ति तत् तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥
ब्रह्म निर्धर्मकं वस्तु निर्विशेषममूर्तिकम्।
इति सूर्योपमस्यास्य कथ्यते तत्प्रभोपमम्॥
ब्रह्मणो हि प्रतिष्ठाहम्···

इत्याद्युक्तवचनैः शक्तीनां न्यूनतमविकाशेन ब्रह्मत्वव्यपदेशः, शक्तीनामंशतो विकाशेन परमात्मत्वं सर्वोत्तमविकाशेन च भगवत्त्वम्। तेन औपनिषदस्य ब्रह्मणोंऽशत्वमंशित्वञ्च भगवतः" इति।

तन्न; यतो हि—'एकमेवाद्वितीयम्' इति सजातीयभेदत्रयनिषेधेन शक्तीनां तदतिरिक्तसत्ताकत्वाभावेन तन्मूलकभेदवर्णनम् अपारमार्थिकत्वपर्यवसाय्येव स्यात्। भगवतो ब्रह्मभिन्नत्वेऽनौपनिषदत्वमेव दूषणम्। अनन्तपदसमभिव्याहृतब्रह्मपदस्य निरतिशयं यद्बृहत्तदेव ब्रह्मेत्यर्थः पर्यवस्यति। भगवतस्तदपेक्षया अतिशयवत्त्वे ब्रह्मणः सातिशयत्वेन निरतिशयब्रह्मत्वमेव बाधितं स्यात्। तच्च न युक्तम्, सकलप्रमाणमूर्धन्यश्रुतिविरोधादेव।

यदप्युक्तम्—"बहुगुणाश्रयपदार्थस्य नैकेनेन्द्रियेण सर्वात्मना ग्रहणम्। यथा दुग्धधावल्यस्य चक्षुषा ग्रहणेऽपि तन्माधुर्यं न गृह्यते। रसनया तद्ग्रहणेऽपि न रूपं गृह्यते, मनसा तु दुग्धस्य सामस्त्येन ग्रहणं भवति। तथैव नानाविधैरुपासनैर्ब्रह्मणोंऽशेनैव ग्रहणम्; भक्त्या चित्तस्थानीयया सर्वात्मना तद्ग्रहणमि"ति।

तन्न; वैषम्यात्। चित्तस्य बहिरर्थग्रहणेऽस्वातन्त्र्यात्। तत्तदिन्द्रियैरुपस्थापितस्यैव अर्थस्य चित्तेन ग्रहणं संभवति यथा तथैव तैस्तैः प्रमाणैरुमेतयैव बुद्ध्या वस्तुयाथात्म्यमध्यवसीयते। ज्ञानम् इन्द्रियस्थानीयम्, भक्तिस्तु चित्तस्थानीयेति कथनं तु निर्युक्तिकम्; विपरीतस्यापि सुवचत्वात्।

अद्वैतसिद्धान्तमनाश्रित्य प्रत्यक्चैतन्याभिन्नब्रह्मणः साक्षात्कारोऽसंभव एव; प्रत्यगात्मनैव परस्य साक्षादपरोक्षत्वसम्भवात्। तद्भिन्नत्वेन तु साक्षादपरोक्षत्वासंभवात्। मानान्तरसापेक्षमेव अपरोक्षत्वम्। प्रपञ्चस्य च

मायिकत्वमन्तरा बाधासंभवेन निष्प्रपञ्चत्वासंभवेन निर्विशेषब्रह्मकल्पनाऽपि निरर्थिकैव। वेदान्तमतरीत्या तु—

पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।

शक्तयः सर्वभावानमचिन्त्यज्ञानगोचराः।

इत्यादिश्रुतिस्मृतिसिद्धा शक्तिरनिर्वचनीयैव। अन्यैरपि—'सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत' इत्यभ्युपगतैव अनिर्वचनीयता।

यच्च—"सूर्यमण्डलस्थं तेजोऽन्यत्, सूर्याद् वहिर्विद्यमानं तेजोऽन्यत्, रश्मिगतं तदन्यत्, तत्प्रतिच्छविभूतञ्चान्यदिति दृष्टान्तेन ब्रह्मणः स्वरूपशक्तिरन्तरङ्गा प्रथमा। तस्यैव वैकुण्ठादिवैभवरूपेण अवस्थानमन्यत्। शुद्धजीवरूपेण अवस्थानं तृतीयम्। मायाख्या वहिरङ्गा शक्तिरन्या चतुर्थी"ति। तदपि न युक्तम्; रश्मिजालव्यतिरिक्तस्य द्वितीयरूपस्यासत्त्वेन दृष्टान्तासिद्ध्या तद्बलेन साधितस्य जीवस्य पृथक्सत्त्वासिद्धेः। किञ्च—परिच्छिन्नसूर्यमण्डलस्य प्रकाशस्य मण्डलाद्बहिः संभवेऽपि अपरिच्छिन्नस्य ब्रह्मणो वहिर्देशासंभवात् तत्र द्वैतावस्थानासङ्गतेः।

एतेन—"तदेकं तत्त्वं स्वाभाविकाचिन्त्यशक्त्या स्वरूप-तद्रूपवैभव-जीव-प्रधानरूपेण चतुर्धाऽवतिष्ठते। सूर्यमण्डलस्थतेज इव मण्डल-तद्बहिर्गतरश्मि-तत्प्रतिच्छविरूपेणे"ति परास्तम् ( भा. संदर्भ, पृ. ६५ )। अपरिच्छिन्नेऽनन्ते ब्रह्मणि उपाधिपरामर्शमन्तरेण वस्तुभूतशक्त्यादिभेदासम्भवात्।

यत्तु—"ज्ञानमार्गस्य त्रुटिप्रदर्शनायोक्तम् 'त्यागभोगाभ्यां साधनायाः पूर्णता भवति। केवलेन त्यागेन तु मार्गस्यापूर्णतैव भवती'ति। अत एव तेन त्यक्तेन भुञ्जीथाः इति श्रुत्या त्यागभोगसंवलितमार्गस्यैव पूर्णतोच्यते। संसारस्य च न सर्वथा मिथ्यात्वम्, स्वात्मन्येव तेन स्वत उत्पादितत्वात्। शुद्धसायैव महामाया" इत्यादि।

तत्सर्वमयुक्तम्; भावानवबोधात्। त्यागेनैके अमृतत्वमानशुः इति श्रुत्या त्यागस्यैव अमृतत्वप्रापकत्वोक्तेः। 'तेन त्यक्तेने'त्यत्रापि त्यक्तेन=त्यागेन भुञ्जीथः आत्मानं पालयेथा इत्येवार्थः। अत्र भुजिः पालनार्थो नाभ्यवहारार्थः। त्यागमन्तरा देहादितादात्म्याध्यासेन देहादिनाशेन आत्मनाशः प्रसज्येत। त्यागेन तु तादात्म्याध्यासनिवृत्त्या देहादिनाशेऽपि नात्मनाश इत्यारोपित-नाशनिवृत्त्या तत्पालनं युज्यते। अप्राप्तस्य प्राप्तौ प्रयत्नान्तरापेक्षत्वेऽपि प्राप्तस्य प्राप्तौ ज्ञानमन्तरा नान्यः प्रयासोऽपेक्षितः। एवमेव परिहृतस्य परिहरणेऽपि ज्ञानमेवापेक्षितम्। यथा विस्मृतकण्ठमणेः प्राप्तस्यैव प्राप्तिर्ज्ञान-मात्रसाध्या। नूपुरारोपितफणिनः परिहृतस्यैव परिहारो ज्ञानमात्रेण भवतीति तद्वत्। स्वतःसिद्धस्य स्वप्रकाशस्य परमानन्दस्वरूपस्य निर्विशेषस्यारोपित-

प्रपञ्चस्य ब्रह्मणो ज्ञानमात्रेण सप्रपञ्चतावाध एव पुरुषार्थः। सर्वस्वरूपे ब्रह्मण्यारोपितस्य असर्वत्वस्य त्याग एव सर्वत्वावाप्तिः। आरोपितानात्मत्वस्यात्मनः साक्षात्कारेण आरोपितानात्मत्वनिवृत्तिरेव पुरुषार्थः। तेन च स्वरूपानन्दावाप्तिरेव परमोपभोगः, नात्र तद्भिन्नभोग्यलाभो भोगः।

यदुक्तम्—

"मणिर्यथा विभागेन नीलपीतादिसंयुतः।
रूपभेदमवाप्नोति ध्यानभेदात्तथा विभुः॥

इत्यादिरीत्या ध्यानभेदात् परमात्मनो रूपभेद" इति। तदपि भक्तमनोऽनुविधायित्वमेव भगवतः साधयति, न तु वस्तुभेदम्; वस्तुनो ज्ञानानधीनत्वात्। वस्तुतन्त्रं ज्ञानं भवति, न तु वस्तु ज्ञानतन्त्रम्।

एवमेव तदेतद्घोर आङ्गिरस इत्यादिछान्दोग्यवचनेन कृष्णस्तृष्णादिभिः पीडित आसीत्, परं घोराङ्गिरसोपदिष्टमन्त्रप्रभावेण अच्युतोऽपिपासितश्च सम्पन्न" इत्यादिकल्पनमपि निःसारम्; कृष्णस्य परमेश्वरावतारभूतत्वेन अपिपासिताऽच्युतत्वादीनां नित्यसिद्धत्वात् तस्य कर्मलेपासंभवात्।

यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः।
स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुषः कुत एव बन्धः॥

इति भागवतोक्तेः।

तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच, अपिपास एव स बभूव।
सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत अक्षितमस्यच्युतमसि प्राणसंशितमसीति।
तत्रैते द्वे ऋचौ भवतः।

इति मन्त्रस्य ( छा० उ० ३.१७.६ ) शाङ्करभाष्यम्—

'तद्धैतद्यज्ञदर्शनं घोरो नामत आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्राय शिष्यायोक्त्वोवाच तदेतत्त्रयमित्यादिव्यवहितेन सम्बन्धः। स चैतद्दर्शनं श्रुत्वाऽपिपास एवान्याभ्यो विद्याभ्यो बभूव। इत्थं च विशिष्टेयं विद्या यत्कृष्णस्य देवकीपुत्रस्यान्यां विद्यां प्रतितृड्विच्छेदकरीति पुरुषयज्ञविद्यां स्तौति। घोर आङ्गिरसः कृष्णायोक्त्वेमां विद्यां किमुवाच? इति तदाह—स एवं यथोक्तयज्ञविदन्तवेलायां मरणकाले, एतन्मन्त्रत्रयं प्रतिपद्येत जपेदित्यर्थः। किं तत्? अक्षितमक्षीणमक्षतं वाऽसीत्येकं यजुः। सामर्थ्यादादित्यस्थं प्राणं चैकीकृत्याह—तथा तमेवाहाच्युतं स्वरूपादप्रच्युतमसीति द्वितीयं यजुः। प्राणसंशितं प्राणश्च स संशितम् सम्यक् तनूकृतश्च सूक्ष्मं तत्त्वमसीति तृतीयं यजुः। तत्रैतस्मिन्नर्थे विद्यास्तुतिपरे द्वे ऋचौ मन्त्रौ भवतः, न जपार्थे त्रयं प्रतिपद्येतेति त्रित्वसंख्याबाधनात्, पञ्चसंख्या हि तदा स्यात्।'

इत्थं भाष्यरीत्या एतद्विद्याप्राप्त्या कृष्णस्यान्यविद्याभ्यो वितृष्णतोक्ता विद्यामाहात्म्यख्यापनाय।

यदपि च—"यदुकुलवरिष्ठत्वात् कृष्णस्य यदुषु पूज्यत्वं कालान्तरे देवत्वञ्च प्रसिद्धम्। तस्यैव च यदुपूपास्येन आदित्येन तदीयेन विष्णुरूपेणैक्यं सम्पादितम्। विष्णुसम्बन्धे प्रयुक्तस्य गोपशब्दस्याऽपि वैदिकस्य गोपशब्दस्य गोचारणादिसम्बन्धेन कृष्णेऽपि प्रयोगः।' ईदृशीमेव कल्पनापरम्परामाश्रित्य केनचिदुक्तं यत् 'कृष्ण ऐतिहासिकः पुरुषो नासीदेव, किन्तु पूर्णे ज्ञानविज्ञान-स्वरूपे तत्त्वे पश्चात् कृष्णत्वारोपः संवृत्तः" इति। तत्सर्वं तुच्छम्; यतः सर्वदैव विष्णोर्भगवत एव कृष्णत्वम्, तस्य च नित्यत्वमेव। तत एव कालिदासेन महाकविना गोपवेषस्य विष्णोरित्युक्तम्।

'ता वां वरम्....' इत्यादिमन्त्राणां विनियोगानुसारेण प्राकरणिकस्यार्थस्य सत्त्वेऽपि कृष्णत्वमविरुद्धमेव। 'राधानां पते' इत्यादिमन्त्राणामपि प्राकरणि-कार्थपरत्वेऽपि राधापरत्वं न विरुद्धम्।

'ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु। तवेद्धि सख्यमस्तृतम्॥

(ऋ० १.१५.५)

अर्थः—हे इन्द्र! ब्राह्मणात्=ब्राह्मणाच्छंसिसम्बन्धात्। राधसः=धन-भूतात् पात्रात् सोमं पिब। किं कृत्वा? ऋतूरनु=ऋतुदेवाननुसृत्य। ऋतवोऽपि पिबन्त्वित्यर्थः। हि=यस्मात्। तवेतत्=तव सख्यम्। अस्तृ-तम्=ऋतूनामविच्छिन्नम्। तस्मात् ऋतुभिः सह पानं युक्तम्।

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्॥

(ऋग्वेदसंहिता १.२२.१८)

अर्थः—अदाभ्यः=केनापि हिंसितुमशक्यः। गोपाः=सर्वस्य जगतो रक्षकः। विष्णुः पृथिव्यादिस्थानेषु। अतः एतेषु त्रीणि पदानि। विचक्रमे। किं कुर्वन्? धर्माणि=अग्निहोत्रादीनि। धारयन्=पोषयन्।

स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते। विभूतिरस्तु सूनृता॥

(ऋ० सं० १.३०.१०)

अर्थः—हे इन्द्र=राधानां पते धनानां पालक। गिर्वाहः=गीर्भिरुह्यमानः। वीर शौर्योपेत। यस्य ते तव स्तोत्रम् ईदृशं भवति=तस्य तव विभूतिः= लक्ष्मीः। सूनृता=प्रियसत्यरूपा अस्तु।

इदं ह्यन्वोजसा सुतं राधानां पते। पिबा त्व१ स्य गिर्वणः॥

(३.५१.१०)

अर्थः—हे राधानां पते धनानां स्वामिन्। गिर्वणः गीर्भिः स्तुतिभिः वननीय। हे इन्द्र! इदं अनु अनेन अनुक्रमेण, उद्देशानुक्रमेणेत्यर्थः। ओजसा बलेन ग्रावभिः सुतम् अभिषुतम्। इमं सोमं तु क्षिप्रं पिब हि।

सत्यप्येतादृशे प्राकरणिकार्थे वेदैश्च सर्वैरहमेव वेद्यः, सर्वे वेदा यत्पदमामनन्ति इत्यादिस्मृतिश्रुत्यनुसारेण वेदानां महातात्पर्यस्य भगवत्येव सत्त्वात् तस्मिन् पर्यवसानं न विरुद्धयते।

एवमेव कृष्णस्य अन्तवेलायामपिपासितत्वमच्युतत्वं च नोक्तम्। किन्तु एतदुपासकस्य मरणवेलायां कर्तव्यमुपदिशति—स एवं यथोक्तयज्ञवित् अन्तकाले एतन्मन्त्रत्रयं प्रतिपद्येत, जपेदित्यर्थः। किं तदित्यपेक्षायाम्—'अक्षितमसि अच्युतमसि प्राणसंशितमसि इति'। नानेन कृष्णस्य पूर्वसतृष्णत्वं स्वरूपच्युतत्वञ्च, एतद्विद्याप्राप्त्यनन्तरमच्युतत्वं वितृष्णत्वञ्चोच्यते इति सिद्धयति।

उपनिषदां कालनिर्धारणमपि निष्प्रमाणकमेव, वाचा विरूपनित्यया, अनादिनिधना नित्या इत्यादिवचनैर्वेदस्य नित्यत्वावधारणात्, मन्त्रब्राह्मणयोश्च वेदत्वात्।

: ४ :

# कृष्णस्य प्राधान्यम्, अपालासूक्ततात्पर्यञ्च

यदपि—"अपालायाः कथामाश्रित्य कुमारीणां पतिद्वेषाणां देवकामात्वम्, देवेषु चेन्द्रस्य प्राधान्येन तत्कामात्वम्, कालान्तरे यदा सूर्ये विष्णौ च प्राधान्यं सञ्जातं तदा तत्कामात्वमुपगतमि"ति । तदपि न सम्यक्; कृष्णस्य सर्वथैव प्राधान्यात्, सायणादिरीत्या तत्सूक्तव्याख्यानेन तदसिद्धेश्च ।

तथा हि—'कन्या वारि'ति सप्तर्चमेकादशं सूक्तम् । अत्रेः पुत्री अपालाख्या त्वग्दोषपरिहाराय सूक्तेनानेन इन्द्रं स्तुतवती, अतः सैव ऋषिः । प्रथमा-द्वितीये पङ्क्ती, शिष्टाः पञ्चानुष्टुभः । इन्द्रो देवता । तथा चानुक्रान्तम्—कन्या वाः सप्तात्रेय्यपालेतिहास ऐन्द्र आनुष्टुभं द्विपङ्क्त्यादीति । विनियोगो लैङ्गिकः । अत्रेतिहासमाचक्षते—

पुरा किल अत्रिसुता अपाला ब्रह्मवादिनी केनचित्कारणेन त्वग्दोषदुष्टा, अत एव दुर्भगेति भर्त्रा परित्यक्ता पितुराश्रमे दोषपरिहाराय चिरं देवेन्द्रमधिकृत्य तपस्तेपे । सा कदाचिदिन्द्रस्य सोमः प्रियकरो भवति, अतस्तमिन्द्राय दास्यामीति बुद्ध्या नदीतीरं प्रत्यागमत् । तत्र स्नात्वा पथि सोममप्यलभत । तमादाय गृहं प्रत्यागच्छन्ती सा मार्ग एव तं चखाद । तद्भक्षणकाले दन्तघर्षणजं शब्दं ग्राव्णां सोमाभिषवध्वनिमिति मत्वा क्षिप्रमेव इन्द्रस्तत्र समुपस्थाय तामुवाच—'किमत्र ग्रावाणोऽभिषुण्वति' इति । सा प्रत्यूचे—'अत्रिकन्याऽत्र स्नानार्थमागत्य सोमं दृष्ट्वा तं भक्षयति । तद्भक्षणज एवायं ध्वनिः, न तु ग्राव्णां सोमाभिषवध्वनिरि'ति । तथा प्रयुक्त इन्द्रः पराङावर्तत । गच्छन्तमिन्द्रं सा पुनरब्रवीत्—'किमर्थं निवर्तसे ? त्वं तु सोमपानाय गृहं गृहं प्रतिगच्छसि । तदिदानीमत्रापि मम दंष्ट्राभ्यामभिषुतं सोमं पिब धानादींश्च भक्षये'ति । एवम् इन्द्रमनाद्रियमाणा सा पुनरप्याह—'अत्रागतं त्वामिन्द्रमिति न जानामि । त्वयि गृहम् आगते बहुमानं करिष्यामि' इति । इत्थम् इन्द्रमुक्त्वा अत्र समागतः इन्द्र एव, नान्य इति निश्चित्य सा स्वास्ये निहितं सोममाह—'हे सोम, त्वमागताय इन्द्राय पूर्वं शनैः, ततः शनकैः क्षिप्रं परिस्रवे'ति ।

तत इन्द्रस्तां कामयित्वा तस्या आस्य एव दंष्ट्राभिषुतं सोममपात् । इन्द्रेण सोमे पीते सति त्वग्दोषादहं भर्त्रा परित्यक्ता सती इदानीमिन्द्रेण सङ्गता इति अपालायामुक्तायाम् इन्द्रस्तां व्याजहार—'किं कामयसे ?

तदहं करिष्यामी'ति। सा वरमचीकमत्—'मम पितुः शिरो रोमवर्जितम्। तस्योषरं क्षेत्रं फलादिरहितम्, मम गुह्यस्थानमप्यरोमशम्। एतानि रोम-फलादियुक्तानि कुर्वि'ति। तत इन्द्रस्तत्पितृशिरःस्थितां खलतिमपहाय क्षेत्रं च फलादियुक्तं कृत्वा त्वग्दोषपरिहाराय च स्वकीयरथच्छिद्रे शकटस्य युगस्य च च्छिद्रे एतां त्रिवारं निश्चकर्ष। तस्याः पूर्वाभिहितायाः त्वक् शल्यको द्वितीया गोधा तृतीया कृकलासोऽभूत्। तत इन्द्रस्तामपि अपालां सूर्यसदृशत्वचमकरोदिति।

एतच्च शाट्यायन-ब्राह्मणे स्पष्टमुक्तम्। तद्ब्राह्मणं तद्व्याख्यानसमये दर्शयिष्यते। एषोऽर्थः 'कन्या वारि'त्यादिषु ऋक्षु प्रतिपाद्यते।

कन्या३ वारवायती सोममपि स्रुताविदत्।
अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा॥

(ऋग्वेदसंहिता ८.९१.१)

अर्थः—वा उदकं प्रति अवायती स्नानार्थमभ्यवगच्छन्ती कन्या अपालानामा अत्रिसुता स्रुतौ मार्गे सोममप्यविदत् अलभत। तं सोमम् अस्तं गृहं प्रतिभरन्ती आहरन्ती सा सोममब्रवीत्—हे सोम त्वा त्वामिन्द्राय सुनवै मम दन्तैरेवाभिषुणवै। पुनर्हे सोम त्वा त्वां शक्राय समर्थायेन्द्राय सुनवै इदानीमेवाभिषवं करवै। सोमभक्षणकाले दन्ते दन्तध्वनिं ग्रावध्वनि-मिति मत्वा इन्द्रस्तामगमत्।

एषोऽर्थः शाट्यायनब्राह्मणे स्पष्टमभिहितः—'सा तीर्थमभ्यवयन्ती सोमांशुमविन्दत्, तं समखादत् तस्यैह ग्रावाण इव दन्ता अदुः। स इन्द्रः आद्रवत्। ग्रावाणो वै वदन्तीति। सा तमभिव्याजहार कन्या वारवायती सोममपि स्रुताविददित्यस्यैत इदं ग्रावाण इव दन्ता वदन्तीति विदित्वेन्द्रः पराङावर्तत। तमब्रवीत्—असौ य एषि वीरक इत्यादिनेति॥ १॥

असौ य एषि वीरको गृहंगृहं विचाकशत्।
इमं जम्भसुतं पिब धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्॥

(८.९१.२)

अर्थः—सा शक्रमब्रवीत्। हे इन्द्र वीरको वीरः समर्थस्त्वं योऽसौ त्वं विचाकशत्, काश दीप्तौ, अत्यर्थं दीप्यमानः सन् गृहंगृहं यजमानगृहं प्रति सोमपानाय त्वमेषि गच्छसि। अतस्त्वमत्रापि जम्भसुतं मम दन्तै-रभिसुतमिमं सोमं पिब। कीदृशम्? धानावन्तं धाना भृष्टयवास्तद्वन्तम्। करम्भिणं सक्तुमन्तम्। अनूपवन्तं पुरोडाशादिसहितम्। उक्थिनं स्तोत्रादि-

युक्तम् । एतादृशं सोममत्रैव पिबेति । सा सोमेन सह धानादीनवेदयत् स्तोचक्ककार्षीदित्यर्थः ॥ २ ॥

आ चन त्वा चिकित्सामो ऽधि चन त्वा नेमसि ।
शनैरिव शनकैरिवेन्द्रायेन्दो परि स्रव ॥

( ८.९१.३ )

अर्थः—पुनरपि सा तमनादृत्याह । हे इन्द्र ! चनेति निपातसमुदायोऽवधारणार्थे । त्वा त्वामाचित्सामो ज्ञातुमिच्छाम एव । मम गृहमागच्छ । तं त्वामिन्द्र इति जानीम एव । इह मार्ग एवाऽऽगतं त्वा त्वां नाधीमसि नाधिगच्छामः । अत्रापि च नेत्यवधारणे । इह त्वामिन्द्र इति न जानीमः । इत्यपाला तमिन्द्रमुक्त्वा स्वास्ये स्थितं सोमं प्रत्याह—हे इन्दो क्षरणशील सोम अस्मा आगतायेन्द्राय तदर्थं पूर्वं शनै मन्दं मन्दं ततः शनकैरिव कुत्सितं शनैः क्षिप्रमित्यर्थः । क्षिप्रमेव त्वं परिस्रव मदीयदंष्ट्राभिरभिषूयमाणः सन् परितः क्षरेति । तथा यज्ञेष्वपि ग्रावभिरभिपूयमाणः सोमः प्रथमं शनैः परिस्रवति, ततः शनकैः क्षिप्रमिति तदभिप्रायेणोक्तम् । तत इन्द्र एतद्वाक्यं श्रुत्वा तदानीमेवाभिषुतं सोमं यज्ञस्थानीयाद् अपालामुखादेवाधासीत् ।

उक्तोऽर्थः शाट्यायनकब्राह्मणे स्पष्टमभ्यधायि—अनाद्रियमाणैव तमब्रवीदाचन त्वा चिकित्सामोधि च न त्वा नेमसीति पुरा मां सर्वयर्चा अपाला स्तौतीत्युपपर्यावर्तत शनैरिव शनकैरिव इन्द्रायेन्दो परिस्रवेति ह वा अस्यै मुखात् सोमं निरधयत् सोमपीथ इह वा अस्य भवति य एवं विद्वान् स्त्रीमुपजिघ्रतीति ॥ ३ ॥

कुविच्छकत् कुवित्करत् कुविन्नो वस्यसस्करत् ।
कुवित् पतिद्विषो यतीरिन्द्रेण सङ्गमामहै ॥

( ८.९१.४ )

अर्थः—सोमं पीतवानिन्द्रोऽस्मानेवं करोत्वित्याह । स इन्द्रः कुविद् बहुवारमस्मान् शकत् शक्तान् समर्थान् करोतु । किञ्च कुवित् बहुत्वाऽस्मभ्यं करत् करोतु । किञ्च स एवेन्द्रो नोऽस्मान् कुवित् बहुकृत्वा वस्यसः वसीयसः अतिशयेन वसुमतः करोतु । इदानीमात्रेयी अहमेव करिष्यामीति वदति । पूर्वं कुवित् बहुपतिद्विषः त्वग्दोषात् पतिभिर्भर्तृभिः बहुवारं द्विष्टाः, अत एव यतीः पतिभ्यः सकाशादितो गच्छन्त्यो वयं कैश्चित् अप्यनूह्यमानाः सत्यः सम्प्रतीन्द्रेण सह सङ्गमामहै सङ्गच्छामहै । सर्वत्र पूजार्थे बहुवचनम् । सङ्गमशब्देन इन्द्रोऽपालामचक्रमतेति ॥ ४ ॥

इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय ।
शिरस्ततस्योर्वरामादिदं म उपोदरे ॥

(८.९१.५)

अर्थः—इन्द्रेण किं कामयसे तद्दास्यामीत्युक्ता सा वरमनया प्रार्थयते। हे इन्द्र इमानि त्रीणि विष्टपा विष्टपानि स्थानानि सन्ति तानि त्रीणि स्थानानि विरोहय उत्पादय। कानि तानि ? तस्य मम पितुः रोमवर्जितं शिरः खलतिमित्यर्थः, तच्चापगमय रोमशं कुर्वित्यर्थः। उर्वरां तस्य ऊषरं क्षेत्रं सर्वसस्याढयं कुरु। आत अनन्तरं मे मम उपोदरे उप उदरस्य समीपे यदिदं स्थानं गुह्यमित्यर्थः। तच्च त्वग्दोषे सति असञ्जातरोमकम्, तदपि त्वग्दोषपरिहारेण रोमयुक्तं कुरु। एतानि त्रीणि स्थानानि।

एषोऽर्थः शाट्यायनके प्रपञ्चेनोक्तः—तामब्रवीदपाले किं कामयसीति। साऽब्रवीत्—इमानि त्रीणि विष्टपेति खलतिर्हास्यै पिता। स तं हा खलतिं चकारोर्वरा हास्य न जज्ञे सो जज्ञ उपस्थे हास्यै रोमाणि नासु तान्युह जज्ञिर इत्यस्योत्तराभूयसे निर्वचनायासौ च यान इति ॥ ५ ॥

असौ च या न उर्वरादिमां तन्वं१ मम।
अथो ततस्य यच्छिरः सर्वा ता रोमशा कृधि ॥

(८.९१.६)

अर्थः—उक्तमेवार्थमनया विवृणोति। नोऽस्माकं पितुर्या सा उर्वरा यदिदमूषरं क्षेत्रमस्ति, आदनन्तरं मम इमां तन्वं त्वग्दोषदुष्टं गुह्यस्थानं अथो अथापि च ततस्य तातस्य यच्छिरो रोमवर्जितमस्ति, एतानि सर्वा सर्वाणि तानीमानि त्रीणि स्थानानि रोमशा रोमशानि कृधि कुरु ॥ ६ ॥

खे रथस्य खेऽनसः खे युगस्य शतक्रतो।
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम् ॥

(८.९१.७)

अर्थः—अनया अपालां सूर्यसदृशप्रभामकरोदित्याह। हे शतक्रतो शतसंख्याकयज्ञ बहुविधप्रज्ञ वा हे इन्द्र ! रथस्य स्वकीयस्य खे पृथुतरे छिद्रे रथ-शकट-युगानां छिद्रेषु त्वग्दोषपरिहाराय त्रिः त्रिवारं निष्कर्षेण पूत्वी पूत्वा शोधयित्वा ततः अपालामेतन्नामिकामत्रिसुतां ब्रह्मवादिनीं सूर्यसदृशत्वचं सूर्यसमानत्वचम्, अकृणोः अकरोः, कल्याणतमरूपभाजनमकरोदित्यर्थः।

शाट्यायनब्राह्मणे स्पष्टमभिहितम्—तां खे रथस्याध्यवृहत्सा गोधाऽभवत् तां खेनसोत्य वृहत्सा संश्लिष्टकाऽभवत्। तदेषाऽभ्यनूच्यते—खे रथस्य खेनस इति। तस्यैह यत्कल्याणतमं रूपाणां तद्रूपमासेति। त्वग्दोषापनयनाय

अक्षादिद्वारेष्ववतिकर्षणमिति। यस्त्वग्दोषदूषितः सन् एतत्सूक्तं पठति तस्य त्वग्दोषमपगमय्य सूर्यसदृशकान्तिमिन्द्रः करोतीति सूक्तं प्रशस्यते ॥ ७ ॥

अनेन प्रपञ्चेन तत्रस्थं सर्वं तात्पर्यं स्फुटीभवति।

यदुक्तम्—"कन्याशब्देन अनूढा कुमार्येव अपाला आसीत्, न विवाहिता सती पतिद्विष्टा। तस्मात् सायणानुसारि व्याख्यानमसङ्गतमि"ति। तन्न कुवित् पतिद्विषो यतीरिति विरोधात्, सत्येव पत्यौ तद्द्वेषस्य सङ्गतत्वाच्च त्वग्दोषोऽपि उपस्थे ह्यास्यै रोमाणि वासु इति शाट्यायन-ब्राह्मणेन 'यदिदं उपोदरे' इति मन्त्रेण च तस्या विज्ञायते। तेन त्वग्दोषकारणात् पतिभि बहुवारं द्विष्टा यतीः पतिभ्यः सकाशादागता इत्यपि तज्ज्ञापकम्। ते सायणीयं व्याख्यानमेव युक्तम्।

यदप्युक्तम्—"पूर्वकाले बह्व्यः कुमार्यो देवमेव पतिभावेन भजन्ति स्म। तदेतत् 'इन्द्रेण सङ्गमामहै' इति बहुवचननिर्देशाद् ज्ञायते। ता एव पश्चात् गोप्यः सञ्जाताः" इति। तदपि यत्किञ्चित्; बहुवचनप्रयोगमात्रबलात् तत्कल्पनस्य दुर्बलत्वात्, आत्मनि बहुवचनप्रयोगोपपत्तेश्च। याः सूर्यस्य प्रभेव चन्द्रस्य चन्द्रिकेव गङ्गाजलस्य शैतल्य-माधुर्यपावित्र्याणीव सिन्धो स्तरङ्गाणीव अमृतस्य माधुर्यमिव पूर्णानुरागरससारसिन्धोः माधुर्यसार सर्वस्वमिव कृष्णस्य अभिन्नस्वरूपा नित्याश्च अभ्युपेयन्ते, ताः कदाचिदि न्द्रादिसम्बधिन्य आसन्निति कल्पनाऽप्यलमश्रेयसे।

यदप्युक्तम्—"कुमारीत्वादेव पित्रे वरयाचनं सङ्गच्छते" इति। तदपि न किञ्चित्; परित्यक्तायाः पितृगृहनिवासिन्या अपि पित्रे वरयाच्ञासंभवात् पतिमत्याः पतिगृहे निवसन्त्या अपि सावित्र्याः पितृकृते वरयाच्ञादर्शनाच्च

यदप्युक्तम्—"यदा इन्द्रो देवानां श्रेष्ठ आसीत्तदा कुमार्य इन् कामयन्ते स्म। विष्णोः श्रेष्ठत्वे तं भजन्ति स्म। वैदिकयुगे या इन्द्रा कामिन्य आसंस्ता एव गोप्यो भूत्वा कृष्णप्रियतमाः सम्पन्ना" इ तदपि न; विप्रतिषेधात्। तथा हि—तथात्वे ततोऽपि सुन्दरमुपल तत्प्रेयस्योऽपि प्रसज्येरन्। न चैवं कल्पयितुं शक्यते, कृष्णाभिन्नस्वरूपा तासु तत्कल्पनाया असामञ्जस्यादिति दिक्।

: ५ :

# राधाकृष्णयोर्वेदादिशास्त्र-प्रतिपाद्यत्वम्

कैश्चिदुच्यते—राधायाः प्रथममाविर्भावः साहित्यक्षेत्रे, समभवत्। तदनन्तरं धर्मक्षेत्रे साऽऽनीता। सहजयाने 'सहजियावैष्णव'-सम्प्रदाये च परकीयाभावः प्रतिष्ठित आसीत्। तस्य प्रभावश्चैतन्यमते प्रतिफलितः। अस्मिन्नेवार्थे कैश्चिदुक्तम्—रागेण बध्यते लोको रागेणैव विमुच्यते, इति।

जयति सुखराज एकः कारणरहितः सदोदितो जगताम्।
यस्य च निगदनसमये वचनदरिद्रो बभूव सर्वज्ञः॥

(एकोद्देश-टीका, पृ० ६३)

अनल्पसङ्कल्पतमोऽभिभूतं प्रभञ्जनोन्मत्ततडिच्चलञ्च।
रागादिदुर्वारमलावलिप्तं चित्तं विसंसारमुवाच वज्री॥
प्रभास्वरं कल्पनया विमुक्तं प्रहीणरागादिमलप्रलेपम्।
ग्राह्यं न च ग्राहकमग्रसत्त्वं तदेव निर्वाणपदं जगाद॥

(प्रज्ञोपाय-विनिश्चयसिद्धिः)

द्वयोरेकीकरणं सामरस्यम्। तदेव अद्वयशून्यत्वम्। तत्रैव परमानन्दलाभः। तत्र च सहजं प्रेमैव सर्वोत्कृष्टं सार्वत्रिकं साधनम्। तथापि सत्त्वप्रधानो मनुष्य एव सहजाख्यो भवति। तत्रैव सहजप्रेम-प्राखर्यं व्यज्यते। तेन वस्तुभूतं मनुष्यत्वं व्यज्यते।

मनुष्यत्वस्य तादृक् सत्त्वमेव स्वरूपम्। तदेव कृष्णः। बहिर्मुखं जीवनं बाह्यरूपम्। स्वरूपमाध्यात्मिकम्। रूपं भौतिकम्। योषित्स्वपि स्वरूपं राधा। रूपं बाह्यं जीवनम्। तेन सार्वत्रिकः प्रेमलीलाविकासो राधाकृष्णरसविकास एव। रूपमपहाय स्वरूपेऽवस्थानं मोक्षः। रूपेऽवस्थानं बन्धः।

मेघदूतस्यापि अत्रैव तात्पर्यम्। जीवयक्षस्य अलकानिवासः स्वरूपनिवासः। शापवशात् ततोऽन्यत्र निवासः; ततः प्रत्यागमनम्। स्वरूपनिवासो मोक्षः। राधाकृष्णावत्र प्रकृतिपुरुषरूपौ। महाभावरूपः प्रेमा सहजः तत्र स्वरूपद्वयम्। आस्वाद्यमेकमास्वादित्रपरम्। आस्वाद्येन सामरस्यापत्तिरेव आस्वादितुः पूर्णतमता। स एकाकी न रेमे, स द्वितीयमैच्छत्, तेन तदेव जायापत्यादियुग्मरूपेण विकसति। तेन सहजप्रेमधारायां विकासमुपगतायामन्यत्र नरनार्यादिष्वपि तदेव व्यज्यते।

राधाकृष्णप्रेम्णोरेकं पिण्डितं रूपं सामरस्यमुपगतं सत् पूर्णतम भवति। कृष्णो रसः, राधा रतिः; कृष्णः कामः, राधा मादनः। सौन्दर्यघन कृष्णः वंशीस्वनेन सर्वान् मोहयति। विशोधितो रागोऽपवर्गाय कल्पते।

स हैतावानास, यथा स्त्रीपुमांसौ संपरिष्वक्तौ, स स्वयमेवात्मानं
द्वेधा अपातयत्, ततः पतिश्च पत्नी चाभवताम्।

इति श्रुतेरेकमेव वस्तु द्विधा भूत्वा विलसति।

वस्तुतस्तु—श्रुतिस्मृतिपुराणतन्त्रादिमहातात्पर्यविषयीभूतं सर्वप्राणिप प्रेमास्पदं ब्रह्म आत्मतत्त्वमेव अनिर्वचनीयमायाशक्त्या गौरश्यामज्योति रात्मना वस्तुभूतमेव विलसति। तत्रैवाविरुद्धाः सर्वा अपि कल्पनाः सां ञ्जस्यं भजन्ते।

किञ्च—एवम् "अपरिनिष्ठतत्त्वमेव तासामायाति। विकाशक्रमेण कृष्ण दपि कस्यचिद्देवस्य श्रेष्ठत्वे तं परित्यज्य तास्तत्रानुरक्ता भविष्यन्ति। तन्न युक्तम्;

असुन्दरः सुन्दरशेखरो वा गुणैर्विहीनो गुणिनां वरो वा।
द्वेषी मयि स्यात् करुणाम्बुधिर्वा कृष्णः स एवाद्य गतिर्ममायम्॥

इत्यादि तन्निष्ठाविरोधात्।

यदप्युक्तम्—"अपालासूक्त-वृषाकपिसूक्तयोरध्ययनेन यत्सूत्रं समुपलभ्यते तदेव अनेकशक्त्यनन्तरं राधाकृष्णलीलारूपेण पल्लवितम्। तेन मन्त्रेषु न केवलं राधानामैव उपलभ्यते, किन्तु तल्लीलानामपि सङ्केत उपलभ्यते" इति। तदपि न; अन्यनिष्ठभावेन अन्यभावकल्पनायोगात्। राधाकृष्णादीनां तु स्वातन्त्र्येण श्रुतिस्मृतिपुराणादितात्पर्यविषयत्वेन अपालादिभावानां तत्रा ऽऽरोपयितुमशक्यत्वात्। निघण्टुरीत्या राधाशब्दस्य अन्यपरत्वेऽपि राधा परत्वोपगमस्तु न दोषाय। यत्र त्विन्द्रस्य राधापतित्वं श्रूयते, तत्र इन्द्रो मायाभिः पुरुरूप ईयते इत्यादाविव परमैश्वर्ययोगाद् विष्णुरूप-कृष्ण-परत्वमेव इन्द्रशब्दस्य। परन्तु अपाला-पर्वादिरूपेण गोपीनां राधायाश्च कल्पना प्रमाणशून्यैव।

यदप्युक्तम्—"प्रथमस्तरे पूर्वं कृष्णप्रेयसी सर्वातिशायिनी काचिद् गोपी सर्वाभिधानशून्यैवाऽऽसीत्। द्वितीयस्तरे राधानाम्ना तत्परिचयः। सैव च विक्रमस्य प्रथमशतीमारभ्य त्रयोदशीं चतुर्दशीं यावत् कमनीयाभिः शृङ्गार लीलाभिः सम्बध्यते। ततः परमाह्लादिनी-शक्तिरूपेण स्वीयेन परमोत्कृष्ट रूपेण प्रतिष्ठिता। प्राकृतकाव्यरूपायां गाथा-सप्तशत्यां प्रथमं राधाया

नामोल्लेखो दृश्यते। ततः परं निम्बार्क-वल्लभादिभिः संस्कृतकाव्ये वर्णिताऽपि राधा द्वितीयस्तरीया। जीवगोस्वाम्यादिभिः चैतन्यपार्षदैरेव तस्याः परमोत्कृष्टं रूपमुपवर्णितम्। जयदेवेन वर्णिता राधाऽपि द्वितीयस्तरीयैव" इत्यादि। तदपि न सङ्गतम्; विप्रतिषिद्धत्वादेव। तथात्वे राधा न वस्तुभूता, किन्तु कल्पनाप्रसूतैव स्यात्।

पूर्वोक्तया आधुनिकविकाशपद्धत्या तु विचार्यमाणे कल्पनाप्रसूतमेव राधातत्त्वं साहित्यिकक्षेत्रे धर्मक्षेत्रे च प्रसिद्धिमुपगतं सिद्ध्यति। मार्क्सीयैः—पुरा किल तमिस्रायां शर्वर्यां हिमवर्षादिसमुपद्रुतेष्वरण्येषु भीरुभिः प्रेतपिशाचादयो विविधात्मानः स्वपरिपार्श्ववर्तिनः परिकल्प्यन्ते स्म। भावनोपचितसंस्कारातिशयैश्च अनुभूयन्ते स्म। सैव कल्पना सभ्ययुगे परिष्कृता सती देवादिकल्पनारूपेण निरूढा। सैव च वैज्ञानिकेऽस्मिन् युगे दर्शनविज्ञानादिचमत्कृता सती निर्विकारब्रह्मादिभावमुपगता। तेन वस्तुतत्त्वान्वेषिणामुक्तकल्पनाया निःसारत्ववद् राधातत्त्वस्यापि तथात्वे तदुपासकानां महानपकार एव स्यात्।

किञ्च—गाथासप्तशत्यामपि कथमकस्माद् राधानामोल्लेखः? कथञ्च निर्मूलं कल्पनामात्रप्रसूतमुत्कृष्टमपि रूपं भक्तैरुपास्येत? तेन श्रुतिस्मृतिपुराणानां प्रामाण्याश्रयेणैव राधाकृष्णयोः स्वरूपं निर्णेतव्यम्। तथासत्येव तत्राऽऽस्थासंभवात्। 'गुणोपसंहार'न्यायेन केषुचित् पुराणेषु तन्नामानुल्लेखेऽपि पुराणान्तरोपदिष्टनामयोगात् एकवाक्यतैव सम्पद्यते, मीमांसापद्धत्या तथैव निर्णयात्।

भारतीयानां प्रसिद्धशङ्करप्रभृतीनामाचार्याणां श्रुतिस्मृतीतिहासपुराणतन्त्रादिषु प्रामाण्यबुद्धिरव्याहता। अथर्ववेदमन्त्रेषु बृहदारण्यकादिषु उपनिषत्सु न्यायभाष्यादिषु चेतिहासपुराणानामपि प्रमाणत्वेन वर्णन दर्शनात्। श्रुतिस्मृत्योर्विप्राणां नेत्ररूपत्वं पुराणानाञ्च हृदयरूपत्वं पुराणेषूक्तम्। हृदयस्य सत्त्वे नेत्रयोरभावेऽपि कार्यं चलति। हृदयाभावे ते नेत्रे निरर्थके भवतः इति चोक्तम्—पुराणहीनाद्धृच्छून्यात् काणान्धावपि तौ वरौ इति। बौद्धानां जातकेषु अश्वघोषनिर्मिते बुद्धचरिते च पुराणवर्णितानां व्यक्तिविशेषाणां तच्चरित्राणाञ्च वाहुल्येन वर्णनमुपलभ्यते, पुराणाभावे निर्मूलत्वमेव तेषां भवेत्।

वस्तुतः वेदव्याख्यानभूतानि इतिहासपुराणानि तदनुसारीण्येव,

इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥

—इत्यादिस्मरणात्।

तस्मात् श्रुतिस्मृतीतिहासपुराणतन्त्राणां समन्वयेनैव धर्मब्रह्मस्वरूपं

निर्णीयते। तेन यथा मन्त्रब्राह्मणात्मकस्य वेदस्यानादित्वेन तेषां तेषां व्यक्ति-विशेषाणां देशग्रामादितद्घटनानाञ्च प्रतिपादकत्वेऽपि न तैस्तस्य कालविशेष-निर्धारणं शक्यम्, वैदिकशब्दानां नित्यत्वेन घटनापूर्वकत्वाभावात्।

लौकिकानि पुस्तकानि घटनापूर्वकाणि भवन्ति। वेदस्तु घटनापूर्वको न भवति घटनानामेव वैदिकशब्दपूर्वकत्वात्। तदुक्तमेव—

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्।

इति ब्रह्मसूत्र-तद्भाष्यादौ (१.३.२८)

'स भूरिति व्याहरत् ततो भुवमसृजत्। असृग्रमिति मनुष्यान्.... ।'

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥

(मनु० १.२१)

इति श्रुतिस्मृतिषु शब्दपूर्वकत्वं सृष्टेरुक्तम्। श्लिष्यते चैतत्। यथा कुलालादिस्तैस्तैः शब्दैस्तान् तान् घटादीन् मनसाऽऽलोच्यैव दण्डचक्रा-दिभिस्तान् निर्माति, तथैव ईश्वरोऽपि कैश्चिच्छब्दैः तांस्तानर्थान् विचि-न्त्यैव निर्माति, जानाति, इच्छति, अथ करोतीति नियमात्। ज्ञानञ्च शब्दानुविद्धमेव जायते। न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते इति प्रसिद्धेः। तेन इतिहासपुराणादिषु केषाञ्चिद् व्यक्ति-नगर-नद्यादीनां नामवर्णनादेव पुराणादिनिर्माणकालनिर्धारणं भ्रान्तिमूलकमेव। वेदमूलकत्वेन आर्षज्ञान-मूलकत्वेन वा तद्वर्णनसंभवात्। वाल्मीकीये रामायणे भाविरामचरित्रस्य वर्णनवद् अनादावेव वेद-पुराणादौ तद्वर्णनसंभवस्योक्तत्वात्।

यथा ब्रह्मसूत्र-तद्भाष्यादिषु श्रुतिस्मृत्यादिसमन्वयेनैव ब्रह्मस्वरूपमुप-वर्ण्यते, तथैव मिताक्षरा-व्यवहारमयूख-दायभाग-हेमाद्रि-पराशरमाधव-निर्णयसिन्ध्वादिषु धर्मव्रतादिस्वरूपमपि समन्वयेनैव वर्ण्यते। न ह्येकैकं ग्रन्थमाश्रित्य तद्रूपं वर्णयितुं शक्यते। तथैव राधाकृष्णस्वरूपनिरूपणमप्यु-चितम्, सर्वेश्वरस्यैव अवतारभूतौ तौ इति श्रुत्यादिभिर्निर्णीतत्वात्। अत एव सकलसच्छास्त्रतात्पर्यविषयौ तौ, सर्वे वेदा यत्पदमामनन्ति इति श्रवणात्। अत एव श्रुतिस्मृतिपुराणैस्तन्त्रैश्च राधाकृष्णयोः स्वरूपं विस्तरेणोपवर्णितम्। तदाश्रयेणैव काव्यैर्नाटकैश्च तदुपवर्णितम्, पुराणाद्याश्रयेणैव काव्यं लेख्य-मिति कविसम्प्रदायनियमात्। अत एव 'साहित्यिककल्पनाप्रसूतं राधा-तत्त्वम्, पश्चात् पुराणेषु तदुल्लेखः, तदनन्तरमेव वैदिकैर्मन्त्रैस्तत्सम्बन्ध-स्थापनं' सर्वमेतदपास्तम्।

यदपि प्रक्षिप्तत्वादिसम्बन्धे निगदितम्। तदपि न; यतः पुराणेष्वेव पुराणानां श्लोकसंख्याऽनुक्रमणिकाश्च निरूपिताः। ताभ्यः प्रसङ्गेन च सम्प्रदायपारम्पर्येण च तन्निर्णयः सुशकः। विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् (मीमांसासूत्रम् १.३.३) इति जैमिनिसूत्रप्रामाण्यात्। तेन यथा श्रुतिविरोधे स्मृतेः प्रामाण्यहानं तथैवाऽपरिहरणीये श्रुतिविरोधे पुराणांशानामपि प्रामाण्यहानेन प्रक्षिप्तत्वादिकल्पनासंभवः। न त्वापातरमणीयविरोधाद् द्वेषाद्वा पुराणांशानां प्रक्षेपादिकल्पना युज्यते। प्रमाणानां प्रामाण्यस्वतस्त्वेन कारण-दोष-बाधज्ञानेनैव प्रामाण्यमपोद्यते। तदभावे तु प्रामाण्यस्वतस्त्वमनपोदितं सत्तिष्ठत्येव। ततो यावद् बलवद्बाध-कारणदोषज्ञानं न स्यात् तावत् समेषामध्यायानां प्रामाण्यमप्रक्षिप्तत्वञ्च अभ्युपेयमेव, पूर्वे पूर्वभ्यो तत्र एतदूचुः, इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे इत्यादिश्रुतिभ्यः।

नहि सवषां वस्तूनां सर्वत्र वर्णनं संभवति, तथात्वे एकेनैव गतार्थत्वे अन्येषां वैयर्थ्यापातात्। यथा गुणोपसंहारानुपसंहारादिभिर्मीमांसायां सर्वशाखासमन्वयेन अर्थो निर्धार्यते, तथैव तन्न्यायेनैव पुराणादिसमन्वयोऽपि युक्तः कर्तुम्।

एतेन यदि राधोपनिषद्-राधिकोत्तरतापनीयाद्युपनिषदादयो बृहन्नारदीयादिपुराणानि च जीवगोस्वाम्यादिमहानुभावानां समये भवेयुस्तदा तच्चर्चाऽवश्यं कृता स्यात् तैर्महानुभावैः। न च तैस्तानि चर्चितानि। तेन तेषामसत्त्वमेवेति वाच्यम्, चर्चाया अतन्त्रत्वात्, अन्यथासिद्धत्वाच्च। बह्व्यः शाखा बहवश्च मन्त्राः सन्ति। नहि तेषां सर्वेषां प्रसङ्गे सत्यपि समुद्धरणं सर्वैः क्रियते। तेन तदनुद्धरणं न तदसत्त्वे तन्त्रं भवति। अनुपलम्भेनापि नासत्त्वं सिद्ध्यति। सतामपि पदार्थानामनुपलम्भदर्शनात्।

'मानाधीना मेयसिद्धिरि'ति सिद्धान्तानुरोधेन राधातत्त्वस्य कृष्णस्य चास्तित्वेऽपि सुदृढं प्रमाणमावश्यकमेव। प्रत्यक्षानुमानयोरसत्त्वे प्रमाणमागम एवावशिष्यते। तेन श्रुतिस्मृतिपुराणेतिहासतन्त्रादिभिरेव तत्स्वरूपं निर्णेतव्यम्। क्वचिद्विरोधे मीमांसारीत्या समन्वयो युक्तः। यदि साहित्यिकक्षेत्रे धार्मिकक्षेत्रे च विकाशवादरीत्या कविकल्पनाप्रसूतमेव राधादितत्त्वं विकासमुपगतं तदा परां कोटिमुपगताऽपि कल्पना कल्पनैव, वस्तुशून्यत्वात्। उक्तपूर्वमेव यन् मार्क्सीयैरिदमभिप्रेयते यत् आदिमयुगे तमिस्रायां शर्वर्यां हिमवर्षोपद्रवोपप्लुतेषु तमसाच्छन्नेष्वरण्येषु भीरुभिर्मानवमस्तिष्कैः प्रेत-पिशाचाद्या बहव आत्मानः स्वपार्श्ववर्तिनः परिकल्पितभावनोपचितैः संस्कारैश्चानुभूयन्ते स्म। सैव कल्पना सभ्ययुगे दार्शनिकैः परिष्कृता सती देवादिभावमुपगता। सैव वैज्ञानिकेऽस्मिन् युगे विज्ञानचमत्कृता निर्वि-

कारब्रह्मभावमुपारूढा। तेन वस्तुतत्त्वान्वेषिणां तन्निःसारत्ववद् राधातत्त्वस्यापि तथात्वे तदुपासकानामपकार एव स्यात्।

तस्मात् प्राकृतसाहित्यात् संस्कृतसाहित्ये ततश्च धार्मिकक्षेत्रे तदवतीर्णमित्यादिकल्पनमसमञ्जसमेव। किन्तु वेदोपनिषदादिभिर्विविधतर्कमीमांसाद्युपबृंहितैः प्रमितमेव परमेश्वरतत्त्वं राधाकृष्णादिरूपेण अवतरतीत्यपि तत्प्रमितमेव। तदेव काव्यैर्नाटकैश्चापि कान्तासंमितैरपि वाक्यैरुपवर्ण्यते। न तु निर्मूलम्। दार्शनिकैरागमिभिश्च वस्तुतत्त्वमेव परिष्कृत्य प्रदर्श्यते नाभूतमपि। श्रीमद्भागवते—

स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः।

इत्यादिना गुह्येषु वेदेषु भगवत्कथा उपवर्णिता, गुह्यवादिभिरेव तत्कथा विज्ञायोद्धाम्यते। तेन मन्त्ररामायण-मन्त्रभागवतादौ ऋगादिमन्त्रानाश्रित्य राधाकृष्णकथा - वर्णनं सुश्लिष्टमेव। वेदोपनिषदादिवर्णितमेव राधातत्त्वं पुराणेषूपबृंहितम्। तदेव अनया राधितो नूनम् इति भागवतेऽपि परोक्षभाषयोक्तम्।

'देवाः परोक्षप्रियाः प्रत्यक्षद्विष' इति वैदिकः सिद्धान्तः। तत एव इदन्द्रं सन्तमिन्द्रमित्याचक्षते परोक्षेण, चतुर्हूतं सन्तं चातुर्होत्रम् इत्यादीनि परःसहस्राणि उदाहरणानि वैदिकानि जाग्रति। 'तेनैव राधितो वशीकृतो हरिरनये'ति व्युत्पत्त्या राधाख्यं श्रौतमेव तत्त्वं प्रकाशितम्। समानप्रकरणागतैः वाक्यैः विष्णुपुराणादिषु प्रत्यक्षेणानुक्ताऽपि काचिद्विशिष्टा गोपी राधैव। 'एका मुख्या काचित्' इत्यादिनामभिरपि सैव निर्दिश्यते प्राधान्याद्यभिप्रायेण। श्रीधरस्वाम्यनुक्तिरपि न तद्बाधिका। श्रुत्यादिप्रसिद्धत्वादेव तदनुक्तिसंभवात्। तदनुक्तस्यैव तदुच्छिष्टतया सनातनादिभिरुक्तत्वात्। अत एव पीतश्रीगोपिकागीतसुधासारमहात्मनाम्। श्रीधरस्वामिनां किञ्चिदुच्छिष्टमुपचीयते इति तेषां प्रतिज्ञातम्। 'अन्यत्तैः' इति तदुक्तमेव सङ्केत्यते।

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि॥

(ऋ० सं० १.१५४.६)

अस्य वैदिकमन्त्रस्य सायणोक्तश्चार्थोऽयम्—हे पत्नी-यजमानौ। वां युष्मदर्थम्। ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखानि वासयोग्यानि स्थानानि। गमध्यै युवयोः गमनाय। उश्मसि कामयामहे। तदर्थं विष्णुं प्रार्थयाम इत्यर्थः। तानीत्युक्तम्, कानीत्याह—यत्र येषु वास्तुषु। गावः रश्मयः।

भूरिशृङ्गाः अत्यन्तोन्नत्युपेताः, बहुभिराश्रयणीया वा। अयासः अयना गन्तारोऽतिविस्तृताः। यद्वा यासो गन्तारः, अतादृशाः, अत्यन्तप्रकाशयुक्ता इत्यर्थः। अत्राह—अत्र खलु वास्त्वाधारभूते द्युलोके। उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य। स्थानं भूरि अतिप्रभूतम्। अवभाति स्वमहिम्नास्फुरति इति।

अयं मन्त्रो यास्केन 'गोशब्दो रश्मिवाचक' इति व्याचक्षाणेन व्याख्यातः—"तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गाः। भूरिति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा, शृणातेर्वा, शम्नातेर्वा, शरणायोद्गतमिति वा, शिरसो निर्गतामिति वा यासोऽयनाः। तत्र तदुरुगायस्य विष्णोर्महामतेः परमं पदं परार्ध्यस्थमवभाति भूरि। पादः पद्यतेः।" (नि० २.७)

गोलोकवर्णनपरत्वेनापि विद्वद्भिरयं मन्त्रो व्याख्यायते। वृष्णो वर्षणशीलस्य विष्णोः कृष्णस्योरुगायस्य तत्परमं पदम्, तत्रैव भूरिशृङ्गा गाव अयासः गमनशीलाः सन्ति। तत्रैव शोभनानि वास्तूनि सन्ति। यजमानस्य तत्प्राप्त्यै ऋत्विक्प्रार्थना च युज्यते।

विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः।
अग्निष्टा विश्वा भुवनानि वेद महद् देवानामसुरत्वमेकम्॥

(ऋ० सं० ३.५५.१०)

अत्र सायणः—विष्णुः व्याप्तः। गोपाः सर्वस्य गोपायिता। प्रिया प्रियतमानि। अमृता क्षयरहितानि। धामानि तेजांसि। दधानः सोऽग्निः। परमं पाथः स्थानम्। पाति रक्षति। यद्वा धामानि लोकधारकाणि अमृता उदकानि दधानः सन् परमं पाथः उदकस्य स्थानमन्तरिक्षं पाति। सः अग्निः। ता तानि। विश्वा सर्वाणि। भुवनानि भूतजातानि। वेद जानाति। तदिदं देवानाम् एकं मुख्यं असुरत्वम्। अस्यति क्षिपति सर्वानित्यसुरः प्रबलः, तस्य भावोऽसुरत्वम्, प्राबल्यम् महदैश्वर्यमिति।

यद्यपि प्रसङ्गानुसारेण गोशब्दस्य गोपायितृत्वमर्थः, तथापि गोपरूपेण अवतीर्णत्वाद् गोपालकत्वेनापि तस्य गोपत्वं न विरुध्यते। अत एव महाकविकालिदासेनोक्तम्—गोपवेषस्य विष्णोः।

या ते धामन्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि।
ब्रह्मवनित्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि।
ब्रह्म दृ ँ ह क्षत्रं दृ ँ हायुर्दृ ँ ह प्रजां दृ ँ ह॥

(शुक्लयजुः ६.३)

अत्र महीधरः—'यात इति मिनोतीति' (का० ६.३.८) अवटे यूपं प्रक्षिपेदित्यर्थः। यूपदेवत्या त्रिष्टुप् दीर्घतमो द्रष्टा। हे यूप, या यानि। ते तव धामानि स्थानानि। गमध्यै गन्तुं। वयमुश्मसि उश्मः कामयामहे। यानि तव स्थानानि गन्तुं वयमिच्छाम इत्यर्थः। किञ्च यत्र येषु तव स्थानेषु गावो रश्मयः। अयासः अयन्तीति अयाः गन्तारो वर्तन्ते। सर्वे किरणा येषु स्थानेषु गता इत्यर्थः। किंभूता गावः? भूरिश्रृङ्गा भूरि बहु श्रृङ्गं दीप्तिर्येषां ते भूरिश्रृङ्गाः। प्रज्वलन्नामसु श्रृङ्गाणीति पठितम्। अहेत्येवार्थे। विष्णोर्व्यापकस्य ब्रह्मणः। तत्परमसुत्कृष्टं पदं भूरि महत् आदित्यमण्डल-लक्षणम्। अत्रैव अवभारि अवभाति। तकारस्थाने छान्दसो रेफः। यद्वा भूरि बहुप्रकारं यथा तथा अत्राह अत्रैव एष्वेव स्थानेषु अवभाति शोभते। किंभूतस्य विष्णोः? उरुगायस्य गानं गायः उरुर्गायो गतिर्यस्य, महागते-रित्यर्थः। यद्वा उरुभिर्महात्मभिर्गीयते स्तूयतेऽसावुरुगायस्तस्य। तादृश-स्थानप्राप्तिहेतुभूतकर्मणे। हे यूप, त्वमत्रावटे तिष्ठेत्याशयः।

ब्रह्मवनिं त्वेति पांसुभिः पर्यूहति। ब्रह्म दृ ँ हेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषति।
(का० श्रौ० ६.३.९,१०)

अर्थः—हे औदुम्बरि त्वा त्वां पर्यूहामि परितो मृत्तिकां क्षिपामि। किंभूतां त्वाम्? ब्रह्मवनिं ब्रह्म ब्राह्मणजातिं वनति संभजते इति ब्रह्म-वनिस्तम्।'

उरुगायस्य वृष्णो विष्णोरादित्यमण्डलमपि स्थानम्। तेन तत्र रश्मय एव गावः पुराणमपि विस्तृतं वेदभाष्यम्। तत्र गोलोकस्यापि विष्णुधामत्व-मुक्तम्। तेन तत्र बृहच्छृङ्गा मुख्या एव गावो गृह्यन्ते। आदित्यमण्डलस्यैव। यथा मन्त्रभागवते—अन्यपरत्वेन प्रतीयमाना अपि मन्त्रा यथा कृष्णलीला-परत्वेन योज्यन्ते, तथैव राधा, राधस् आदिशब्दा अपि यद्यपि प्रसङ्गानु-सारेणान्यपराः; तथापि वेदैश्च सर्वैरहमेव वेद्यः इति परमतात्पर्यदृष्ट्या राधाकृष्णपरत्वयोजनं न विरुद्ध्यते। इत्थं श्रुतिषु कृष्णस्वरूपमुपर्युक्तदिशा ज्ञातुं सुशकमिति दिक्।

: ६ :

# वृषाकपिसूक्तेन विष्णुमाहात्म्यातिशयस्य नेन्द्रापेक्षया परवर्तित्वम्

यदपि वृषाकपिसूक्तमाश्रित्य उक्तम्—यत् "पूर्वं पराक्रमप्रधानस्य इन्द्रस्य प्राधान्यमर्चनीयत्वञ्चासीत्। विकासक्रमेण प्रकाशप्रधानदेवस्य आदित्यस्य प्राधान्यं पूज्यत्वञ्च सम्पन्नम्। इन्द्राण्या विरोधे कृतेऽपि इन्द्रेण तत्प्राधान्यमूरीकृतम्। एवं पर्शुर्नाम मानवीसूक्तस्यास्य द्रष्ट्री। सा च यदुकुलस्य स्त्री। यदुकुले सूर्यस्य विष्णोरुपासनं प्रचलितमासीत्। विंशतिसंख्याकस्य सन्ततिसमूहस्य जननात् सा वराहरूपस्य विष्णोरेव वृषाकपित्वेन तस्योपासिका तत्पत्न्यभिमानवती पर्शुस्तत्प्रसादादेव बहुसंख्याकाः सन्ततीरुत्पादितवती। एतदाख्यानेनापि पतिभावनया श्रृङ्गारमयी देवोपासना वेदेन सिद्ध्यती"त्यादि।

तत्सर्वम् अनवबोधविजृम्भितम्; श्रुति-स्मृतीतिहासप्रमाणैः विष्णोः प्राधान्यस्य नित्यसिद्धत्वात्। मोहादेव यदाकदाचित् इन्द्रादयो देवास्तत्परमत्वं विस्मृत्य स्वपरमत्वमवगच्छन्ति। तत्कृपयैव च मोहमपास्य पुनस्तत्पारम्यं विजानन्ति। तदेव च श्रीमद्भागवते विष्णुपुराणे च गोवर्धनोद्धरणलीलायां कल्पवृक्षाहरण-लीलायाञ्च प्रसिद्धमिति।

एवम्, प्रकृतसूक्तमन्त्राणामपि न पर्शुर्द्रष्ट्री। न वात्र 'वृषाकपि'शब्देन सूर्यो विवक्षितः। यद्यपि निरुक्ते आदित्यपरो 'वृषाकपि'शब्दो व्याख्यातः; तथापि तत्र इन्द्रोऽपि आदित्य एवेति परस्तात् स्पष्टं भविष्यति। तथा चात्र सायणभाष्यम्—

"विहि इति त्रयोविंशत्यृचं द्वितीयं सूक्तम्। वृषाकपिर्नाम इन्द्रस्य पुत्रः। स च इन्द्राणी इन्द्रश्चैते त्रयः संहताः संविवादं कृतवन्तः। तत्र विहि सोतोरसृक्षत, किं सुबाहो स्वङ्गुरे, इन्द्राणीमासु नारिषु इति, द्वे उक्ष्णो हि ये, अयमेमि इति चतस्र इत्येता नवर्चं इन्द्रवाक्यानि, अतस्तासामिन्द्र ऋषिः। पराहीन्द्र इति पञ्च, अवीराम् इति द्वे, वृषभो न तिग्मश्रृङ्गः इत्याद्याश्चतस्र इत्येकादशर्चं इन्द्राण्या वाक्यानि। तेन तासाम् इन्द्राणी ऋषिः। उ वे अम्ब, वृषाकपायि रेवति, पर्शुर्ह नाम इति तिस्रो वृषाकपेर्वाक्यानि। अतस्तेषां वृषाकपिः ऋषिः। सर्वं सूक्तमैन्द्रं पञ्चपदापङ्क्तिश्छन्दस्कम्। तथा चानुक्रान्तम्—विहित्र्यधि-

कैन्द्रो वृषाकपिः वृषाकपिरिन्द्राणीन्द्रश्च समूदिरे पाङ्क्तम् इति षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थ शस्त्र एतत्सूक्तम्। सूत्रितञ्च 'वृषाकपिं शंसेद्यथा होता व्या द्या चतुर्थे' (आ० श्रौ० २३) इति।'' इत्थं सायणाचार्यैः सप्रमाणं सूक्तस्यास्य ऋषय उक्ताः।

सायणोक्तदिशा वृषाकपिरिन्द्रस्य पुत्रः। 'पुत्रादिच्छेत् पराभवमि'ति रीत्या इन्द्रेण प्रेरिताः सन्तोऽपि स्तोतार इन्द्रं न स्तुतवन्तः, किन्तु तत्पुत्रं वृषाकपिमेव स्तुतवन्तः तदाऽपि नेन्द्रं मन्युरविशत्। तत्सखिभूतस्य पुत्रस्य वृषाकपेः स्तवेऽपि तन्माहात्म्यमेव प्रवृद्धम्।

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः॥

(ऋ० सं० १०.८६.१)

मन्त्रार्थस्तु—सोतोः सोमाभिषवं कर्तुं यागं प्रति मया विसृष्टा अपि स्तोतारो वृषाकपेर्यष्टारः। हि इति पादपूरणः। इन्द्रं देवं द्योतमानं न अमंसत न स्तुतवन्तः। यत्र येषु पुष्टेषु सोमेन प्रवृद्धेषु यागेषु अर्यः स्वामी वृषाकपिः ममपुत्रः मत्सखा ममसखिभूतः सन् अमदत् सोमपानेन हृष्टोऽभूत्। तथापि इन्द्रोऽहं विश्वस्मात् सर्वस्मात् जगतः उत्तरः उत्कृष्टतरः।

माधवभट्टरीत्या—इन्द्राण्या वाक्यमिदम्। इन्द्राण्यै कल्पितं हविः कश्चिन्मृगोऽदूदुषद् इन्द्रपुत्रस्य वृषाकपेर्विषये वर्तमानः तत्पक्षे सोमाभिषवं कर्तुं विह्यसृक्षत्, उपरतसोमाभिषवा आसन् यजमाना इत्यर्थः। ममपतिमिन्द्रं देवं नामंसत स्तोतारो न स्तुवन्ति। यत्र जनपदेषु पुष्टेषु प्रवृद्धेषु धनेषु अर्यः स्वामी वृषाकपिरमदत्। मत्सखो मत्प्रियश्च इन्द्रो विश्वस्मादुत्तर इति समान एव॥ १॥

'परा हीन्द्र' इत्यादिस्तु इन्द्राण्या वचनम्—

परा हीन्द्र धावसि वृषाकपेरति व्यथिः।
नो अह प्र विन्दस्यन्यत्र सोमपीतये विश्वस्मादिन्द्र उत्तरः॥

(ऋ० सं० १०.८६.२)

अर्थः—हे इन्द्र त्वं अति अत्यन्तं व्यथिः चलितः। वृषाकपेः वृषाकपिं प्रति पराधावसि प्रतिगच्छसि। अन्यत्र सोमपीतये सोमपानाय नो अह नैव च विन्दसि प्रगच्छसीत्यर्थः। सोऽयमिन्द्रः विश्वस्मादुत्तरः। त्वं वृषाकपिं प्रतिगच्छसि, तेनात्यन्तं व्यथितोऽपि सञ्जातः सोमपानमपि न लभ्यते इति॥ २॥

किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।
यस्मा इरस्यसीदु न्व१र्यो वा पुष्टिमद्वसु विश्वस्मादिन्द्र उत्तरः ॥

( ऋ० सं० १०.८६.३ )

अर्थः—हे इन्द्र त्वां प्रति हरितः हरिद्वर्णः मृगः मृगभूतः अयं वृषाकपिः, मृगजातिर्हि वृषाकपिः किं प्रियं चकार अकार्षीत् । यस्मै वृषाकपये पुष्टिमत् पोषयुक्तं वसु धनम् अर्यो वा उदार इव सत्त्वं नु क्षिप्रं इरस्यसि प्रपच्छस्येव । इन्द्राण्या वृषाकपिं प्रतीन्द्रस्य पक्षपातं दृष्ट्वा खिद्यते इति ॥ ३ ॥

यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।
श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः ॥

( ऋ० सं० १०.८६.४ )

अर्थः—हे इन्द्र त्वं प्रियं इष्टं पुत्रं यमिमं अभिरक्षसि । अस्य एनं वृषाकपिं, द्वितीयार्थे षष्ठी । वराहयुः वराहमिच्छन् श्वानुक्षिप्रं जम्भिषत् भक्षयतु । अपि च कर्णे गृह्णात्विति शेष इति ॥ ४ ॥

प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत् ।
शिरो न्वस्य राविषं न सुगं दुष्कृते भुवं विश्वस्मादिन्द्र उत्तरः ॥

( ऋ० सं० १०.८६.५ )

अर्थः—मे मह्यं तष्टानि यजमानैः कल्पितानि प्रिया प्रियाणि व्यक्ता विशेषेण अक्ता अक्तान्याज्यैः हवींषि वृषाकपेर्विषये वर्तमानः कश्चित्कपिः व्यदूदुषत् दूषयामास । ततोऽहं तत्स्वामिनोऽस्य वृषाकपेः शिरो नु क्षिप्रं राविषम् लुनीयाम् । दुष्कृते दुष्टस्य कर्मणः कर्त्रे वृषाकपये सुगं सुखं न भूवम् अहं न भवेयम् । अस्यै सुखदात्री न भवेयमिति ॥ ५ ॥

न मत् स्त्री सुभसत्तरा न सुयाशुतरा भुवत् ।
न मत् प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिन्द्र उत्तरः ॥

( ऋ० सं० १०.८६.६ )

अर्थः—मत् मत्तोऽन्या स्त्री सुभसत्तरा अतिशयेन सुभगा । न भुवत् भवति । किञ्च सुयाशुतरा अतिशयेन सुसुखा सुपुत्रा वा मत्तोऽन्या नास्ति । मत् मत्तोऽन्या प्रतिच्यवीयसी पुमांसं प्रति शरीरस्यात्यन्तं च्यावयित्री रसदात्री नास्ति । न च मत्तोऽन्या काचित् सक्थ्युद्यमीयसी संभोगेऽत्यन्तं सक्थ्युत्क्षेप्त्री नास्ति इति ॥ ६ ॥

उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति ।
भसन्मे अम्ब सक्थि मे शिरो मे वीव हृष्यति विश्वस्मादिन्द्र उत्तरः ।

( ऋ० सं० १०.८६.७ )

अर्थः—एवमिन्द्राण्या शप्तो वृषाकपिर्ब्रवीति। उवे इति सम्बोधार्थो निपातः। हे अम्ब मातः! सुलाभिके शोभनलाभे! त्वया यथैव येन प्रकारेणैव उक्तं तथैव तत् अङ्गं क्षिप्रं भविष्यति भवतु। किमनेन त्वदनुप्रीतिकारिणा ग्रहेण मम प्रयोजनम्। मे मम पितुः त्वदीयो भसत् भग उपयुज्यताम्। किञ्च मम पितुः त्वदीयं सक्थि चोपयुज्यताम्। किञ्च मे मम पितरमिन्द्रं त्वदीयं शिरः शिरश्च प्रियालापेन वीव यथा कोकिलादिः पक्षी तद्वत् हृष्यति हर्षयतु। मम पिता इन्द्रो विश्वस्मादुत्तर इति॥ ७॥

अत्र उवे अम्ब इति सम्बोधनेन वृषाकपिरिन्द्राण्या पुत्र इति गम्यते। भसन् मे सक्थि मे शिरो मे इत्यादिषु मे मम पितुः त्वदीयो भग उपयुज्यतां त्वदीयं सक्थि चोपयुज्यतां त्वदीयं शिरः मे मम पितरं प्रियालापेन हृष्यतु हर्षयतु, इत्यादिकमपेक्षितत्वाद्योज्यते।

यद्यपि जयन्तवन्नायं वृषाकपिः इन्द्रपुत्रत्वेन प्रसिद्धः; तथाप्युक्तैः मन्त्रलिङ्गैस्तत्पुत्रत्वं निश्चीयत एव। यद्यप्यन्यत्र वर्षति कामानिति वृषः, आकम्पयति क्लेशानिति आकपिः, वृषश्चासौ आकपिश्चेति वृषाकपिरिति व्युत्पत्त्या वृषाकपिशब्दः हरिहरयोः प्रसिद्धः, वृषाकपाय्यौ च तत्पत्नीत्वेन प्रसिद्धे। यदि तु इन्द्रावरजो वामन उपेन्द्र एव वृषाकपिस्तदा अनुजत्वेन पुत्रसदृशत्वात् तत्रापि पुत्रत्वव्यपदेशः सङ्गच्छते। परं तस्य त्रैलोक्यप्रदातृत्वेन अत्यन्तोपकारकत्वात् तत्र इन्द्राण्यास्तादृक् क्रोधो न संभाव्यते तदधीनत्वात् तत्स्थितेः। यद्यपि स्वौरसे पुत्रेऽपि तादृक् क्रोधोऽनुचित एव, तथापि सपत्नीपुत्रत्वात् संभवत्येव। इन्द्रस्य तु पुत्रानुगुण एव तत्स्नेह इति।

किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिन्द्र उत्तरः॥
(ऋ० सं० १०.८६.८)

अर्थः—क्रुद्धामिन्द्राणीमिन्द्र उपशमयति। हे सुबाहो हे शोभनबाहो स्वङ्गुरे शोभनाङ्गुलिके पृथुष्टो पृथु केशसंघाते। पृथुजाघने विस्तीर्णजघने शूरपत्नि वीरभार्ये हे इन्द्राणि! त्वं नः अस्मदीयं वृषाकपिं किं किमर्थं अभ्यमीषि अभिक्रुध्यसि। एकः किंशब्दः पूरणः। यस्य पिता अहं विश्वस्मादुत्तरः। अत्रापि नः वृषाकपिमित्यनेन यथा वृषाकपिस्तत्र मे पदेन तत्र मदीयत्वं सूचयति, तथैवेन्द्रोऽपि तत्र मदीयत्वं वक्ति इति॥ ८॥

अवीरामिव मामयं शरारुरभि मन्यते।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः॥
(ऋ० सं० १०.८६.९)

अर्थः—पुनरिन्द्राणी ब्रवीति। शरारुर्घातुको मृगः। अयं वृषाकपिः। मां अवीरामिव अभिमन्यते। उत अपि च इन्द्राणी इन्द्रस्याहं पत्नी वीरिणी पुत्रवती। मरुत्सखा मरुद्भिर्युक्ताऽहमस्मि। यस्या मम पतिः विश्वस्मादुत्तरः। अत्र वीरिणीपदेनापि विज्ञायते यदिन्द्राण्या जयन्ताख्योऽपरः पुत्रोऽस्ति इति॥ ९॥

संहोत्रं स्म पुरा नारी समनं वाव गच्छति।
वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः॥
(ऋ० सं० १०.८६.१०)

अर्थः—नारी स्त्री ऋतस्य सत्यस्य वेधा विधार्यी वीरिणी पुत्रवती इन्द्रपत्नी संहोत्रं समीचीनं यज्ञं खलु समनं संग्रामं वा। समितिः समनम् इति संग्रामनाम सुपाठात् अवप्रति पुरा गच्छति समीचीनं यज्ञं समनं संग्रामं प्रति पुरा गच्छति। महीयते च स्तोतृभिः महीयते स्तूयते। तस्या मम पतिरिन्द्रः विश्वस्मादुत्तर इति॥ १०॥

इन्द्राणीमासु नारिषु सुभगामहमश्रवम्।
नह्यस्या अपरंचन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः॥
(ऋ० सं० १०.८६.११)

अर्थः—इन्द्रस्तां स्तौति। आसु सौभाग्यवत्तया प्रसिद्धासु नारिषु स्त्रीणां मध्ये इन्द्राणीं सुभगां सौभाग्यवतीम् अहमिन्द्रः अश्रवम् अश्रौषम्। किञ्च अस्याः इन्द्राण्याः प्रतिपालकः इन्द्रः। अपरञ्चन अन्यद्भूतजातमिव जरसा वयोहान्या नहि मरते। यद्वा—वृषाकपेर्वाक्यम्। तत्र पक्षे अहमिति पदं वृषाकपिपरमिति॥ ११॥

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः॥
(ऋ० सं० १०.८६.१२)

अर्थः—हे इन्द्राणि! अहमिन्द्रः सख्युः सखिभूतात् वृषाकपेर्ऋते प्रियं वृषाकपिं विना न रारण न रमे। अप्यम् अप्सु भवं अद्भिर्वा संस्कृतम्। प्रियमिदमुपस्थितं हविः। देवेषु देवानां मध्ये। यस्य मम इन्द्रस्य सकाशं गच्छति यश्चाहं विश्वस्मादुत्तरः। यस्येदं देवानां मध्ये मम इन्द्रस्य सकाशम् अप्यं हविरागच्छति। तस्य मम वृषाकपिमृते रमणं न भवति। यद्वा—हे इन्द्राणि वृषाकपेः सख्युः इन्द्राहतेऽहं वृषाकपिर्न रारण इति॥ १२॥

'वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे।
घसत् इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः॥
(ऋ० सं० १०.८६.१३)

अर्थः—हे वृषाकपायि कामानामभिवर्षकत्वाद् अभीष्टदेशगमनाच्च इन्द्रो वृषाकपिः, तस्य पत्नि! यद्वा वृषाकपे मम मातः, रेवति धनवति, सुपुत्रे शोभनपुत्रे, सुस्नुषे, हे इन्द्राणि ते तवायं इन्द्रः उक्षणः सेचनसमर्थान् आदु अनन्तरमेव शीघ्रमेव पशून् घसत् प्राश्नातु। पशून् अज्ञान् कर्मपरायणान् प्राश्नातु। तैरङ्गैः स्वमङ्गिनमुपचारयतु। काचित्करं कस्य सुखस्य अचित् सङ्गः, तत्करं हविः प्रियम् इष्टं कुर्विति शेष इति॥ १३॥

तथा च यास्कः—वृषाकपायि रेवति सुपुत्रे मध्यमे न सुस्नुषे माध्यमिकया वाचा स्नुषा साधुसादिनी वा साधुसानिनी वा प्रियं कुरुष्व सुखाचमकां हविः सर्वस्माद्य इन्द्र उत्तरः। रेवति दयिमति धनवति सुपुत्रे मध्यमेन इन्द्रेण रसहरणसामान्यात् सहस्थानसामान्यात्। सुस्नुषे माध्यमिकया वाचा मिथुनसामान्यात् इति दुर्गाचार्यः।

यास्केन सूर्यपरोऽयं मन्त्रो व्याख्यातः। इन्द्रशब्दोऽपि तत्पर एवात्र। अत्र उष एव वृषाकपायी। सूर्यस्यैव हि रश्मिप्रान्तप्रोत्सार्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते, ता उषस इत्याचक्षते। स एव परमार्थतः सूर्य एव स्त्रीलिङ्गविशिष्टो भवति सूर्यकार्यत्वात् प्रकाशस्य। सैव सूर्यस्य पत्नी सूर्येत्युच्यते। एषैव उषा अभिसृष्टतमा यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति गततमा भवति तथा तथा सैषा उषाः सूर्या सम्पद्यते। सविता सूर्यां प्रायच्छत् सोमाय राज्ञे सोमाय ददाति इति ब्राह्मणम्।

नैरुक्तपक्षे ज्योत्स्नां सोमाय ददाति। आदित्यतोऽस्य दीप्तिर्भवति। सूर्यस्य विभूतित्वात् तत्र पत्नीत्वव्यपदेशः। सूर्यकार्यत्वात् पुत्रीत्वव्यपदेशः। उषसं मध्यस्थानाय प्रजापतये ददाति। पत्नीत्वविवक्षायां वृषाकपिः सूर्यस्तस्य पत्नी वृषाकपायी। सैव उषःकाले अवश्यान् वर्षति कम्पयति च, तेन तद्गुणयोगात् वृषाकपायी प्रोच्यते। तेन सूर्यपक्षे हे वृषाकपायि मध्यमेन रसहरणसामान्यात् इन्द्रेण सुपुत्रे माध्यमिकया वाचा सुस्नुपे। यथा ऐतिहासिकपक्षे सूर्यपत्न्या त्वाष्ट्र्या यमयमीरूपं मिथुनं सूर्यादुत्पाद्य तत्त्यक्तम्, तथैवात्र नैरुक्तपक्षे उषसः सूर्यभावापत्त्या तत्कालसम्बन्धिनोऽश्विनोर्मध्यमस्य मध्यमेन्द्रस्य तत्स्तुतिरूपाया मध्यमायाश्च वाचश्च कालसम्बन्धत्यागः।

अग्निः पृथिवीस्थानः वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः सूर्यो द्युस्थानस्तासाम्। महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति (७.५ नि०) इत्यत्र वायोरिन्द्रस्य चान्तरिक्षस्थानत्वमुक्तम्। अजस्य नाभावध्येकमर्पितम् (ऋ० सं० १०.८२.६), प्रजापतिर्वै त्रीन् महिम्नोऽसृजताग्निं वायुं सूर्यम् (तै० सं० ४.२.१२), पृथिव्यसि जन्मना वशा साग्निगर्भमधत्थाः अन्तरिक्षमसि जन्मना वशा सा वायुं गर्भमधत्थाः द्यौरसि जन्मना

वशा सावित्र्यं गर्भमधत्थाः ( मैत्रायणी सं० २.१३.१५ ) प्रजापतिर्लोकानभ्यपतत्, तेभ्यो रसात् प्रावृहद् अग्निं पृथिव्या वायुमन्तरिक्षात् सूर्यं दिवः ( छा० उ० ४.११.१ ) इत्यादिवचनेभ्यो वायुरूपस्य इन्द्रस्यैव मध्यमान्तरिक्षस्थानत्वेन मध्यमत्वम् । अथातो मध्यस्थानां देवतास्तासां वायुः प्रथमागामी ( १०.१ नि० ) वायवा याहि दर्शते-मे सोमा अरङ्कृताः । तेषां पाहि श्रुधी हवम् ( ऋ० सं० १.२.१ ) इत्यत्र वायोः स्तुतिमुदाहृत्य 'कमन्यमध्यमादेवमचक्ष्यत् मन्त्रदृक्' इत्युक्तं दुर्गाचार्येण । प्रसिद्धं हीन्द्रस्य मध्यमस्य सोमपानम् , तदर्थत्वात् सोमसंस्कारस्य अप्रसाध्य-मन्यस्य । तस्मादिन्द्र एव वायुः । 'तस्येन्द्रस्य वायोरैन्द्रे एव सूक्ते ।' इन्द्रस्य विशेषणत्वेन वायुशब्दः प्रयुक्तः ।

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥
( ऋ० सं० ६.३७.३ )

एतदर्थस्तु—रथ्या अश्वाः । सुचक्रे रथे । योगार्थम् इन्द्रम् अच्छ शवसानम् अभिवलायमानमधिकबलमात्मानं मन्यमानम् । आसस्राणाः आसस्रुवांसः । नित्यमासर्पन्ति । एतान् युक्त्वा रथेऽस्माकं यज्ञं सोमपानाय आयाहि । ऋज्यन्तो ऋजुगामिनो भूत्वा श्रवः अन्नं सोमाख्यमेतस्माद् यज्ञे यत् उ चित् नवं पुराणञ्च । तत्पानाय इन्द्रमभिवहेयुः । नु क्षिप्रं यथा अस्य इन्द्रस्य वायोरिदममृतम् एष सोमभक्षो न विदस्येत नोपक्षीयेत् । अविदामो अनुप-क्षीणे एतस्मिन् सोमभक्षे अभिवहेयुरित्याशास्महे । नू चित् इति नवपुराणाभि-धायकौ निपातौ । यः सोमो गृहीत्वा तत्कालमेव हूयते स नवः, यः प्रातः-सवने गृहीत्वा माध्यन्दिने सवने तृतीये सवने वा हूयते स पुराणः ।

अस्मिन् मन्त्रे ऐन्द्रसूक्तमध्यपातित्वात् इन्द्रप्रधाने मन्त्रे यद्वाय्वभिधानं तत् नैघण्टुकमिति इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रमित्येके । अपरे तु उभय-प्रधाना इयमृक् । तत्पुनरयुक्तम्; निष्केवल्ये विनियोगात् । द्युस्थानासु देवतासु अश्विनोः प्रथमोल्लेखो यथा—'अथातो द्युस्थाना देवतास्तासा-मश्विनौ प्रथमागामिनौ' ( १२.१ नि० ) इति । कुत एतत्प्राथम्यमित्याह— 'आश्विने च स्तुतशस्त्रके कर्मणि प्रथममश्विनोः कालः सन्धौ । यद्यपि द्युस्थानासु देवतासु तयोरुल्लेखः; तथाप्येकोऽश्वी मध्यस्थानः, एको द्युस्थानो नैरुक्तानाम् । तेन द्युस्थानमध्यस्थानत्वात् तयोरश्विनोरुपन्यासः ।

न चैवं तयोर्भिन्नस्थानत्वेनैव उपदेशो युक्तः; एकैकस्य तयोरश्विशब्दस्य पृथग्भावेन स्तुत्यभावाद् अश्विद्वन्द्वस्य चात्यन्तमवियोगात् 'नासत्यावि'ति पृथक् स्तुत्यभावात् । यद्यपि सत्यप्यवियोगे प्राथम्यात् प्रथमस्य समाम्नाने

प्राप्तं तथापि मध्यस्थानस्य ह्रीयमानरूपत्वात् द्युस्थानस्य च वर्धमानरूपत्वात् द्युस्थानत्वेनैव उपदेशः।

अश्नुवाते सर्वं रसेनोदकेनैकः ज्योतिषाऽन्यः तौ कौ अश्ववन्तौ तौ वित्यौर्णवाभः। केचित्तु द्यावापृथिव्यौ। तौ द्योर्ज्योतिषा व्याप्नोति पृथिव्यन्नेन। अहोरात्रौ इत्यपरे। अहर्ज्योतिषा रात्रिरववश्यायैः। सूर्याचन्द्रमसौ इत्यन्ये। सूर्यो ज्योतिषा व्यश्नुते रसेन चन्द्रमाः। राजानौ पुण्यकृतौ इत्यैतिहासिकाः। ऊर्ध्वमर्धरात्रादुषःकालं यावत्तयोः कालः। ततःप्रभृति सन्धिस्तोत्रं पुरोदयादाश्विनम्। उदिते सौर्याणि स्तोत्राणि। यत्तमोऽनुप्रविष्टं ज्योतिषि तद्भागो मध्यमस्य रूपम्। यज्ज्योतिस्तमस्यनुप्रविष्टं तद्भागं तद्रूपमादित्यः। तावेतौ माध्यमोत्तमौ। तत्र—

वसातिषु स्म चरथोऽसितौ पेत्वाविव।
कदेदमश्विना युवमभि देवाँ अगच्छतम्॥

(निरुक्ते १२.२.१)

अर्थः—वसातिषु रात्रिषु युवां चरथः। असितौपेत्वौ मेघाविव समानरूपौ। उषसि कथमपि मन्त्रदृशा लक्षितौ। कदेदमस्मत् कर्म प्रति आगतान् देवान् प्रति युवां अश्विनौ अगच्छतम् आगतवन्तौ स्थः तयोरुभयोरपि ऊर्ध्वमर्धरात्रात्। कालः, तयोः कर्माण्येकम्, तिरोअह्न्याः सोमाः आश्विनश्च द्विकपालः।

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे॥

(ऋ० सं० १.१८१.४)

अर्थः—इह मन्त्रे चोभयोः स्थानभेदादिकं स्पष्टम्। तदर्थस्तु—हे अश्विनौ युवाम् इह मध्यस्थाने इह च द्युस्थाने जातौ समवावशीताम् संस्तूयेथे। केन अरेपसा अपापया तन्वा। स्वैर्नामभिः स्वैः परमनाश्रित्य स्वनिमित्तैः। वाम् युवयोः अन्यः जिष्णुः नित्यमेव जेता। सुमुखस्य सूरिः सुमहतो बलस्य प्रेरयिता शत्रुषु। स च नान्यो मध्यस्थानात् दिवः अन्यः सुभगः पुत्रः। ऊहे उह्यते वायुनान्तिकम्। स च नान्यः सूर्यात्। एको वासात्य उच्यते एकश्च उषसः, पुत्रः उषसः पुत्रेण सूर्येण सह समानख्यानादसंशयम् मध्यमो वासात्यो रात्रेः पुत्रः। स एव मध्यम इन्द्रः। तेन मध्यमेन इन्द्रेण इन्द्राणी सुपुत्रा। तत्स्तुतिरूपया माध्यमिकया वाचा च सुस्नुषा इति।

निरुक्तरीत्या अन्येऽपि मन्त्रा इह सूक्ते आदित्यपरत्वेन व्याख्याताः। तथा हि—

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्व१ स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥
( ऋ० सं० १०.८६.२२ )

अर्थः—अत्रापि हे भगवन् वृषाकपे इन्द्र ! यदा त्वमुदञ्चः उदङ् एव वर्तमानः प्रदक्षिणं भुवनानि परिगच्छन् गृहम् अजगन्तन । गृहानुप्रवेशे हि व्यवधीयते । क्वस्य क सः पुल्वघः पुरु पूर्वस्य घसे रूपम् । बह्वादी मृगः, गत्यर्थस्य माष्टेः । माष्टर्येव हि मृगः अगमत् गतवान् । येनास्माकमदृश्यः स देवो जनयोपनो जनमोहनो बभूव । विश्वस्मात् जगतः यस्त्वमिन्द्र उत्तरः । तमेतं त्वामादित्यमेवं ब्रूमो यदुदञ्चो वृषाकपे इति ।

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥
( ऋ० सं० १०.८६.१ )

अर्थः—इह च आदित्यरश्मीनामतिस्तुतिः । आदित्यो रश्मीन् अहन्यहनि रश्मीन् व्यसृक्षत व्यसृजत । किमर्थं सोतोः सर्वप्राणिप्रसवार्थम् । तत्प्रकाशितं लोकस्य सर्वकर्मसम्पत्तेः । तदा ते रश्मयः सर्वकर्मण्यनुगमनान्नेन्द्रं देवममंसत । तमात्मनो दीपयितारं न मन्यन्ते । स्वमहिम्नैव वयं दीव्यामह इति मन्यन्ते । यदा रश्मिपोषं पुष्यति पुष्टेषु मध्यन्दिने मत्सखा मम सखा सर्वस्मादुत्तर इति ।

एवञ्च यत्र वृषाकपिशब्देन इन्द्रो विवक्षितः, तत्र स एवेन्द्रोऽपि । तेन संघर्षकथा कल्पनामात्रसारा । इन्द्रपुत्रो वृषाकपिः वृषाकपायी च गौण्या वृत्त्या इन्द्रपत्नी इन्द्राण्येवेत्यादिकं तु सायणभाष्ये स्पष्टमेव ।

उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।
उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तरः ॥
( ऋ० सं० १०.८६.१४ )

अर्थः—अथेन्द्रो ब्रवीति । मदर्थं पञ्चदशसंख्याकान् विंशतिम् विंशतिसंख्याकान् उक्ष्णः सेचनसमर्थान् पशूनजान् । साकं सह मम भार्यया । इन्द्राण्या प्रेरिता यष्टारः पचन्ति । उत अपि च अहमद्मि भक्षयामि । जग्ध्वा चाहं पीव इत् स्थूल एव भवामीति शेषः । किञ्च मे मम उभा उभावपि कुक्षी पृणन्ति सोमेन पूरयन्ति यष्टारःसोऽहमिन्द्रः सर्वस्मादुत्तरः ॥ १४ ॥

वृषभो न तिग्मशृङ्गो ऽन्तर्यूथेषु रोरुवत् ।
मन्थस्त इन्द्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिन्द्र उत्तरः ॥
( ऋ० सं० १०.८६.१५ )

अर्थः—अथेन्द्राणी ब्रवीति। तिग्मशृङ्गः तीक्ष्णशृङ्गः वृषभो न यथा वृषभः यूथेषु गोसङ्घेषु अन्तः मध्ये रोरुवत् शब्दं कुर्वन् गा अभिरमयति तथा हे इन्द्र त्वं मामभिरमय। किञ्च हे इन्द्र ते तव हृदे हृदयाय। मन्थः सोमाभिषवशब्दः। शंकरो भवत्विति शेषः। किञ्च ते तुभ्यं यं सोमं भावयुः भावमिच्छन्तीन्द्राणी सुनोति अभिषुणोति सोऽपि शंकरो भवत्वित्यर्थः। मम पतिरिन्द्रः विश्वस्मादुत्तर इति ॥ १५॥

न सेशे यस्य रम्बते ऽन्तरा सक्थ्या३ कपृत्।
सेदीशे यस्य रोमशं निषेदुषो विजृम्भते विश्वस्मादिन्द्र उत्तरः ॥

(ऋ० सं० १०.८६.१६)

अर्थः—हे इन्द्र स जनः। न ईशे स्त्रीजनेन समर्थो भवति। यस्य कपृत् शेपः। सक्थ्या सक्थिनी अन्तरा रम्बते लम्बते। सेत् स इत् स एव। ईशे समर्थो भवति। यस्य निषेदुषः शयानस्य रोमशं विजृम्भते विवृतं भवति ॥ १६॥

न सेशे यस्य रोमशं निषेदुषो विजृम्भते।
सेदीशे यस्य रम्बते ऽन्तरा सक्थ्या३ कपृद् विश्वस्मादिन्द्र उत्तरः ॥

(ऋ० सं० १०.८६.१७)

अर्थः—पूर्वं वाक्यं यियप्सोरिन्द्राण्याः, उत्तरं च वाक्यम् अयियप्सोरिन्द्रस्य। पूर्वोक्तव्यतिरेक एवोत्तरवाक्यस्यार्थः॥ १७॥

अयमिन्द्र वृषाकपिः परस्वन्तं हतं विदत्।
असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिन्द्र उत्तरः ॥

(ऋ० सं० १०.८६.१८)

अर्थः—इन्द्राणीवाक्यमिदम्। हे इन्द्र अयं वृषाकपिः परस्वन्तमात्मनो विषयेऽवर्तमानं हतं हिंसितं विदत् विन्दतु। तथा ह तस्य विशसनाय असिं शस्त्रं सूनाम् उद्धानार्थं पाकार्थम् नवं प्रत्यग्रं चरुं भाण्डं आत् अनन्तरम् एधस्य काष्ठस्य आचितं पूर्णम् अनः शकटं च विन्दतु। मम पतिरिन्द्र विश्वस्मादुत्तर इति॥ १८॥

अयमेमि विचाकशद् विचिन्वन् दासमार्यम्।
पिबामि पाकसुत्वनो ऽभि धीरमचाकशं विश्वस्मादिन्द्र उत्तरः ॥

(ऋ० सं० १०.८६.१९)

अर्थः—अथेन्द्रो ब्रवीति। विचाकशत् पश्यन् यजमानान् दासम् उपक्षयितारमसुरम्, आर्यमपि विचिन्वन् पृथक् कुर्वन् अयमहमिन्द्रः एमि यज्ञं प्रति गच्छामि। यज्ञं गत्वा च पाकसुत्वनः, पचतीति पाकः, सुनोतीति सुत्वा हविषां पक्तुः सोमस्याभिसोतुर्यजमानस्य सम्बन्धिनं सोमं पिबामि

पाकत्त्वादृमीति शेषः। यद्वा पचनं पाकः पाकेन विपक्वेन मनसा सोमस्याऽभिषोतुर्यजमानस्य सोम पिबामि इति ॥ १९ ॥

धन्व च यत् कृन्तत्रं च कति स्वित् ता वि योजना।
नेदीयसो वृषाकपे ऽस्तमेहि गृहाँ उप विश्वस्मादिन्द्र उत्तरः ॥

( ऋ० सं० १०.८६.२० )

अर्थः—धन्व निरुदकोऽरण्यरहितो देशः। कृन्तत्रं कर्तनीयमरण्यम्। यत् यत् धन्व कृन्तत्रं च भवति मृगोद्रासमरण्यम् एवंविधं भवति, न त्वत्यन्तविपिनम्। तस्य शत्रुनिलयस्याऽस्मदीयगृहस्य च मध्ये कतिस्वित्तो तानि योजना योजनानि स्थितानि नात्यन्तदूरे तद्भवतीति। अतः नेदीयसा अतिशयेन समीपस्थाच्छत्रुनिलयात् हे वृषाकपे त्वम् अस्तम् अस्माकं गृहं प्रति वि एहि विशेषेणाऽऽगच्छ। आगत्य च गृहान् यज्ञगृहान् उपगच्छ। यतोऽहं इन्द्रः सर्वस्मादुत्तर इति ॥ २० ॥

पुनरेहि वृषाकपे सुविता कल्पयावहै।
य एष स्वप्ननंशनो ऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥

( ऋ० सं० १०.८६.२१ )

अर्थः—आगत्य च प्रतिगतं वृषाकपिमिन्द्रो ब्रवीति। हे वृषाकपे त्वं पुनरेहि अस्मान् प्रत्यागच्छ। आगते च त्वयि सुविता सुवितानि त्वच्चित्तप्रीतिकराणि कल्याणानि कर्माणि कल्पयावहै। इन्द्राणी अहञ्च पर्यालोच्य कुर्याव। किञ्च—यः स्वप्ननंशनः उदयेन सर्वस्य प्राणिनः स्वप्ननाशकः आदित्यः स एव त्वं यथा मार्गेण अस्तम् आत्मीयमावासं पुनः एषि गच्छसि, यतोऽहं विश्वस्मादुत्तरः। यास्कश्च सुप्रसूतानि वः कर्माणि कल्पयावहै, य एष स्वप्ननंशनः स्वप्नान्नाशयस्यादित्य उदयेन सोऽस्तमेषि यथामुक इति ॥ २१ ॥

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन।
क्व१ स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥

( ऋ० सं० १०.८६.२२ )

अर्थः—गत्वा पुनरागतं वृषाकपिमिन्द्रः पृच्छति। हे इन्द्र परमैश्वर्य हे वृषाकपे यूयम् उदञ्चः उद्गामिनः सन्तो मद्गृहमजगन्तन आगच्छत। एकस्यापि बहुवचनं पूजार्थम्। तत्र भवतः सम्बन्धी पुल्वघः बहूनां भौमरसानामत्ता स मृगः क्व अभूत् जनयोपनो जनानां मोदयिता मृगः कं वा देशं अगन् अगच्छदिति ॥ २२ ॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम् ।
भद्रं भल त्यस्या अभूद् यस्या उदरमामयद् विश्वस्मादिन्द्र उत्तरः ॥
( ऋ० सं० १०.८६.२३ )

अर्थः—अनेन मन्त्रेण वृषाकपिराशास्ते । हे भल इन्द्रेण विसृज्यमान शर ! भलतेर्भेदनकर्मत्वात् । पर्शुर्नाम मृगी, ह इति पूरणः । मानवी मनोर्दुहितेयम् । वैंशतिम् विंशतिसंख्याकान् पुत्रान् साकं सह ससूव अजीजनत् । त्यस्यै तस्यै भद्रं भजनीयं कल्याणमभूत् भवतु । लोडर्थे लुङ् । यस्या उदरमामयत् गर्भस्थैः विंशतिभिः पुत्रैः पुष्टमासीत् । मम पिता इन्द्रः विश्वस्मादिन्द्र उत्तरः ।

हे शर या विंशतिसंख्याकान् पुत्रान् अजीजनत् सा पर्शुर्नाम मृगी तस्या भद्रं भवतु तस्या रक्षणमस्तु इति ॥ २३ ॥

## पुरुषसूक्त-देवीसूक्तयोः परमं तात्पर्यम्

प्रसङ्गादत्र सुप्रसिद्धस्य वैदिकस्य पुरुषसूक्तस्य देवीसूक्तस्य च परमं तात्पर्यं किमिति मृग्यमाणे अत्रैव परब्रह्मणि पूर्णशक्तिसम्पन्ने भगवत्येव तत् प्रतितिष्ठति। अत एव सूक्तयोरेतयोः समीक्षणपूर्वकं सूक्तमन्त्रार्था अत्र व्याक्रियन्ते। तत्र प्रथमं पुरुषसूक्तमेव विचार्यताम्—

अनन्तानन्तब्रह्माण्डान्तर्गतानाम् अनन्तानन्तप्राणिनां यान्येव आशीर्वादादीनि तान्यस्यैवेति सहस्रशीर्षत्वादिकं युज्यते। अत्र पुरुषः परमात्मैव;

पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।

इति श्रुतेः, पूर्वमहमेवासमिति तत्पुरुषस्य पुरुषत्वम् इति श्रौतनिर्वचनाच्च स एवात्र अभिप्रेतः। वेदाहमेतम् इत्युत्तरनारायणसूक्तेऽपि तस्यैव परामर्शः। ह्रीश्च ते लक्ष्मीश्च पत्न्यौ इति लक्ष्मीपतित्वञ्च तस्यैव।

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्।
विश्वं नारायणं ज्ञेयमक्षरं परमं प्रभुम्॥

इति तत्रैव नारायणवृत्तित्वेन सहस्रशीर्षत्वादेः प्रतिपादनात्।

पुंसंज्ञे तु शरीरेऽस्मिन् शयनात् पुरुषो हरिः।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते॥ इति।

पुरि शयनाच्च पुरुषः, पूर्णत्वाच्च पुरुषः। तथा चोक्तम्—

पूर्णत्वात्पुरुषो विष्णुः पुराणत्वाच्च शार्ङ्गिणः।
यद्वा पुरुषशब्दोऽयं रूढ्या वक्ति जनार्दनम्॥ इति।

भूमिं भूम्यादिलोकं ब्रह्माण्डभूमिं मायाभूमिं वा स्पृत्वा कारणत्वेन व्याप्य दशाङ्गुलम् अनन्तपरिमाणम् अत्यतिष्ठत्। अथवा भूमिं नाभेरधोभागं विश्वतो वृत्त्वा दशाङ्गुलं नाभेरूर्ध्वं हृदयदेशमत्यतिष्ठत् हृदयमण्डलेऽवतिष्ठते।

पुरुष एवेदं सर्वमिति अद्वैतिमते बाधसामानाधिकरण्यं केषाञ्चित् शरीरशरीरिभावनिबन्धनम्, अन्येषां कार्यकारणभावनिबन्धनम्। अमृतत्वस्य मोक्षस्य ईशानः स्वामी तत्प्रदाता। अन्तःप्रविष्टः शास्ता जनानाम् इत्यादिश्रुतेः। अन्नेन अदनीयेन यत्संसारिमण्डलं स्वकारणमतीत्य रोहति देवतिर्यङ्मनुष्यादिरूपेण प्रादुर्भवति तत् कियत्? अथवा यत् आत्मजाते अहरहः अशितेन अतिरोहति पूर्वपूर्वबाल्यकौमाराद्यवस्था अतीत्य वर्धते। तदुक्तं मोक्षधर्मे

विष्णुपुराणे ( १ अंशः १२ अ० )—ध्रुवेण पुरुषसूक्तेनैव भगवान् स्तुतः। अत्र विष्णुरेव सहस्राक्षत्व-सहस्रशीर्षत्वादिना स्तूयते। ततः प्रथमे श्लोके—

बृहत्त्वाद् बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम्।
तस्मै नमस्ते सर्वात्मन् योगिचिन्त्याविकारिणे॥

इति वेदान्तवेद्यं ब्रह्मैव प्रक्रान्तम्। एतदेव च—

अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते।
सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्॥

इत्यादिना गीतासु प्रोक्तम्।

पुरुषसूक्तस्य परमात्मपरत्वं लक्ष्मीतन्त्रे प्रोक्तम्—

देवो नारायणो नाम जगतस्तस्थुषस्पतिः।
..................................................
तावावां परमव्योम्नि पितरौ जगतः परौ।
सुखिनः स्युरिमे जीवाः प्राप्नुयुर्नौ कथन्त्विति॥
उपायान्वेषणे यत्तौ परमेण समाधिना।
मथ्नावस्त्वतिगम्भीरं शब्दब्रह्ममहोदधिम्॥
मथ्यमानात् ततस्तस्मात् सामर्थ्यजुषसङ्कुलात्।
तत्सूक्तमिथुनं दिव्यं दध्नो घृतमिवोत्थितम्॥ इति।

सहस्रमिति आनन्त्यस्य उपलक्षणम्। शत-सहस्रमयुतं सर्वमानन्त्य-वाचकम्। बोधकमनन्ताद्याश्रयत्वात्। शीर्षशब्दः सर्वेन्द्रियबोधकः। पराऽस्य शक्तिर्विविधैव श्रूयते। अङ्गप्रत्यङ्गादीनामभावात् तत्कार्यभूतज्ञानक्रिया-शक्त्योः आनन्त्यमेव विवक्षितम्, न तस्य कार्यं करणञ्च विद्यते, अपाणिपादो जवनो ग्रहीता इत्यादिश्रुतेश्च। दशाङ्गुलं दशगुणं महापरिमाणम्। सर्वं जगदतिक्रम्य निरवधिर्भगवान्। स्पर्शोऽत्र कारणस्य कार्यव्याप्तिरूपो न संयोगमात्रम्, येनावृतं खञ्च महीञ्च यच्च किञ्चिज्जगत् इति श्रुतेः। विराट् प्रकृतिः विविधं राजमानत्वात्, अनिरुद्धो वा तदुक्तं मोक्षधर्मे—

ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट्।
अनिरुद्ध इति प्रोक्तो लोकानां प्रभवोऽथ यः॥ इति।

अथवा—विराडादयो लोकाः अधिपूरुषः अधिकारिपुरुषो ब्रह्मा। अथवा अधिपुरुषः हिरण्यगर्भः। विराट् ब्रह्माण्डं, स्वराट् ब्रह्मा, सम्राट् मनुः, एषामधिष्ठाता अधिपूरुषः। त्वत्तः सर्वेऽप्येते जायन्ते। सर्वमस्मिन् पशुपुरोडाशादिरूपेण हुतम्। श्रीमद्भागवतस्य द्वितीयस्कन्धे षष्ठेऽध्याये—

तेनेदमावृतं विश्वं वितस्तिमवतिष्ठति।
सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्॥

सृती विचक्रमे विष्वङ् साशनानशने उभे ।
यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥
यस्मादण्डं विराड् जज्ञे भूतेन्द्रियगुणात्मकः ।
तद् द्रव्यमत्यगाद् विश्वं गोभिः सूर्य इवातपन् ॥
गतयो मतयः श्रद्धा प्रायश्चित्तं समर्पणम् ।
पुरुषावयवैरेव सम्भाराः सम्भृता मया ॥ (६.२०,२१,२६) इति ।

इत्थञ्च परब्रह्मण्येव सूक्तद्वयस्य तात्पर्यं सिद्ध्यति । अतःपरं प्रत्येकशो मन्त्रार्थोऽवलोक्यताम् । तेनाप्येतदेव स्फुटीभवति । यथा—

सहस्रशीर्षेति षोडशर्चं षष्ठं सूक्तम् । नारायणो नाम ऋषिः । अन्त्या त्रिष्टुप्, शिष्टा अनुष्टुभः । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः पुरुषान्न परं किञ्चित् ( कठ उ० ३.११ ) इत्यादिश्रुतिषु प्रसिद्धः स देवता । तथा चानुक्रान्तम्—'सहस्रशीर्षा षोडश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं तु' इति ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा ऽत्यतिष्ठद् दशाङ्गुलम् ॥
( ऋ० सं० १०.९०.१ )

अर्थः—वेदवेद्यः परमेश्वरः सर्वान्तरात्मत्वात् समष्टिप्राणिदेहैरपि देहवानिति सर्वप्राणिसमष्टिरूपो ब्रह्माण्डात्मको विराड्रूपेण सहस्रशीर्षा । सहस्रशब्दोऽनन्तवचनः । अनन्तैः शिरोभिर्युक्तः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयान्येव । एवमेव सहस्राक्षित्वं सहस्रपादत्वञ्च । स परमात्मरूपः पुरुषः भूमिं ब्रह्माण्डगोलकरूपां प्रकृतिमण्डलरूपां वा भूमिं, वृत्वा परिवेष्ट्य, कारणत्वाद् अज्ञानं तत्कार्यात्मकं प्रपञ्चम् आध्यासिकतादात्म्यसम्बन्धेनैव व्याप्य । शाखान्तरे स्पृत्वेति पाठः, तत्रापि न संयोगमात्रमभिप्रेतम् । दशाङ्गुलं दशाङ्गुलपरिमितं देशं अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशाङ्गुलं दशगुणं महापरिमाणं वा देशं अत्यतिष्ठत् । ब्रह्माण्डमण्डलाद् बहिरपि व्याप्य स्थित इत्यर्थः । सर्वकारणभूतः परमेशः सर्वविकारजातं व्याप्य ततो बहिरपि स्थितः, प्रकृतितद्विकाराणां तदेकदेशस्थितत्वात् । यथा अनन्ताकाशैकक्षुद्रप्रदेशे मेघमण्डलस्थितिस्तथैव भगवतोऽतिस्वल्पप्रदेशे प्रकृति-तद्विकारजातं स्थितम् । 'विकारावर्ति च तथा हि स्थितिमाह' ( ४.४.१९ ) इति सूत्रेण निर्णीतं श्रीबादरायणेनापि । यद्वा सहस्रशीर्षशब्देन शिरःस्थचक्षुरादिकरणग्रामस्यापि ग्रहणम्, यद्वा सहस्राक्षसहस्रपाच्छब्दाभ्यां ज्ञानकर्मेन्द्रियाणां ग्रहणम्, तेन सर्वज्ञानक्रियाशक्तिमत्त्वमभिप्रेतम् । स्वतस्तस्य शीर्षाक्ष्याद्यभावेऽपि तत्तच्छक्तिमत्त्वं बोध्यते ।

'न तस्य कार्यं करणञ्च विद्यते स्वाभाविकी ज्ञानबलक्रिया च । अपाणिपादो जवनो ग्रहीता' इत्यादिश्रुतिभ्यः ॥ १ ॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥

( ऋ० सं० १०.९०.२ )

अर्थः—पुरुष एवेदमिति । यदिदं वर्तमानं तत्सर्वं पुरुष एव । यत भूतमतीतं जगत्, यच्च भव्यं भविष्यत् जगत् तदपि पुरुष एव । यथाऽस्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्य अवयवास्तथैव अतीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः । यथा वा इदानीन्तनं कार्यं कारणाभिन्नं तथैव अतीतानागतान्यपि कार्याणि तथाभूतान्येवेत्यर्थः । उत अपि च अमृतत्वस्य देवत्वस्य मोक्षस्य वा अयम् ईशानः स्वामी । यत् यस्मात्कारणाद् अन्नेन निमित्तभूतेन प्राणिनां भोग्यान्नेन अतिरोहति स्वकीयां कारणावस्थामतिक्रम्य जगदवस्थां प्राप्नोति, तस्मात् प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारात् नेदं तस्य वस्तुत्वम् ।

पुरुषसूक्तप्रकरणे मोक्षधर्मे—'अजाज्जातस्य भूतस्य मनुष्यादेरकारणात् । निर्वाणदायी भवति कृपया पुरुषोत्तमः' इति । अमृतत्वस्य परमपदस्य ईशानः यत्परमपदम् अत्यन्तं नित्यापूर्वमिव प्रादुर्भवति लीलाविभूतिमतिक्रम्य रोहति प्रकाशते ॥ २ ॥

एतावानस्य महिमा ऽतो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥

( ऋ० सं० १०. ९०. ३ )

अर्थः—एतावानस्य महिमेति । अत्र केचित्—भूतानि अचित्संसृष्टा जीवास्तस्य पुरुषस्य पादस्तुरीयांशः । दिवि परमव्योमपदवाच्ये समस्तसमष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषरूपे परमपदे अमृतं जरामरणादिरहितं नित्यवस्तुजातमस्य त्रिपात् पादत्रयम् । भोग्य-भोगोपकरण-भोगस्थानरूपस्य त्रिविधस्य वस्तुनः सत्त्वात् तेषां पादत्रयव्यपदेशः । यद्वा—जगदन्तर्गतवस्त्वभिमानिनाम् अस्त्र-भूषणादिरूपाणां नित्यानां भगवदनुभवमात्रपराणां नित्यानां मुक्तानाञ्च परमपदे सत्त्वात्तेषां त्रिपात्त्वव्यपदेशः । अथवा—पादः भगवदाश्रयाया सृष्ट्यादिशक्तेरेकदेशः । परमपुरुषशक्तिलेशविजृम्भितमिदं जगदित्यर्थः । तथा च पराशरः—'यस्यायुतायुतांशांशे विश्वसृष्टिरियं स्थिता' इति । अत्र त्रिपाद् अधिकांशस्तु अमृतम् अमरणधर्मकं नित्यमुक्तरूपं दिवि परमव्योम्नि भासते इति शेषः, 'जागृवांसः समिन्धते' इति श्रुतेः । अथवा—त्रिशब्दं

बहुपरः, पादशब्दश्च गुणपरः। तथा च अनन्तज्ञानानन्दादिगुणविशिष्ट-मित्यर्थः। अथवा—वासुदेव-सङ्कर्षण-प्रद्युम्ना-ऽनिरुद्धात्मकस्य भगवत-स्तुरीयोऽनिरुद्धांशः सर्वाणि भूतानि, अवशिष्टं च त्रिपाद्रूपं दिवि नाकपृष्ठे, निवसतीति शेष इत्यर्थमाहुः।

एतावानस्य महिमा, सर्वं पूर्वोक्तमस्य पुरुषस्य महिमावैभवम्। यद्यपि तद्वैभवेयत्ता तु नास्त्येव; तथापि अपरिच्छिन्नत्वस्य एतत्परिच्छेदे बाधा-भावात्। अतः अपरिच्छिन्नज्ञानशक्त्यादिमत्त्वसर्वान्तर्यामित्वरूपात् हेतोः पुरुषो ज्यायान्। अथवा—अस्य प्रपञ्चस्य एतावान् महिमा पुरुषश्चातो ज्यायानेव। अथवा सर्वमपि पूर्वोक्तमस्य पुरुषस्य महिमा सामर्थ्यमात्रम्, अतः सर्वस्मादस्मात् पुरुषो ज्यायान्। ज्यायस्त्वमेव प्रपञ्चयति—पादोऽस्य विश्वाभूतानि अस्य पुरुषस्येति भावः।

सम्प्रदायविदस्त्वित्थं वर्णयन्ति—अतीता-ऽनागत-वर्तमानरूपं जगद् यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः, न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु पुरुषः अतः महिम्नोऽपि ज्यायान् अतिशयेनाधिकः। तदेव प्रपञ्च्यते—अस्य पुरुषस्य विश्वाभूतानि कालत्रय-वर्तीनि सर्वाणि भूतानि प्राणिजातानि पादश्चतुर्थांशः। अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपम् अमृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे, व्यवतिष्ठते इति शेषः। यद्यपि च 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० उ० २.१) इत्याम्नातस्य परब्रह्मण इयत्ताभावात् चतुष्पात्त्वमपि निरूपयितुमशक्यम्; तथापि जगदिदं ब्रह्मस्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वो-पन्यासः॥ ३॥

त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि॥

(ऋ० सं० १०.९०.४)

अर्थः—त्रिपादूर्ध्व उदैदिति। त्रिपात् अपरिच्छिन्नज्ञानशक्त्यादिमान् वासुदेव-सङ्कर्षण-प्रद्युम्नरूपः नित्यमुक्तादिभिः परिचर्यमाणः। ऊर्ध्वे प्रकृतिमण्डलादुपरि परमव्योम्नि वैकुण्ठे। उदैत् उदगच्छत्। तस्यैवंभूतस्य जगत्स्रष्टृत्वादिकं न स्वप्रयोजनाय भवति, न वाऽन्यनियमाधीनम्, किन्तु कृपामूलकम्। पादोऽस्य इह लीलाविभूतौ अभवत् अवातरत्। तदुक्तं वैकुण्ठसंहितायाम्—'सर्वव्यापी विष्णुः स्वाच्छरीरात् जगत् त्रातुं सङ्कर्षण-मभावयत्, स प्रद्युम्नं सोऽप्यनिरुद्धमभावयत्। तस्मात् जगत्स्रष्टुं ब्रह्मा-ऽभवत्। एवं चतुर्धा संव्यूह्य स्वात्मानं पुरुषोत्तमः। अण्डेभ्यः परतो नित्यं त्रिपादेन विराजते' इति। अनिरुद्धात्मा स भगवान् सृष्ट्यनुकूलं

सङ्कल्पं करोति। ततः=योगनिद्रावसाने स एव, विष्वक् समन्तात्, व्यक्रामत् स्वसङ्कल्पेन समाक्रान्तवान्। 'बहु स्यां प्रजायेय' इति श्रुतेः। साशनं जङ्गमं देवमनुष्यादिरूपम्, अनशनं स्थावरं वृक्षगुल्मलतादिरू ते, अभि उद्दिश्य, स्थावर-जङ्गमात्मक-कृत्स्नजगद्रूपेण बहुभवनसङ्कल मकरोत्।

त्रिपात्-पुरुषः संसाररहितो ब्रह्मस्वरूपः। ऊर्ध्वं उदैत्। अस्मादज्ञान कार्यात् संसाराद्बहिर्भूतः अत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् अस्य पादश्चतुर्थोंऽशो लेशो वा। इह मायायां पुनरभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। सर्वस्य जगतः परमात्मलेशत्वं भगवताऽप्युक्तम्— 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ० गी० १०.४२)। ततो मायायामागत्य अनन्तरं विष्वङ देव-मनुष्य-तिर्यगादिरूपेण विविधः सन्, व्यक्रामत् व्याप्तवान्। किं कृत्वा? साशनानशने अभिलक्ष्य। साशनं भोजनादिव्यवहारोपेतचेतनम्, अनशनं तद्रहितं गिरिनद्यादिकम्, तदुभयं यथास्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः॥ ४॥

तस्माद्विराळजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥
(ऋ० सं० १०.९०.५)

अर्थः—ततो विराडजायतेति। ततः सङ्कल्पाद्धेतोः, विराट् महदादिरूपेण विविधं राजते इति विराट् प्रकृतिः, अजायत महदाद्यण्डपर्यन्तरूपेण अजायत। अद्वारका सृष्टिरेषा। अथ सद्वारकां सृष्टिं वक्तुं चतुर्मुखसृष्टिरुच्यते— विराजः अण्डपर्यन्तप्रकृतिमण्डलस्य, अधि अनन्तरम्, पूरुषः चतुर्मुखो ऽजायत।

अथवा—ततः परमपुरुषात् विराट् विशेषेण राजते इति विराट् अनिरुद्धः, अजायत परमपुरुषोऽनिरुद्धरूपेण अवतीर्ण इत्यर्थः। तदुक्तं मोक्षधर्मे— 'ईश्वरो हि जगत्स्रष्टा विभुर्नारायणो विराट्। अनिरुद्ध इति प्रोक्तः अंशान् प्रभवाप्यये' इति। विराजः विराट्पुरुषादनिरुद्धात् अधिपुरुषः अधिकारि पुरुषः चतुर्मुखः अजायत। स चतुर्मुखो भगवत्कृपया प्रवृद्धकायोऽभवत् येन अतिमहदपि वस्तुं कर्तुं शक्नुयात्। तद्वृद्धिमेव दर्शयति—पश्चाद्भूमे भूमेः पश्चादित्यर्थः, भूमेरधः। अथो भूमिं पुरः भूमेरूर्ध्वञ्च अत्यरिच्यत भूमिशब्दो ब्रह्माण्डपर्यन्तस्य उपलक्षणम्, ब्रह्माण्डस्य बहिरन्तश्च व्यापको ऽभूत्। अथवा—'विष्वङ् व्यक्रामते'ति पूर्वोक्तांशस्यैवात्र प्रपञ्चः तस्मादादिपुरुषात् विराट् ब्रह्माण्डदेहोऽजायत। विविधानि वस्तूनि राजन्ते ऽत्रेति विराट्। विराजो अधि विराड्देहस्य उपरि तमेव देहमधिकरण

कृत्वा, पुरुषः तद्देहाभिमानी कश्चित् पुमानजायत। सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव स्वकीयया मायया विराड्देहं ब्रह्माण्डाख्यं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। तदुक्तमाथर्वणे नृसिंहोत्तरतापनीये—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव' ( नृ० ता० २.१.९ )। स जातो विराट्पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत्, विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। अथो भूमिसृष्टेरनन्तरं पुरः तेषां जीवानां शरीराणि सप्तधातुभिः पूर्यन्ते इति पुरः ससर्ज ॥ ५ ॥

यत् पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यं ग्रीष्मः इध्मः शरद्धविः ॥

( ऋ० सं० १०.९०.६ )

अर्थः—यत्पुरुषेणेति। स जातश्चतुर्मुखः स्वयं जगत्सृष्टिमजानानो भगवदुपदिष्टमार्गेण भगवन्तमात्मसमर्पणरूपेण मानसयागेन आराध्य तत्प्रसादात् लब्धविज्ञानो जगत्सृष्टिमकरोदिति वक्तुं भगवदाराधनात्मकं यागमाह—यत् यदा, पुरुषेण चतुर्मुखात्मकेन, हविषा देवास्तदिन्द्रियाणि, यज्ञं मानसं ध्यानरूपम् अतन्वत, तदेत्यध्याहारः। अस्य यज्ञस्य वसन्त आज्यम्, वसन्तकालस्य आज्यप्रचुरत्वेन तत्राऽऽज्यकल्पनम्। ग्रीष्म इध्मः, तदानीं पलाशादीनां बाहुल्योपलम्भात्। शरत् हविः, तत्कालस्य सस्यप्रचुरत्वात्। एवं वसन्तादीनां मानसयज्ञे आज्यादित्वेन ध्यानम्। यत् यदा पूर्वोक्तक्रमेणेव शरीरेषु उत्पन्नेषु सत्सु। देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्य अनुत्पन्नत्वेन हविरन्तराऽसम्भवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य पुरुषेण पुरुषाख्येण हविषा, मानसं यज्ञम्, अतन्वत अन्वतिष्ठन्। तदानीं अस्य यज्ञस्य, वसन्तः वसन्तर्तुरेव, आज्यम् आसीत् अभूत्। तमेवाऽऽज्यत्वेन सङ्कल्पितवन्तः। ग्रीष्मः ग्रीष्मर्तुः, इध्म आसीत्। तमेव इध्मत्वेन भावितवन्तः। तथा शरद्धविः पुरोडाशादिहविष्ट्वेन शरदं भावितवन्तः। पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन सङ्कल्पः, अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन सङ्कल्पः ॥ ६ ॥

तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥

( ऋ० सं० १०.९०.७ )

अर्थः—तं यज्ञं बर्हिषीति। तदेत्यध्याहार्यम्, तदा तं ब्रह्माख्यं यज्ञम्, यजन्त्यनेनेति यज्ञः, यजनीय-हवीरूपमित्यर्थः। बर्हिषि प्रकृतौ, निधाये-

त्यध्याहार्यम्। प्रौक्षन् प्रोक्षणसंस्कारमकुर्वन्, द्रव्यत्यागयोग्यतापादकान् प्रोक्षणोपस्तरणाऽवदानाभिघारणादिसंस्कारान् अकुर्वन्नित्यर्थः। अग्रतः= स्थिरतरसृष्टेरग्रतः, जातमुत्पन्नम्। तेन पश्चादिसृष्टेः प्रागेवायं यज्ञः प्रवृत्तः, ततो मानसमेव सर्वमक्रियत। तेन ब्रह्मरूपेण हविषा। देवा इन्द्रियाणि। अयजन्त यागमकुर्वन्। अनिरुद्धाग्नौ ब्रह्मरूपं हविः प्रक्षिप्तवन्तः, आत्मसमर्पणं कृतवन्तः। साध्याः कर्मसाधनानि वागादीनि। ऋषयः ज्ञानसाधनानि चक्षुरादीनि एतस्मिन्नर्थे पुरुषसूक्तव्याख्यानभूतं शाबल्यब्राह्मणञ्चोदाहरन्ति—

'तस्मात्पादनारायणात् मूलप्रकृतिरजायत। सा प्रकृतिः पादनारायणशासनात् महदहङ्कारादीन् सूक्ष्मान् पदार्थानजनयत्। एवं सूक्ष्मायां सृष्टौ कृतायां स पादनारायणः स्थूलसृष्ट्यर्थं चतुर्मुखं पुरुषमभिदध्यौ। तद्ध्यानात् पश्चात् पुरुषश्चतुर्मुखाख्योऽजायत। स जातो भूमेः पश्चात् पुरतश्चातिरिच्यत। सर्वकार्यक्षमो वृद्धकायः सन् पुरुषस्तूष्णीमास। तमनिरुद्धनारायणोऽप्राक्षीत्—ब्रह्मंस्तूष्णीं भवसीति? अज्ञानादिति होवाच। ब्रह्मंस्तवेन्द्रियाणि देवानृत्विजः कृत्वा त्वदीयञ्च कलेवरं हविः कृत्वा मां हविर्भुजं ध्यात्वा मय्यग्नौ निवेदय। मदङ्गस्पर्शमात्रेण जगत्कोशभूतस्त्वत्कायो बृंहिष्यते। तस्मादुद्भूतानि प्राणिजातानि यथापुरं निर्माय स्रष्टा भविष्यसि। य एवं सृष्टियज्ञं जानाति स जन्मनीह मुक्तो भवति' इति।

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धम्। बर्हिषि मानसे यज्ञे। प्रौक्षन् प्रोक्षितवन्तः। कीदृशम्? अग्रतः सर्वसृष्टेः प्राग्जातम्। पुरुषत्वेन उत्पन्नम्, तस्माद्विराडजायत, विराजोऽधिपूरुष इत्युक्तत्वात्। तेन पुरुषरूपेण पशुना, देवाः अयजन्त मानसं यागं सम्पादितवन्तः। के ते देवाः? साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः। तदनुकूलाः ऋषयो मन्त्रद्रष्टारश्च ये सन्ति ते सर्वेऽप्ययजन्त ॥ ७॥

तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशून् ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥

(ऋ० सं० १०.९०.८)

अर्थः—तस्माद्यज्ञात् सर्वहुत इति। तस्मात् आत्मसमर्पणरूपेण यज्ञेनाराधितात् पुरुषात् लब्धसृष्ट्यनुकूलज्ञानशक्त्यादिकश्चतुर्मुखो यथापूर्वं जगत् ससर्ज। सर्वं जुहोतीति सर्वहुत् तस्मात्, सर्वं भगवते हुतवतः स्वीयसर्वभरं भगवते समर्पितवतस्तस्मात्। अथवा—कौस्तुभस्थानीयस्य जीवात्मनोऽत्युत्तमतया तमेवानर्घतमं स्वात्मानं समर्पितवताऽनेन सर्वं समर्पितप्राय-

मिति सर्वहुत्। यद्वा—सर्वशब्दवाच्यो भगवान् तस्मै जुहोतीति सर्वहुत्, भगवदुद्देश्यकात्मसमर्पणरूपयज्ञकृत्। यज्ञात् यजनीयात्। तस्मात् चतुर्मुखात्। पृषदाज्यं दधिमिश्राज्यस्थानीयतत्तद्विचित्ररूपं सृज्यवस्तु-जननहेतु-शुक्लनीलादि। संभृतम्=उत्पन्नम्। यदा त्विदं वाक्यद्वयं न जगत्सृष्टिपरं तदा सर्वहुतः सर्वहोमाधिष्ठानभूतात् पृषदाज्यं सम्भृतम्। यद्वा—सर्वं हूयतेऽस्मिन्निति व्युत्पत्त्या सर्वहुत् नारायण एव। सर्वाय हूयतेऽस्मिन्निति व्युत्पत्त्या तु तादृशयज्ञपरः। तस्मात् तादृशाद्यज्ञात् यज्ञार्थं प्रयोजनस्य हेतुत्वविवक्षया पञ्चमी, अध्ययनाद् वसतीतिवत्। पृषदाज्यं दधिमिश्राज्यं सम्भृतं कल्पितम् वायव्यान् वायुमार्गचरणशीलान् पक्षिरूपान्, पशून् चक्रे। आरण्यान् अरण्ये भवान्, ये ग्राम्या ग्रामे भवाः तान् च चक्रे। तथा च विष्णुपुराणे प्रथमांशे पञ्चमाध्याये—'गौरजः पुरुषो मेषश्चाश्वाश्वतरगर्दभाः। एतान् ग्राम्यान् पशूनाहुरारण्यांश्च निबोध मे॥ श्वापदा द्विखुरा हस्तिवानराः पक्षिपञ्चमाः। औदकाः पशवः षष्ठाः सप्तमाश्च सरीसृपाः' इति।

सर्वहुतः सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत्। तादृशात् तस्मात् पूर्वोक्तात् मानसात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं सम्पादितम्। दधि चाज्यञ्चेत्येवमादि भोग्यजातं सर्वं सम्पादितम्। तथा वायव्यान् वायुदेवताकान् लोकप्रसिद्धान् आरण्यान् पशून् चक्रे उत्पादितवान्। आरण्या हरिणादयः, तथा ये च ग्राम्या गवाश्वादयः, तानपि चक्रे। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते—'वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान् परिददाति' ( तै० ब्रा० ३.२.१.३ ) इति॥ ८॥

तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥

( ऋ० सं० १०.९०.९ )

अर्थः—तस्माद्यज्ञात्सर्वहुत ऋच इति। तस्मात् चतुर्मुखात्, ऋच एकविंशतिशाखाः, सामानि सामवेदाः सहस्रशाखाः, जज्ञिरे तत्सर्गीयप्रथमोच्चारणविषयत्वरूपाम् उत्पत्तिं प्रापुः। तस्मादेव छन्दांसि गायत्र्यादीनि, यजुः नवाधिकशतशाखो यजुर्वेदः, अजायत इतरसापेक्षोच्चारणेषु, प्राथमिकत्वस्य विवक्षितत्वादेव तत्सर्गीयप्रथमोच्चारणविषयतैव उत्पत्तिः।

तत्सर्गीयप्रथमोच्चारणविषयत्वरूपोत्पत्तिरेव सृष्टिः। तेन वेदानां तत्सर्गीयचतुर्मुखकर्तृकप्राथमिकोच्चारणविषयत्वरूपं चतुर्मुखजन्यत्वमपि यद्यपि न सम्भवति, तथापि इतरसापेक्षोच्चारणेषु प्राथमिकत्वस्य विवक्षितत्वान्न दोषः। तस्मात् परमपुरुषाद्वा वेदानां तादृशोत्पत्तिः। तस्यैव चतुर्मुखं प्रत्युपदेष्टृ-

त्वात्। प्रवाहानादित्वञ्च स्वसमानजातीय-शब्दासमानकालीन-प्रागभावाप्रतियोगित्वम्। तादृशध्वंसाप्रतियोगित्वञ्च प्रवाहनित्यत्वम्। स्वसमानजातीयत्वञ्च स्ववृत्त्यानुपूर्वीवत्त्वरूपम्। तत्तदुच्चारणभेदेन आनुपूर्वीभेदे तु स्ववृत्त्यानुपूर्वीसजातीयानुपूर्वीसत्त्वमेव साजात्यम्। सर्वहुतः, तस्मात् पूर्वोक्तात् यज्ञात् ऋचः सामानि जज्ञिरे उत्पन्नाः। तस्मात् छन्दांसि गायत्र्यादीनि जज्ञिरे। तस्मात् यजुः अपि अजायत ॥ ९ ॥

तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥
(ऋ० सं० १०.९०.१०)

अर्थः—तस्मादश्वा अजायन्त इति। वेदाविर्भाववर्णनात् तत्प्रतिपाद्यस्य यज्ञस्यापि सृष्टिरुक्ता भवति। तदर्थं यज्ञोपयोगिपदार्थसृष्टिरप्युच्यते। तस्माद् ब्रह्मणः। अत्र तस्मादित्यस्य जनिधातोश्च पुनः पुनरुपादानं स्थानावान्तरभेदप्रदर्शनार्थम्। तदुक्तं विष्णुपुराणे प्रथमांशे पञ्चमाध्याये—'गायत्रञ्च ऋचश्चैव त्रिवृत्स्तोमं रथन्तरम्। अग्निष्टोमञ्च यज्ञानां निर्ममे प्रथमान्मुखात्। यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशं तथा। बृहत्साम तथोक्थ्यञ्च दक्षिणादसृजन्मुखात्॥ सामानि जगती च्छन्दः स्तोमं सप्तदशं तथा। वैरूपमतिरात्रञ्च पश्चिमादसृजन्मुखात्॥ एकविंशमथर्वाणमाप्तोर्यामाणमेव च। अनुष्टुभञ्च वैराजमुत्तरादसृजन्मुखात्' इति। (५३–५६)। 'अवयो वक्षसश्चक्रे मुखतोऽजान् स सृष्टवान्। सृष्टवानुदराद् गाश्च पार्श्वाभ्याञ्च प्रजापतिः॥ पद्भ्यां चाश्वान् समातङ्गान् रासभान् गवयान् मृगान्। उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्यांश्च जातयः' इति (४८–४९)। तस्मात् पूर्वोक्तात् यज्ञात् अश्वाः अजायन्त उत्पन्नाः। तथा ये। के च अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च, उभयादतः ऊर्ध्वाधोभागयोः दन्तयुक्ताः सन्ति तेऽप्यजायन्त। तथा तस्मात् यज्ञात् गावश्च जज्ञिरे। किञ्च तस्मात् अजावयः च जाताः ॥ १० ॥

यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥
(ऋ० सं० १०.९०.११)

अर्थः—यत्पुरुषमिति। यज्ञानुष्ठायिनां ब्राह्मणादीनामुत्पत्तिरुच्यते। यत् यदा पुरुषं ब्रह्माख्यं व्यदधुः। पशुमित्यध्याहार्यम्। पशुत्वेन अकल्पयन्। तत् तदा। कतिधा कतिप्रकारविशिष्टम्। व्यकल्पयन्, बहुवचनं छान्दसम्। अथवा यत् यदा पुरुषं मनुष्यं व्यदधुः अकल्पयन् असृजतेत्यर्थः। तत् तदा। कस्मात् कस्मात् स्थानात् कीदृशकीदृशप्रकारविशिष्टमकल्पयन्। यद्वा पुरुषं मनुष्यं यत् यदा व्यदधुः, तत् तदा कतिधा व्यकल्पयन्। मनुष्याद्युपादानभूतं

चतुर्मुखशरीरं कतिविभागविशिष्टमकल्पयन्। अस्य मुखं किंरूपमासीत्, कार्यकारणभावमूलकं सामानाधिकरण्यमत्र, मुखादुत्पन्नं किमित्यर्थः। एवं किं बाहू, किमूरू, किं पादौ उच्येते ?

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवाः, यत् यदा, पुरुषं विराड्रूपं व्यदधुः सङ्कल्पेन उत्पादितवन्तः, तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किम् आसीत्। कौ बाहू अभूताम्। कौ ऊरू, कौ च पादा उच्येते। प्रथमं सामान्यरूपः प्रश्नः, पश्चात् मुखं किम् इत्यादिना विशेषविषयाः प्रश्नाः ॥ ११ ॥

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

( ऋ० सं० १०.९०.१२ )

अर्थः—ब्राह्मणोऽस्येति। अथैषां प्रश्नानामुत्तराण्याह। ब्राह्मणः अस्य चतुर्मुखस्य मुखम् आननम् आसीत्। मुखादुत्पन्नो ब्राह्मण इत्यर्थः। ब्राह्मणस्य वक्ष्यमाणसर्वावयवेषु उत्तमात् मुखादुत्पन्नत्वोक्त्या तस्यान्यवर्णापेक्षया स्वत एव उत्तमत्वं सूचितम्। मुखव्यापारभूतवेदाध्ययनादिप्रधानत्वं मुखवीर्यत्वञ्च व्यञ्जितम्। बाहुः राजन्यः क्षत्रियः कृतः। क्षत्रियो बाहोरजायतेत्यर्थः। बाहुजत्वाद् ब्राह्मणापेक्षया न्यूनत्वं बाहुव्यापारभूतयुद्धादिप्रधानत्वं बाहुवीर्यत्वञ्च प्रतीयते। वैश्य इति यत् तदस्य ऊरू। अस्योरुभ्यां वैश्योऽजायतेत्यर्थः। ऊरुजत्वाद् वैश्यस्य क्षत्रियापेक्षया न्यूनत्वमवगतम्। पद्भ्यां पादाभ्यां शूद्रः अजायत। शूद्रस्य पज्जातत्वात् सर्ववर्णापेक्षयापि निकृष्टत्वं लब्धम्। पादकार्यभूतगमनागमनादिव्यापारश्च सूचितो भवति।

इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति—अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखम् आसीत्, मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिमान् पुरुषः सः बाहूकृतः। बाहुत्वेन निष्पादितः, बाहुभ्यामुत्पादितः। तत् तदानीमस्य प्रजापतेः यत् यौ ऊरू तद्रूपो वैश्यः ऊरुभ्यामुत्पन्न इत्यर्थः। तथाऽस्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषः अजायत। इयञ्च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' ( तै० सं० ७.१.१.४ ) इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये ॥ १२ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥

( ऋ० सं० १०.९०.१३ )

अर्थः—चन्द्रमा मनस इति। एवं यज्ञकर्तॄणामुत्पत्तिम् उक्त्वा यज्ञ देवतोत्पत्तिमाह—अस्य चतुर्मुखस्य मनसः चन्द्रमाः शीतांशुः जातः उत्पन्नः चक्षोः चक्षुषः सूर्यः सर्वार्थप्रकाशकरो भानुः अजायत। इन्द्रश्च प श्वर्यवान् देवतासार्वभौमः शचीपतिः, अग्निश्च देवानां मुखस्थान अनलः, अजायतामिति विपरिणतस्यानुषङ्गः। प्राणात् सर्वप्राणनहे चतुर्मुखरूपधरस्य भगवतः प्राणात् वायुः सर्वप्राणनहेतुभूतः अजायत।

यथा दध्याज्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदा ब्राह्मणाद मनुष्याश्च तस्मादुत्पन्नाः, एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्नाः प्रजापतेः मनसः सकाशात् चन्द्रमा जातः। चक्षोः सूर्यो चक्षुषः सूर्योऽ अजायत। अस्य मुखादिन्द्रश्च अग्निश्च देवौ उत्पन्नौ। अस्य प्राणा वायुरजायत ॥ १३ ॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।

पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन् ॥

( ऋ० सं० १०.९०.१४

अर्थः—नाभ्या आसीदन्तरिक्षमिति। एतावता उपास्यदेवतामुक्त्वा उपासीनानां भोगस्थानभूतस्य अन्तरिक्षादिलोकस्य सृष्टिमाह—नाभ्या इति अन्तरिक्षं सूर्याण्डगोलयोः मध्यदेशरूपः अन्तरिक्षलोकः आसीत्। शीर्ष्णः शिरसः द्यौः द्युलोकः समवर्तत। इदमुपरितनानां सर्वेषां लोकानामुप लक्षणम्। पद्भ्यां चरणाभ्यां भूमिः पृथिवीमण्डलम्। इदञ्च सर्वेषामध लोकानामुपलक्षणम्। श्रोत्रात् कर्णात् दिशः आशाः, इदञ्च सप्तद्वीपोपलक्षणम् तथा यथा पूर्वस्मिन् कल्पे आसन् तथा लोकान् अन्तरिक्षादीन् पृथिव्यादीन् चतुर्दशलोकान्। अकल्पयन् अकल्पयत् चकार। बहुवचनं कतिधा व्यकल्प यन्निति प्रश्नानुरूपमत्र विवक्षितम्। यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्यो ऽकल्पयन् तथा अन्तरिक्षादीन् लोकान् प्रजापतेः नाभ्यादिभ्यो देवाः अक यन् उत्पादितवन्तः। एतदेव दर्शयति—नाभ्याः प्रजापतेर्नाभेः। अन्तरि मासीत्, शीर्ष्णः शिरसः द्यौः समवर्तत उत्पन्ना। अस्य पद्भ्यां पादा भूमिः उत्पन्ना। अस्य श्रोत्राद् दिश उत्पन्नाः ॥ १४ ॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।

देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥

( ऋ० सं० १०.९०.

अर्थः—सप्तास्यासन्निति। अस्य यज्ञस्य परिधयः परितो धीयन्त परिधयः। आहवनीयादीनां त्रिषु पार्श्वेषु प्रथममेखलाया उपरि नि मानानि मेखलापरिमितायामानि काष्ठानि परिधय उच्यन्ते। सप्त आ

न त्रय एव। 'उत्तरवेदि परिधयस्त्रयः, आह्वनीयस्य त्रयः, आदित्यः सप्तमः' इति शतपथानुसारेण सप्तसंख्याकाः परिधय आसन्। यद्यप्यत्र वसन्तादीनामाज्यादित्वमिव न परिधित्वेन केषाञ्चिद् ध्यानमुक्तम्; तथापि पूर्वसृष्टेषु सप्तसंख्याकानां पदार्थानामेव परिधित्वेन भावनं युज्यते। तथा च महदहङ्कारौ पञ्चतन्मात्राश्च सप्त पदार्थाः परिधित्वेन ध्याताः। अस्य= यज्ञस्य। त्रिःसप्त त्रिगुणितसप्तसंख्याः, एकविंशतिसंख्याका इत्यर्थः। समिधः =अग्नेर्दीप्तिसाधनीभूतानि काष्ठानि दशेन्द्रियाणि, मनः, पञ्चतन्मात्राः, पञ्च महाभूतानि च मिलित्वा एकविंशतिसंख्याका समिद्रूपेण भाव्यन्ते। देवाः=इन्द्रियरूपाः साध्याश्च, यत्=यदा, यज्ञं देवतोद्देशेन द्रव्यात्यागरूपम्, तन्वानाः, पुरुषं चतुर्मुखाख्यम्, पशुं पशुस्थानीयम्, अवध्नन् हृदयाख्ये यूपे अध्यवसायरूपया रशनया अनन्यगतिं चक्रुः। मूलप्रकृतिरूपे वा यूपे भगवदाज्ञारूपया रशनया न्ययुञ्जन्।

अस्य साङ्कल्पिकयज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधय आसन्। ऐष्टिकस्य आह्वनीयस्य त्रयः परिधय उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः। अत एवाऽऽम्नायते—'न पुरस्तात् परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति' (तै० सं० २.६.६.३) इति। तत् एत आदित्यसहिताः सप्तपरिधयोऽत्र सप्तच्छन्दोरूपाः। तथा समिधः त्रिःसप्त-त्रिगुणीकृतसंप्तसंख्याकाः एकविंशतिः कृताः। 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' (तै० सं० ५.१.१०.३) इति श्रुताः पदार्था एकविंशति-दारुयुक्तेध्मत्वेन भाविताः। यत् यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं तन्वानाः कुर्वाणाः पशुम् अवध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वत्र 'यत्पुरुषेण हविषा' इत्युक्तम्॥ १५॥

> यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
> ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥
>
> (ऋ० सं० १०.९०.१६)

अर्थः—यज्ञेनेति। यजनीयदेवतोद्देश्यकद्रव्यत्यागरूपेण कर्मणा परमपुरुषोद्देश्यक-प्रणवकरणकात्मसमर्पणरूप-मानसयज्ञेन, मुमुक्षूणामात्मसमर्पणस्यैव अवश्यकर्तव्ययज्ञरूपत्वात्। 'अहमेवाहं मां जुहोमि स्वाहा', 'इदमहं मामममृतयोनौ सूर्ये ज्योतिषि जुहोमि', ओमित्यात्मानं युञ्जीत' इत्यादिभिः आत्मसमर्पणस्य यागरूपता च विज्ञायते। यज्ञं यजनीयदेवतारूपं भगवन्तं परमपुरुषम्, 'यज्ञो वै विष्णुः' इति श्रुतेः। अयजन्त भगवन्तमुद्दिश्य आत्मसमर्पणरूपं यज्ञमकुर्वन्नित्यर्थः। तान्येव धर्माणि स धर्म एव। प्रथमानि

प्रधानः। आसन् आसीत्। लिङ्गवचनव्यत्ययश्छान्दसः। तेषां फलमुच्यते-
ते यज्ञानुष्ठातारः, नाकं निरतिशयानन्दैकतानं मोक्ष-परमपदा-ऽक्षर-प
धामादिशब्दितं नाकाख्यं वैकुण्ठलोकम्। कमिति सुखम्, अकं दुःखम्, क
विद्यते यत्र तत् नाकमिति व्युत्पत्त्या दुःखशून्यवाचकस्य नाकशब्दस्य यो
रूढ्या तादृशपरमव्योमबोधकत्वम्। 'नाकोऽम्बरे रवौ स्वर्गे परमव्योम्नि
स्मृतः' इति निघण्टुवचनात्। महिमानः परमसाम्यापत्तिरूपमहिमवन्त
'ब्रह्मणो महिमानमाप्नोति' इति श्रुतेः। अथवा भगवन्महिमभूताः भगव
द्विभूतिभूताः। परब्रह्मोपसम्पत्त्या निवृत्ताविद्यातिरोधानस्य सुविदिताऽऽत्म
याथात्म्यस्य परमात्मात्मक-स्वात्मानुसन्धानेन 'अहं ब्रह्मास्मी'त्येव ह्यनुभव
स्तद्युक्तस्य। अथवा महिमानः भगवन्तमर्चयन्तः। मह पूजायामिति धातो
स्तद्रूपनिष्पत्तेः। अथवा महिमानः पूज्यमानः अर्चिरादिभिरातिवाहिकैः
प्राप्येति अध्याहार्यम्। सचन्ते समवेता भवन्ति। नित्यसूरिपरिषदा सह
एकीभवन्ति। हेति प्रसिद्धौ। 'ब्रह्मविदाप्नोति परम्', 'परं ज्योतिरुपसम्पद्य स्वेन
रूपेणाभिनिष्पद्यते।' कैरेते समवेता भवन्ति ? यत्र ह वैकुण्ठे लोके पू
पुरातनाः। 'यत्रर्षयः प्रथमजा ये पुराणाः' सर्वदा भगवन्नित्यसङ्कल्पे
अस्खलितज्ञानाः। साध्याः प्राप्यभूताः। चेतनस्वरूपस्य तदीयशेषत्वपर्यन्त
त्वेन प्राप्यस्यापि तदीयैकपर्यन्तत्वेन नित्यसूरिपरिषदामपि परमप्राप्यत्वा
ते साध्या इत्युच्यन्ते। यद्वा—साध्याः साध्याख्याः देवाः भगवत्स्तुतिपर
यणाः अनन्त-गरुड-विष्वक्सेनप्रभृतयः नित्याः दीव्यन्ति क्रीडन्ति भगव
इति देवाः सन्ति समिन्धते। तं नाकं ते महिमानः सचन्ते अनन्तादिभि
सह भगवदनुभवं कुर्वन्ति, 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूर
इति श्रुतेः।

पूर्वं प्रपञ्चेन उक्तमर्थं संक्षिप्यात्र दर्शयति—देवाः प्रजापतिप्राणरूप
यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन। यज्ञं यथोक्तयज्ञस्वरूपं प्रजाप
अयजन्त पूजितवन्तः। तस्मात् पूजनात्, तानि प्रसिद्धानि धर्माणि जग
विकाराणां धारकाणि प्रथमानि मुख्यानि आसन्। एतावता सृष्टिप्रतिपा
सूक्तभागार्थः सङ्गृहीतः। अथ उपासनतत्फलानुवादकभागार्थः संगृह्य
यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाध
देवाः सन्ति तिष्ठन्ति तत् नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः, तदुपा
महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ॥ १६ ॥

केषाञ्चित् शाखिनां मते षोडशी ऋगियम्—

वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसस्तु पारे।
सर्वाणि रूपाणि विचित्य धीरोः, नामानि कृत्वाऽभिवदन् यदास्ते ॥

अर्थः—'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्। वशिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः' इत्यादिवत् तादृशतत्त्वस्य स्वीयसाक्षात्कारविषयत्वं वेदपुरुष आह—अहमेतं परमात्मानं महान्तम् अपरिच्छेद्यं पुरुषं वेद वेद्मि। आदित्यवर्णं सूर्यसमानवर्णं 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा', 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इति श्रुतिभ्यः। तमसः मूलप्रकृतेः पारे ऊर्ध्वप्रदेशे त्रिपाद्विभूतौ 'अक्षरं तमसि लीयते, तमः परे देवे एकीभवति।' पाद्मोत्तरखण्डे (१२७ अध्याये)—'असंख्यप्रकृतेः स्थानं निविडध्वान्तमव्ययम्। ऊर्ध्वं तु सीम्नि विरजा निःसीमाधः सनातनी॥' 'प्रधानपरमव्योम्नोरन्तरे विरजा नदी। वेदाङ्ग-स्वेदजनिततोयैः प्रस्राविता शुभा॥ तस्याः पारे परे व्योम्नि त्रिपाद्भूतिः सनातनी' इति। धीरो यत्सर्वाणि रूपाणि विचित्य नामानि कृत्वाऽभिवदन् तमसः पारे आस्ते एतमहं वेद। धिया रममाणो धीरः, धीमतामग्रेसरो भगवान् स्वानभिज्ञानामपि संसारिणां योग्यकरणकलेवरप्रदानेन स्वानुभवयोग्यतां सम्पादयति। अभिवदन् स्वप्राप्तिपर्यन्तामाशिषं वदन् 'देवानां पूरयोध्या', 'तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषाऽऽवृतः' इत्यादिश्रुति-स्मृति-प्रसिद्धेऽतिरमणीये नित्यज्ञानानन्दमये निरतिशयसौगन्ध्यसौकुमार्यादि-विशिष्टानन्तभोगपर्यङ्के श्रीभूनीलाभिः परिचरितचरणयुगलो विराजते तमहं वेद।

धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः।
तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते॥

अर्थः—धाता चतुर्मुखः पुरस्तात् सृष्टिकाले यं परमपुरुषम् उदाजहार अस्तौषीत्। यद्वा—धाता पुरस्तात् पूर्वकाले यमुदाजहार 'तद्धैतद् ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे, मनुः प्रजाभ्यः' इत्युक्तरीत्या उपादिशदित्यर्थः। प्रविद्वान् भगवतो वामदेवादवाप्ततत्त्वज्ञानः प्रतर्दनाय ब्रह्मविद्योपदेष्टा च शक्रः यमुदाजहारेत्यनुषज्यते। प्रदिशश्चतस्रः प्रधानभूताश्चतस्रो दिशस्तदुप-लक्षिता एकत-द्वित-त्रितसनकादयश्च यमुदाहरन्तीति विपरिणतस्यानुषङ्गः। तमेवं विद्वानमृत इह भवति। नान्यः पन्थाः अयनाय विद्यते।

इत्थं विस्तृतेन विवेचनेन स्वप्रकाशे परस्मिन् ब्रह्मण्येव पुरुषसूक्ततात्पर्यं स्फुटीभवति।

## देवी-सूक्तम्

एवं देवीसूक्तस्यापि अत्रैव तात्पर्यमिति प्रदर्श्यते—वेदान्तादिसकल-सच्छास्त्र-परमतात्पर्यबोध्यं परमतत्त्वमेव स्त्री-पुंन्नपुंसकातीतमपि सर्वरूपेण प्रवर्तते।

'त्वं कुमार उत वा कुमारी त्वमु जीर्णो दण्डेन वञ्चसि। जातो भवति विश्वतो मुखः नैव स्त्री न पुमानेष न चैवायं नपुंसकः। यद्यच्छरीरमादत्त तत्तद्भवति पूरुषः इत्यादिश्रुतिभ्यः चिच्छक्तित्रिपुरसुन्दर्यादिरूपेण तदेव स्त्रीत्वेन आ परमात्म-शिव-विष्णु-रामादिरूपेण तदेव पुरुषत्वेन ब्रह्मादिरूपेण नपुंसकत्वे च तदेव व्यपदिश्यते। यथा गर्भस्थो वामदेवः स्वात्मानमेव मनु-सूर्या रूपेण व्यपदिशति। प्रतर्दनाय स्वात्मानमेव उपास्यत्वेन इन्द्र उक्तवान् अहं ब्रह्मास्मि, तत्त्वमसि प्रभृतिमहावाक्यैः प्रत्यक्परमात्मनोः ऐक्यविधाना समष्टिव्यष्टिमये स्थूल-सूक्ष्म-कारणात्मके शरीरत्रये साक्षिरूपेण वर्तमाना स्वप्रकाशा चिदेव त्रिपुरसुन्दरी। सैव विश्वप्रपञ्चोत्पादिनी शक्तिसंवलि जगदुत्पत्त्यादिहेतुभावमुपगता सती सर्वरूपा भवति। शास्त्रदृष्ट्या तदभे पश्यन्ती वागाम्भृणी तन्माहात्म्यावद्योतकं सूक्तं ददर्श। तद्यथा—

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥

(ऋ० सं० १०.१२५.१

अर्थः—अस्य सूक्तस्य वागाम्भृणी ब्रह्मवादिनी द्रष्ट्री, सैव वामदेवव 'अहं ब्रह्मास्मी'त्यादिशास्त्रदृष्टया तेन ब्रह्मात्मना प्रत्यगात्मानं पश्यन्ती वदति—अहमिति। जगत्कारणं ब्रह्म तद्रूपा भवन्ती वदति—अहं रुद्रेभिः एक दशभिः, इत्थंभावितृतीया। तदात्मना चरामि। एवं वसुभिस्तदात्म चरामि। अहमेव आदित्यैरुतोऽपि विश्वदेवैश्चरामि। तथा मित्रावरु मित्रावरुणौ, उभावुभौ अहमेव बिभर्मि, 'सुपां सुलुगि'ति द्वितीयाया आकार उभौ अश्विनावपि अहमेव बिभर्मि। मय्येव सर्वं जगत् शुक्तौ रजतमि अध्यस्तं सद् दृश्यते। निर्विकारमपि ब्रह्म मायाविशिष्टं सत् प्रपञ्चाकार विवृतं सत् प्रपञ्चरूपमिव प्रतीयते॥ १॥

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते॥

(ऋ० सं० १०.१२५.

अर्थः—अहं परब्रह्मरूपिणी सैवाऽहम् आहनसम् = आहन्तव्यमभिष लतारूपं सोमम्। यद्वा—शत्रूणाम् आहन्तारम् आहनसम्। दिवि तं रूपं सोमं बिभर्मि। तथा त्वष्टारं उतापि पूषणं भगञ्च अहमेव बिभर्मि ध यामि। तथा हविष्मते हविष्याय सुप्राव्ये शोभनं हविर्देवानां प्रापयते श नैस्तैः तत्तर्पयित्रे, तर्पणार्थादवतेः ईप्रत्ययान्तस्य रूपम्। सुप्राव्ये शोभनह प्रापयितृत्वं तैस्तर्पयितृत्वञ्च तदर्थः। तथा सुन्वते सोमाभिषवं कु

यजमानाय द्रविणं कर्मफलरूपमहमेव दधामि धारयामि कर्मणामज्ञत्वात् जीवानामल्पज्ञत्वाच्च ब्रह्मण एव फलदातृत्वोपपत्तेः ॥ २ ॥

अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥
(ऋ० सं० १०.१२५.३)

अर्थः—अहं राष्ट्री सर्वस्य जगत ईश्वरी वसूनां धनानां सङ्गमनी उपासकानां धनप्रापयित्री चिकितुषी सर्वज्ञोपजातं स्वात्मतया साक्षात्कृतवती अत एव यज्ञियानां यज्ञार्हाणां पूज्यानां प्रथमा मुख्या एतादृशीं मां भूरिस्थात्रां भूरिभावेन बहुभावेन प्रपञ्चात्मनाऽवतिष्ठमानां भूरि भूरीणि बहूनि भूतजातानि आवेशयन्ती जीवभावेन आत्मानं प्रवेशयन्ती मां पुरुत्रा बहुषु देशेषु व्यदधुः देवा विदधति कुर्वन्ति, उक्तप्रकारेण वैश्वरूपेण अवस्थानात्। यद्यत् कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः ॥ ३ ॥

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥
(ऋ० सं० १०.१२५.४)

अर्थः—यः अन्नमत्ति सः भोक्तृशक्तिरूपया मया एव अन्नमत्ति। यः विपश्यति आलोकयति यश्च प्राणिति निःश्वासोच्छ्वासरूपं व्यापारं करोति, यश्च उक्तं शृणोति सोऽपि तत्तच्छक्तिरूपया मयैव तत्तद्व्यापारं करोति य ईदृशीं ईं कामकलारूपामन्तर्यामिरूपेण स्थितां मां न जानन्ति, ते अमन्तव अमन्यमाना अजानन्तः उपक्षियन्ति उपक्षीणा भवन्ति। यद्वा—भावार्थं क्तु प्रलयान्तस्य अमन्तव इति रूपम्, तेन मद्विषयज्ञानरहिता मामन्तवः ते उपक्षिपन्ति हे श्रुतविश्रुतसखे श्रुधि वक्ष्यमाणं शृणु विश्रोतव्यम्। श्रद्धिवं श्रद्धिः श्रद्धा तया युक्तम्। श्रद्धायत्नेन लभ्यम्। 'श्रदन्तरोपसर्गवद्वृत्तिः' (३.३.१०६ संख्यकपाणिनीयसूत्रस्थेन) इति वार्तिकेन श्रच्छब्दस्योपसर्गवद्वृत्तित्वे 'उपसर्गे घोः किः' (पा० सू० ३.३.९२) इति किप्रत्ययान्तस्य रूपम्, मत्वर्थो भावः ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि ॥ ४ ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥
(ऋ० सं० १०.१२५.५)

अर्थः—अहं स्वयमेव इदं वस्तु ब्रह्मात्मकं वदामि तदेतद् देवेभिः इन्द्रादिभिः देवैरपि मानुषेभिः मनुष्यैश्च जुष्टम् ईदृग्वस्तुस्वरूपाहं यं कामये रक्षितुमहं वाञ्छामि तं तं पुरुषमुग्रं सर्वेभ्योऽधिकं कृणोमि करोमि।

तमेव ब्रह्माणं स्रष्टारं करोमि, तमेव ऋषिमतीन्द्रियार्थदर्शिनं करोमि, तमे
सुमेधां शोभनप्रज्ञञ्च करोमि ॥ ५ ॥

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥

( ऋ० सं० १०.१२५.६)

अर्थः—पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य, षष्ठ्यर्थे चतुर्थी, महादेवस्य धनुः चापं अहम् आतनोमि आततं करोमि । किमर्थम् ? ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरवासिनमसुरं हन्तवे हन्तुं हिंसितुम् । हन्तेः 'तुमर्थे सेसेन्.....' (पा० सू० ३.४.९) इति तवैप्रत्ययः । उ पादपूरणार्थः । अहं जनाय भक्तजनार्थं समदं मधुकैटभ-महिषासुर-शुंभ-निशुंभादिशत्रुभिः संग्रामं कृणोमि । तथा द्यावापृथिवीं दिवञ्च पृथिवीं चान्तर्यामितया आविवेश प्रविष्टवती ॥ ६ ॥

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्व१न्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥

( ऋ० सं० १०.१२५.७ )

अर्थः—'द्यौः पिता' इति श्रुतेः पितरं दिवम् अहं सुवे प्रसुवे जनयामि । कुत्रेति ? तदाह—अस्य परमात्मनः मूर्धन् मूर्धन्युपरि कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारण ब्रह्म समुद्रे । समुद्रः परमात्मा तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्त मध्ये यद् ब्रह्मचैतन्यं तन्मम कारणमित्यर्थः । यत ईदृग्भूता अहमस्मि तत हेतोः विश्वा विश्वानि भूतानि अनुप्रविश्य जातानि अनुप्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि । उत अपि च अमू द्यां विप्रकृष्टदेशेऽवस्थि स्वर्गलोकं तदुपलक्षितं विकारजातं वर्ष्मणा कारणभूतेन मायात्मके स्वकीयेन देहेन उपस्पृशामि । अथवा यस्य भूलोकस्य मूर्धन् मूर्ध्न्युपरि अ पितरमहं सुवे समुद्रे उदकेष्वन्तर्मध्ये मम योनिः कारणभूते आम्भृण्याख ऋषिः अथ समुद्रे अन्तरिक्षे अप्सु अप्मयेषु देवशरीरेषु मम कारणं ब्र चैतन्यं ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि ॥ ७ ॥

अहमेव वात इव प्र वा म्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥

( ऋ० सं० १०.१२५.८

अर्थः—विश्वा सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमा कारणरूपेण उत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव वात प्रवामि प्रवर्ते । अहमेव दिवा दिवः परः सकारान्तोऽयं परः शब्दः, दि

परस्तात् तथा एना अस्याः पृथिव्याः परस्तात् तदुपलक्षितात् सर्वस्मादपि विकारजाताच्च परस्ताद् वर्तमाना। असङ्गोदासीनकूटस्था ब्रह्मरूपाऽहं महिना महिम्ना एतावती संबभूव सर्वजगद्रूपेण संभूतास्मि ॥ ८ ॥

एवञ्च सर्वस्यापि सूक्तजातस्य निरतिशयानन्दरूपे शक्त्यधिष्ठिते परब्रह्मण्येव चरमं तात्पर्यम्। तदेव च जगति कामेश्वरी-कामरूपेण, सीता-रामरूपेण राधा-कृष्णादिरूपेण च नैकरूपैः विलसतीति एष निष्कण्टकः पन्थाः।

: ८ :

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

रसो वै सः इति श्रुत्या रसस्य ब्रह्मरूपता उक्ता। तस्य चावेद्यत्वे सति अपरोक्षतया स्वप्रकाशत्वमेव, सहृदयानां नाट्यदर्शिनां प्रत्यक्षविषयता च। आत्मनस्तु कामाय सर्वं प्रियं भवति इति श्रुत्या निरतिशयपरप्रेमास्पदत्वेन आत्मनः परमानन्दरूपत्वमनुमातुं शक्यम्। तस्यैव च रसात्मकतया तदभिन्नाभिन्नस्य रसस्याप्यनुमेयत्वं वक्तुं सुशकमेव। तत्र फलान्तरेच्छाधीनेच्छाविषयत्वेन सोपाधिकप्रेमास्पदत्वेन पुरुषार्थस्य गौणत्वम्, तदनधीनेच्छाविषयत्वेन तु मुख्यत्वम्। तत्त्वञ्च निरतिशयानन्दस्वरूपात्मन्येव पर्यवस्यति। रसशास्त्रकारैस्तु 'गुडजिह्विका'-न्यायेन प्राकृताधिकारिणां प्राकृतरसपरिचयेन अप्राकृतरसे चेतोऽवताराय प्रथमतः प्राकृतरस एवोपवर्णितः। प्रयोजनपार्थक्यं प्रस्थानपार्थक्यं प्रयोजयति। ये च संसारचक्रचङ्क्रमणशीला अपरिशीलितपरमपुरुषार्थपद्धतयः सुकुमारमतयो विविधवासनावासितहृदयाः काव्यार्थचिन्तनचतुरास्तान् असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इतिरीत्या गुडजिह्विकान्यायेन अप्राकृते रसे प्रवर्तयितुं रसाचार्या प्राकृतरसमास्वादयन्ति। परमरसास्वादलेशोऽपि यावत् नानुभवगोचरीकार्येत, तावत् कथं ते दिव्यरसस्पृहयालवोऽपि क्रियेरन्। दिव्यरसस्तु श्रवणादिभिः साधनैः सर्वानर्थनिदानोन्मूलने चिरसञ्चितकर्मकलापदाहकेन दुष्करप्रायेण ज्ञानेन तत्साध्यभक्तियोगेनैव अनुभवितुं शक्यः। स तु श्रीमद्भागवतादौ निरूपितः।

अप्राकृत एव रसो नाट्यशास्त्ररीत्या 'भाव' इत्याख्यायते। स एव च भक्तिरसः। रसत्वव्यपदेशहेतोस्तादृशानन्दात्मकताया उभयत्र सत्त्वात्।

सात्त्विकमनोवृत्तिरूपं सुखवृत्तिप्रतिविम्बितसुखाभासरूपमेव तु सुखं तैस्तैराचार्यैः हेयत्वेनाभिमतम्। तस्य परमानन्दात्मत्वाभावेन परिणामतापसंस्कारदुःखाद्यावृतत्वात्। तदात्मनः बौद्ध-चार्वाक-जैन-नैयायिक-वैशेषिकसांख्ययोगादिमतरीत्या परमानन्दरसरूपता नोपपादयितुं शक्या। तथा हि—आद्ययोरात्मनो भङ्गुरत्वेन तृतीयस्य कथञ्चिन्नित्यत्वेऽपि अनानन्दरूपत्वेन अन्येषां नित्यत्वेऽपि रसात्मकत्वाभावेन तदनुपपत्तेः। द्वैत-विशिष्टाद्वैत-द्वैताद्वैत-शुद्धाद्वैता-ऽद्वैतपर्यवसायिनामौपनिषदानां तु नित्यत्वमानन्दरूपत्वञ्च आत्मनः सम्प्रतिपन्नमेव। रसस्वरूपो भगवानेव रसः। तस्य चांशभूतो

जीवोऽपि सिन्धोर्बिन्दुरिव तत्स्वभाव एव। प्राकृताप्राकृतभेदेन तस्य रसस्य द्वैविध्यम्। प्राकृतालम्बनतया प्राकृतत्वम्, अप्राकृतभगवदालम्बनतया तु अप्राकृतत्वम्।

तत्र विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः इति भरताचार्यसूत्रम्। विभावयन्ति=आविर्भावयन्ति, उद्‌बोधयन्ति प्रसुप्तं स्थायिनमिति विभावाः—आलम्बनानि, उद्दीपनानि च। तथा च विषयतासम्बन्धेन स्थायिविशिष्टमालम्बनम्, स्वोद्बोधकतासम्बन्धेन स्थायिविशिष्टमुद्दीपनम्। स्थायिकार्यत्वे सत्यालम्बनचेष्टारूपोऽनुभावः। आलम्बनावच्छेदेन आविर्भूष्णुस्तिरोभविष्णुः स्थायिपोषको व्यभिचारी च। तदुक्तं काव्यप्रकाशादिषु—

विभावेन उत्पाद्योत्पादकभावरूपाद्, अनुभावेन गम्यगमकभावरूपाद् व्यभिचारिणा पोष्यपोषकभावरूपात् संयोगात् सम्बन्धाद्रसनिष्पत्तिः= उत्पत्तिः, अभिव्यक्तिः, पुष्टिश्चेति तदर्थः। तथा हि—ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, कटाक्षभुजाक्षेपणादिभिरनुभावैः प्रतीतियोग्यः कृतः, व्यभिचारिभिरुत्कण्ठादिभिः पोषितः, रामादावनुकार्ये रसः। नटे तत्तुल्यरूपतानुसन्धानबलाद् आरोप्यमाणः सामाजिकानां साश्चर्यानुभवश्चमत्कारहेतुरिति भट्टलोल्लटप्रभृतयः।

तदन्ये न सहन्ते। तत्र दण्डादीनां निवृत्तौ घटादीनामिव विभावादिनिवृत्तावपि रसस्यावस्थानप्रसङ्गात्।

किञ्च—तत्र सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधश्च। न च तज्ज्ञानमेव चमत्कारहेतुः; शाब्दतज्ज्ञानेऽपि तदापत्तेः। लौकिकशृङ्गारादिदर्शनेनापि चमत्कारप्रसङ्गात्। उत्पत्तिपक्षे आलम्बनस्य उद्दीपकत्वहानिप्रसङ्गात्। नापि पोषकत्वम्; अभिव्यक्तेर्भट्टलोल्लटादिभिरनङ्गीकारात्। नापि ईषदतिशयाधानहेतुत्वमुद्दीपकत्वम्; जनित इति पदविरोधात्।

किञ्च—साश्चर्यानुभव इति कीदृशोऽनुभवः? सामाजिकानां न मानससाक्षात्कारः; असन्निकर्षात्। नाप्यनुमितिः; गृहीतरामविभेदेन नटे रत्याद्यनुमितौ बाधात्।

श्रीशङ्कुकस्तु—अनुमितिपक्षमङ्गीकृत्य स्थायिनो विभावादिभिरनुमाप्यानुमापकभावरूपसम्बन्धाद् रसस्य निष्पत्तिरनुमितिरित्याह। तत्र रामत्वादिना गृहीते नटात्मके पक्षेऽकृत्रिमत्वेन गृहीतैर्विभावादिभिर्हेतुभी रामादिगतरत्यादिरनुमीयते रसः। तथा हि—नियतविषया धीः सम्यग्धीः। यथा 'राम एवायम्, अयमेव रामः' इत्ययोगान्ययोगव्यवच्छेदविषये। अनन्तरावतीर्णबाधा तु मिथ्याधीः। यथौत्तरकालिके 'न रामोऽयमि'ति बाधे 'रामो-

ऽयमि’ति। विरुद्धोभयकोटिका धीस्तु संशयः, यथा ‘अयं रामो न वा ?’ सादृश्योभयविषया धीः सादृश्यधीः। यथा ‘रामसदृशोऽयमि’ति। ताभ्यो लोकप्रसिद्धाभ्यो विलक्षणया चित्रे ‘तुरगोऽयमि’तिवत् ‘रामोऽयमि’ति बुद्‌ध्या प्रथमं पक्षभूतो नटो विषयीक्रियते। ततस्तत्र अविद्यमानमपि विभावादित्रयं लिङ्गमवगम्यते। पूर्वमेव रोमाञ्चाद्याविर्भावने गुरुशिक्षा-मासाद्य कृतातिशयिताभ्यासेन नटेन—

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥
दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च।
अविरलविलोलजलदः कालः समुपागतश्चायम्॥

इत्यादिकाव्यानुसन्धानबलात् आलम्बनोद्दीपनव्यक्तौ तदनुगुणस्य रोमा-ञ्चादेः दर्शनीयस्याविर्भावनेन व्यञ्जनीयस्य उत्कण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात्।

अत्र तैः कृत्रिमत्वेन अतल्लिङ्गैरपि कृत्रिमत्वेनाज्ञानात् स्थायी रत्यादि-रनुमीयते। सैव चानुमितिः सचमत्कारप्रतीतिरूपा चर्वणा। तया विषयीक्रियमाणः स्थायी रस इत्युच्यते। चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः।

ननु साक्षात्कार एव सचमत्कारो नानुमित्यादिरपि। अन्यथा सुखादावनुमीयमानेऽपि स स्यात्। यद्यपि वस्तुसौन्दर्यबलाद्रसनीयत्वेन स्थायिनामन्याऽनुमेयवैलक्षण्येन तद्प्रसक्तिः; तथापि स्थायिनां नटेऽसत्त्वाद् बाधावतारेणानुमितिरेवं कथं स्यादिति चेन्न। अभावनिश्चयाभावात्। स्थायितया सम्भाव्यमानत्वादिति।

तदपि नान्ये रोचयन्ते। ‘प्रत्यक्षमेव ज्ञानं सचमत्कारं नानुमित्यादिरि’ति लोकप्रतीतिमवधूय अन्यथाकल्पने मानाभावात्। सूत्रस्यान्यथैव योजन-सम्भवादिति काव्यप्रदीपकृत्।

किञ्च—रसस्य प्रतीतिः परगतत्वेन स्वगतत्वेन वा ? नाद्यः; स्वरसनीयत्वाभावेन सर्वदा रसस्य नटे रसोऽस्तीत्येवमाकारेण तटस्थत्व-प्रसङ्गात्। न द्वितीयः; अनुमीयमानत्वचर्व्यमाणत्वयोर्विरोधात्। करुणे दुःखित्वप्रसङ्गेन तत्र प्रवृत्त्यभावप्रसङ्गाच्चेति।

किञ्च—नटेऽनुमीयमानो रत्यादी रसः ? सामाजिकनिष्ठं तदनुमानं वा ? नाद्यः; सामाजिकानामरसिकत्वापत्तेः, तत्रानुमितिमात्रसम्भवात्। नापरः; अनुमितेः सुखानात्मकत्वेन तद्दोषतादवस्थ्यात्। न च वेदान्ति-

मीमांसकयोर्जिज्ञास्यसुखत्वाङ्गीकृतिः ; साक्षात्कारस्यैव तयोस्तत्राङ्गीकारेणानुमितौ तदयोगात्। एवं लौकिकरत्यनुमितेरपि रसत्वं स्यात्। अनुकर्तरि अनुमीयमानस्य तस्यासत्त्वोपगमेऽनुकार्ये वस्तुसतस्तद्व्याकोपात्। न च विभावादीनामुपायानामलौकिकत्वेन तदलौकिकत्वम् ; असतस्तदनुपपत्तेः, धर्मिग्राहकप्रमाणस्यैव अलौकिकत्वसाधनप्राप्तत्वादिति विस्तारिकाकृत्।

भट्टनायकरीत्या तु स्थायिनां विभावादिभिः संयोगाद्भोग्यभोजकभावसम्बन्धात् रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः।

न च भोगपक्षेऽपि दोषावकाशः ; भोगस्यालौकिकत्वात्। तथाप्यन्यनिष्ठः स्थायी अन्यनिष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्यः, अन्यथाऽतिप्रसङ्गादिति चेदुच्यते।

शब्दात्मनः काव्यस्य त्रयो व्यापाराः—अभिधा, भावकत्वं भोजकत्वञ्च। तत्राऽभिधा निरन्तर-सान्तरार्थनिष्ठत्वेन द्विधा। भावकत्वं साधारणीकरणम्। तेन व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते, अनुकार्यीयत्वेन उपस्थाप्यन्ते। तच्च सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः। स्थाय्यनुभावादीनां च सम्बन्धविशेषानवच्छिन्नत्वेन उपस्थितिश्च साधारणीकरणम्। अन्त्यव्यापारद्वयं नाट्येऽपि। एवं काव्ये नाट्ये वा द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते।

भोगश्च सत्त्वगुणोद्रेकात् प्रकाशते य आनन्दस्तत्स्वरूपा अनन्यालम्बना या संवित् तत्स्वरूपो लौकिकसुखानुभवविलक्षणः। सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात् सुखदुःखमोहाः प्रकाश्यन्ते। सत्त्वोद्रेकश्च स्वेतरावभिभूयावस्थानमिति सांख्यसिद्धान्तानुसारेण ज्ञेयः।

तदपि नान्येऽभ्युपगच्छन्ति। तादृशव्यापारद्वयकल्पने प्रमाणाभावात्। भुक्तेर्ज्ञानातिरेकस्यानुभवबाधितत्वेन निष्पीड्यमानस्य चाभिव्यक्तिपक्ष एवान्तर्भावान्न सम्यगिति काव्यप्रदीपकृत्। प्रकृतिव्यतिरिक्तस्य भोगशब्दार्थस्य निर्वक्तुमशक्यत्वादुत्पत्त्यनङ्गीकारे रसस्य नित्यत्वप्रसङ्गात्। अभिव्यक्त्यतिरिक्तस्यानङ्गीकारे रसस्याप्रत्यक्षत्वप्रसङ्गात्। उत्पत्त्यभिव्यक्त्यतिरिक्तपक्षसद्भावे प्रमाणाभावात्।

अत्र पक्षे भावनोपनीतो रामादिरत्यादिश्चिदानन्दाख्यतांसाक्षात्कारविषयो रस इति पर्यवस्यति। तत्र सम्भोगेच्छारूपस्य रामादिरत्यादेः सुखरूपत्वाभावेनारसत्वम् ; तस्य तदेकरूपत्वात्। न च सुखात्मकज्ञानविषयत्वेन तस्याः स्वाद्यता ; प्रमाणाभावात्।

किञ्च—रागसम्भेदे विद्वत्प्रकाशो न स्यात्, रागिणामेव काव्य-नाट्यादितश्चमत्कारात्। विरक्तस्य तद्विरहाच्छब्दनिष्ठक्रमिकव्यापारत्रयस्य प्रामाण्यशून्यत्वादेव अत्रारुचिः।

भट्टनायकादिमतविवरणे पण्डितराजः—ताटस्थ्येन रसप्रतीतेरनास्वाद्यत्वमात्मगतत्वेन च प्रतीतेरसम्भवः, शकुन्तलादीनां सभ्यान् प्रत्यविभावत्वात्। विभावमन्तराऽनालम्बनस्य रत्यादेरप्रतिपत्तेः।

न च कान्तात्वं साधारणविभावतावच्छेदकमत्राप्यस्तीति वाच्यम्; अप्रामाण्यनिश्चयानालिङ्गिताऽगम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्य विभावतावच्छेदककोटाववश्यं निवेश्यत्वात्, अन्यथा स्वस्रादेरपि कान्तात्वादिना तत्त्वापत्तेः। एवमशोच्यत्व-कापुरुषत्वादिज्ञानविरहस्य तथाविधस्य करुणरसादौ। तादृशज्ञानानुत्पादस्तु तत्प्रतिबन्धकान्तरनिर्वचनमन्तरेण दुरुपपादः।

न च स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरेव तथेति वाच्यम्; नायके पुरुषधौरेयत्व-धीरत्वादेरात्मनि चाधुनिकत्वादेर्वैधर्म्यस्य स्फुटं प्रतिपत्तेरभेदबोधस्यैव दुर्लभत्वात्।

किञ्च—केयं प्रतीतिः? प्रमाणान्तरानुपस्थानात् शाब्दीति चेन्न। व्यावहारिकशब्दान्तरजन्यनायकमिथुनवृत्तान्तवित्तीनामिव अस्या अपि अहृद्यत्वापत्तेः। नापि मानसी; चिन्तोपनीतानां तेषामेव पदार्थानां मानस्याः प्रतीतेरस्या वैलक्षण्योपलम्भात्। न च स्मृतिः; तथा प्रागननुभवात्। तस्मादभिधया निवेदिताः पदार्थाः भावकत्वव्यापारेण अगम्यत्वादिरसविरोधिज्ञानप्रतिबन्धद्वारा कान्तात्वादिरसानुकूलधर्मपुरस्कारेण अवस्थाप्यन्ते।

अत्र भावकत्वव्यापारस्य नवीनस्य स्वीकारः भोगव्यञ्जनया अज्ञानावरणमपसार्य सत्त्वोद्रेकाद्भग्नावरणचिद्विशिष्टो रत्यादिः भग्नावरणचिदेव वा यथा रसत्वेनास्वादविषयीक्रियते तथा भोजकत्वव्यापारेण सत्त्ववृद्धौ सत्यां निजचित्स्वभावनिर्वृत्तिलक्षणेन साक्षात्कारेण विषयीकृतो रत्यादिरेव रसत्वेनाभ्युपेयते। ततश्च भोजकत्वं व्यञ्जनास्थानीयम्।

अन्यैस्तु—रसोत्पत्तेः पूर्वं शकुन्तलादिषु दुष्यन्तादे रतौ व्यञ्जनया गृहीतायां सहृदयतोल्लासितभावनाविशेषरूपदोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकायां रजतमिव समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यः शकुन्तलादिविषयकरत्यादिरेव रसः। स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात् स सुखपदव्यपदेश्यो भवति, स्वपूर्वोपस्थितेन रत्यादिना भेदाग्रहाद् रतित्वेन एकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यते।

एतेन—'दुष्यन्तादिनिष्ठस्य रत्यादेरनास्वाद्यत्वान्न रसत्वम्। स्वनिष्ठस्य तु तस्य शकुन्तलादिभिरतत्सम्बन्धिभिः कथमभिव्यक्तिः? स्वस्मिन् दुष्यन्ताद्यभेदबुद्धिस्तु बाधबुद्धिपराहता' इत्यादिकमपास्तम्।

अन्यमतरीत्याऽपि—काव्येन शकुन्तलादिशब्दैः शकुन्तलात्वादिप्रकारकबोधजनकैः प्रतिपाद्यमानेषु, शकुन्तलादिषु दोषविशेषकल्पनं विना विभावादीनां साधारणीकरणं नोपपद्यते। एवमवश्यकल्प्येन तेनैव दोषविशेषेण स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरप्युपपद्यते।

ननु यदि दुष्यन्त इव सहृदयेऽपि सुखविशेषजनकत्वे करुणरसादिषु स्थायिनः शोकादेर्नायक इव सहृदयेऽपि दुःखजनकत्वमस्त्विति चेन्न। तत्र केवलाह्लादस्य सहृदयहृदयप्रमाणकत्वेन लोकोत्तरकाव्यव्यापारस्यैवाह्लादजनकत्ववद् दुःखप्रतिबन्धकत्वस्यापि कल्पनेन तददोषात्।

अन्यैस्तु—व्यञ्जनाव्यापारस्य अनिर्वचनीयख्यातेश्चानुपगमेऽपि प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरतिमदभेदबोधो मानसः काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसोऽभ्युपेयते।

ननु चैवं स्वस्मिन्नविद्यमानस्य रत्यादेः कथमनुभव इति चेन्न। लौकिकसाक्षात्कार एव विषयसद्भावस्यावश्यकत्वेन भ्रमरूपे स्वात्मनिष्ठे रत्यादिसाक्षात्कारे तदनपेक्षणात्।

आचार्याभिनवगुप्तरीत्या तु स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात् विभावादीनामेव वा परस्परं संयोगान्मिलनाद् रसनिष्पत्तिरिति सूत्रार्थः। तथा हि—लोके प्रमदादिभिः कारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत्पाटवं झटिति प्रवृत्तिस्तद्वतां सभ्यानां सूक्ष्मतयाऽन्तःस्थितो रत्यादिः स्थायी काव्ये नाट्ये च गुणालङ्कारयोगात् कायिक-वाचिका-ऽऽहार्य-सात्त्विकचतुर्विधाभिनयेन च यथोक्तविभावनादिव्यापारवत्त्वाद् अलौकिकविभावादिशब्दव्यपदेश्य-योग्यदशाविशेषविशिष्टैस्तैरेव कारणादिभिर्व्यज्यते। येषां तु पूर्वं रत्यादिर्नोत्पन्नस्तेषां तद्वासनाविरहिणां रसाभिव्यक्तिर्नास्त्येव। तेन शृङ्गारिणामेव शृङ्गारस्य निर्विण्णस्वभावानामेव च शान्तस्याभिव्यक्तिरित्यनुभूयते। तत्रापि सहृदयतारूपा स्वाभाविकी वासनापि सहकारिणी यां विना शृङ्गारिणामपि मीमांसकवैयाकरणादीनां न रसाभिव्यक्तिः। तदुक्तम्—

वासना चेन्न हेतुः स्यात् सा स्यान्मीमांसकादिषु। इति।

ननु—अन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिरिति

चेन्न। 'ममैवेते, शत्रोरेवैते, तटस्थस्यैवैते, न ममैवेते, न शत्रोरेवैते, न तटस्थस्यैवैते' इति सम्बन्धविशेषस्वीकार-परिहारनियमानध्यवसायात् साधारणीकरणाभ्युपगमात्। तथा च साधारण्येन प्रतीतैस्तैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलित-परिमितप्रमातृभाववशोन्मिषित-वेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीक्रियमाणश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्, अन्यत्सर्वमिव तिरोदधद् ब्रह्मानन्दास्वादमिवानुभावयन्, अलौकिकचमत्कारकारी शृङ्गारादिको रसः। तदुक्तं पण्डितराज-जगन्नाथेनापि—

समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिः अलौकिक-विभावानुभावव्यभिचारिशब्द-व्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैः चन्द्रिकादिभिरुद्दीपनकारणैः अश्रुपातादिभिः कार्यैः चिन्तादिभिः सहकारिभिश्च संभूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिर्वर्तितानन्दांशावरणाज्ञानेन, अत एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः। तथा चाहुः—'व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः' इति। व्यक्तो व्यक्तिविषयीकृतः। व्यक्तिश्च भग्नावरणा चित्। यथा शरावादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितान् पदार्थान् प्रकाशयति स्वयञ्च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन् प्रकाशयन् स्वयञ्च प्रकाशते, इति।

अन्तःकरणधर्माणां साक्षिभास्यत्वाभ्युपगमात् स्वप्नतुरगादिवत् रङ्गरजतादिवद्विभावादीनामपि साक्षिभास्यत्वमेव। व्यञ्जकविभावादिचर्वणाया आवरणभङ्गस्य वा उत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ रसे उपचर्येते। विभावादिचर्वणावधित्वादावरणभङ्गस्य निवृत्तायां तस्यां प्रकाशस्यावृतत्वाद्विद्यमानोऽपि स्थायी न प्रकाशते।

यद्वा—विभावादिचर्वणामहिम्ना सहृदयस्य तत्सहृदयतोन्मिषितेन तत्तत्स्थाय्युपहितस्वरूपानन्दाकारा योगिनः समाधाविव काव्यव्यञ्जनामूला आनन्दविषयतया तत्प्रचुरचित्तवृत्तिरुपजायते। वृत्तेरानन्दलीनप्रायत्वात् पूर्वोक्तरीत्या विगलितपरिमितप्रमातृत्वादिधर्मत्वाच्च अस्यानन्दस्य अन्तःकरणवृत्त्यनवच्छिन्नशुद्धचैतन्यरूपत्वेन वृत्त्यवच्छिन्नचैतन्यरूपेभ्यः सुखेभ्यो वैलक्षण्यम्। तथा च भग्नावरणचिद्विशिष्टो रत्यादिः स्थायीभावो रसः,

रसो वै सः इति श्रुत्यनुरोधेन रत्याद्यवच्छिन्ना भग्नावरणाचिदेव वा रस इत्याहुः।

विशिष्टात्मनस्तस्य विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वं स्वप्रकाशत्वञ्च सिद्ध्यति, रत्याद्यंशमादायानित्यत्वादिकमपि। सा च शब्दव्यापारभाव्यत्वाच्छाब्दी, अपरोक्षसुखावलम्बनत्वाच्च अपरोक्षात्मिका। चर्वणापि चास्य चिद्गतावरणभङ्ग एव, प्रागुक्ता तदाकारा वृत्तिर्वा। तादृशरसस्य विभावादिविषयसंवलितचिदानन्दालम्बनत्वेन परब्रह्मास्वादात् समाधेर्विलक्षणत्वेन ब्रह्मानन्दसहोदरत्वोक्तिः।

तथा च विभावादीनां साधारणीकरणरूपव्यापारेण फलबलकल्प्येन विशेषांशस्य सर्वथा प्रमोषात् सामाजिकेषु स्थायी व्यज्यमानो रसः 'दशमस्त्वमसीति' रीत्या शाब्दापरोक्षज्ञानाभ्युपगमेन नापरोक्ष्यानुपपत्तिरपि। ईदृशालौकिकव्यापारमाहात्म्येनैव करुणरसे दुःखजनकतया क्लृप्तेभ्योऽपि सुखोत्पत्तेः सुरतेऽधरदशनादाविव अनुभविकत्वाद् अन्तःकरणवृत्तित्वात् कार्यत्व-ज्ञाप्यत्वाभावाद् भूत-वर्तमान-भविष्यत्वराहित्यात् सविकल्पनिर्विकल्पवेद्यत्वाभावाच्च रसस्य अलौकिकत्व-नित्यत्वा-ऽऽनन्दरूपत्व-स्वप्रकाशत्वादिकं सिद्धम्। चर्वणानिबन्धनश्च उत्पादविनाशित्व-कादाचित्कत्वादिव्यवहारोऽपि तत्र सङ्गच्छते।

अत्रेयं समीक्षा—स्थायिभावस्य आलम्बनविभावं (कारणं) दृष्ट्वा श्रुत्वा च तत्र रामादिचरिते सत्यभिनये सीतादिकमालम्बनं दृष्ट्वा, रामादेरनुकार्यस्य रत्याद्युदयः, न नटस्य न वा सामाजिकस्य; नटस्य सीतादौ विभावबुद्धेरनुदयात्। न च सीताद्यभिनेत्र्यां विभावादिबुद्धिसम्भवः; तथात्वे स्वभावाभिनयप्रसङ्गापातेन रामादिरत्यभिनयस्य पर्याकुलीभावात्। तस्यास्ताटस्थ्ये नायिकाभूमिकायां पुरुषेऽभिनेतरि च सर्वथा विभावबुद्धेरसम्भव एव। सामाजिकानामपि सीतादौ मातृबुद्ध्या विभावादिधियोऽनुदयात् पररहस्यदर्शनेन व्रीडाऽऽतङ्कादिसम्भावनया नानया रसानुभूतिसम्भवः। कथञ्चित् तत्र सम्भवेऽपि करुणादौ पुत्रवियोगातुरस्य मृत्युदृश्ये कस्य सामाजिकस्य स्वपुत्रमरणबुद्धिरुदेति? अनुकार्यगतोऽपि न स्थायी; तदानीं तदनुपस्थितेः। रूपके कथञ्चित्सम्भवेऽपि श्रव्ये तदसम्भव एव। तथा हि—श्रव्ये कविः, वर्ण्यः श्रोता चेति पक्षत्रयम्। तत्र न कवौ; रामादेरिव सीतादिं प्रति रत्याद्यनुदयात्। नापि वर्ण्ये; तदनुपस्थितेः। नापि श्रोतरि; सीतादिं प्रति तस्यापि रत्यसम्भवात्। नापि स श्रोता कविगतं वर्ण्यगतं वा स्थायिभावमाश्रयेत; तयोर्भावैक्यासम्भवात्। पतिव्रतायां पत्न्यां कवेः श्रोतुर्वा न भावोदयः सम्भवति, कुमारसम्भवे रघुवंशादौ च गौर्यादौ

शिवस्येव कवेः पाठकस्य वा न रत्युदयः सम्भवति, देवयोनिभूतायां मानुषरतेरसम्भवात्।

तत्र भट्टलोल्लटादिरीत्या अनुकार्ये अनुकर्तरि चासन्नपि रसोऽनुसन्धानबलात् सामाजिकेषु प्रतीयते। शङ्कुकरीत्या तु विभावैरनुभावैर्व्यभिचारिभिश्च प्रयत्नावर्जिततया कृत्रिमैरपि तथाऽनभिमन्यमानैः अनुकर्तृस्थत्वेन लिङ्गबलेन प्रतीयमानः स्थायिभावः मुख्यरामादिगतस्थाय्यनुकरणरूपो रसः सामाजिकैरनुमीयते । तत्रापि कथमनुकार्येऽसन्तं स्थायिनमनुमिमीते ? कुमारसम्भवादौ कवेः शिव-पार्वतीविषया रतिस्तयोश्च अन्योन्यविषयेति भिन्नाश्रयोऽयं व्यवहारः। कविस्तयो रतिं वर्णयतीति स्वीक्रियते चेत् तर्हि तस्य रतेरपलापः। न च कविः सर्वथाऽरतिकः सम्भवति। श्रोता च तदुभयविहीनः कथं रसमनुभवेत् ? उभयविधामपि रतिं स्वदते चेत् कतरस्यास्तत्र रसरूपेण परिणतिः ? इत्युभयतः पाशरज्जुः।

भट्टनायकरीत्या अभिधया काव्यार्थे बोधिते भावकत्वव्यापारसंज्ञेन विभावादिसाधारणीकरणव्यापारेण श्रव्यादौ निर्दोषकाव्येन नाट्ये चतुर्भिरभिनयरूपेण रसो भाव्यते। तत्र किमसामान्यस्य लोकोत्तरस्य विभावादेः सामान्यीकरणम्, लौकिकीकरणमेव साधारणीकरणम्, किं वा व्यक्तिविशेषगतस्य आश्रयनिर्विशेषभावापादनेन सर्वगतत्वापादनं वा ? प्रथमे पक्षे तु कविदृशा विभावादीनामलौकिकत्वमेव मम्मटादिभिरुपवर्णितम्। तस्य लौकिकत्वापादनं दूषणमेवेति असाधारणस्य व्यक्तिविशेषनिष्ठस्य साधारणीकरणम्, विशेषगतत्वाकारकभेदराहित्यापादनमेव तदाशयो मन्तव्यः। तत्रापि विभावादिसंवलितो यदि स्थायी न सामाजिकगतः, तर्हि कथं तस्य अन्यस्थायिना रसानुभूतिः ? यदि वर्तते, तदाऽनुकार्यस्य सामाजिकस्य च स्थाय्यालम्बनादिभेदे कथं द्वयोः सामान्यीकरणम् ?

तत्राभिनवगुप्तरीत्या विमलप्रतिभः सहृदयो ग्रीवाभङ्गाभिरामम्, उमाऽपि नीलालक···इत्यादिवाक्येभ्यो वाक्यार्थं प्रतिपद्य वाक्योपात्तदेशकालादिविभागराहित्येन वस्तुनो मानससाक्षात्कारात्मिकां प्रतीतिमधिगच्छति। सत्याञ्च तस्यां मृगपोतकादिभीतिवर्णने वैशिष्ट्यावगाहिज्ञानराहित्येन केवलं भीत इति ज्ञानं भयकारणस्य वस्तुनः तदानीमसत्त्वेन देशकालादिविशेषज्ञानविरहितस्य भयस्यैव प्रतिपत्तिः। ततश्च 'भीतोऽहम्, भीतो मम शत्रुर्मित्रं तटस्थो वा' इति ज्ञानेभ्यो दुःखसुखादिमूलवुद्ध्यन्तरोदयनियमवत्तया विघ्नबहुलेभ्यो ज्ञानेभ्यो विलक्षणं निर्बाधप्रतीतिविषयं साक्षादिव स्वहृदयवर्तिनमिव भयानकं रसं स्वदते। तथाविधे स्वादे किंगतं किंमूलं भयम्

इति विशेषस्य ज्ञानमेव नोदेति। तदेव भयाश्रयेण मृगपोतादिना सह सामाजिकस्य साधारणीकरणम्।

यद्यपि च विभावादिसहितरसप्रतीतौ कथं विभावादिनापि साधारण्यम्? अपारमार्थिकत्वेऽपि काव्यार्थपरिशीलनवशात् विभावादिप्रतिपत्तिर्भवत्येव। सत्याञ्च तस्यां तत एव आलम्बनाद् भयादेरुदय एव प्रसज्येत। न च केवलेन विशुद्धेन स्थायिना रसः प्रतीयते; तथापि यथा पानकरसे काश्मीरोशीरमरीच्यादिविविधरसानुभूतावपि विशिष्य आकारेण न तेषां ग्रहणम्, यथा वा माणवकाध्ययनध्वनिषु पुत्राध्ययनध्वनिप्रतीतावपि न विशिष्याकारेण प्रतीतिस्तथैव आलम्बनविभावादिप्रतीतावपि साधारणीकरणव्यापारेण विशिष्टप्रतीतिर्न भवतीति न काचिदनुपपत्तिः।

यदुक्तम्—"सीताद्याः कथं स्त्रीमात्रपर्यवसायिन्यः, पुत्र्यां भगिन्यां वा रत्यादिं कथं न जनयेयुः" इति। तदपि तुच्छम्; भगिन्यादिबुद्धीनां तत्प्रतिबन्धकत्वकल्पनेन दोषाभावात्। नास्त्यदर्पणरीत्याऽपि रसो नियतानियतविषयो विशेषसामान्याकारोभयविधो भवति, सामाजिकानां रसास्वादः स्त्रीसामान्यविषयो भवति। तद्रीत्या आत्मगतसंस्कारोपहितः सुखात्मा रसः काव्यार्थभावनोद्बुद्धोऽनुभवविषयतां याति।

यदुक्तम्—"यदि काव्यगतैर्विभावादिभिः प्रतिपत्तृगतः स्थाय्यादिरुद्बोध्यते, तर्हि रामादिगतस्थायिना सह सामाजिकरतेः न कोऽपि सम्बन्धः सिद्ध्यति। स्याच्चेत्, किंमुखः किमाकारकश्चे"ति। तदपि न; काव्यार्थभावनाहेतुत्वेन रामादिस्थायिनोऽपि तदुपयोगेन दोषाभावात्। यदि सामाजिकैः स्थायिसंस्कारो रसानुभूतौ नोपयुज्येत तदा सहृदयानामेव रसास्वादनियमो न स्यात्। साहित्यदर्पणे साधारणीकरणप्रभावेण हनुमदादिगतं समुद्रलङ्घनोत्साहं प्रतिपद्यते। तदसामर्थ्येऽपि 'देवाभिन्नोऽहम्' इत्येवंविधायां बुद्धौ जातायां तादृशसामर्थ्यानुभवोऽपि जायते। क्वचिद् वाराणस्यां हनुमद्भावापन्नेन मनुष्येण तादृगुत्साहेनैव वरुणा उल्लङ्घिता।

केषाञ्चिद्रीत्या भावनादोषेण शुक्तिकाशकले रजतबुद्धिरिव आत्मन्यपि रामाद्यभेदबुद्धिः, विभावादीनामपि तेनैव भावनादोषेण साधारण्यं जायते। तेनैव शकुन्तलादिषु स्वस्मिन् दुष्यन्ताद्यभेदबुद्धिमुत्पाद्य गम्यत्वबुद्धिरपि समुद्भाव्यते। योगवासिष्ठादिषु काव्यादिकथार्थस्य प्रातिभासिकत्वमङ्गीकृतमपि, काव्यादीनामेव तादृग्भावनोद्भावकत्वात्।

कैश्चित्तु—भावप्रवणस्य कवयितुः, स्वकल्पनाशक्त्या वर्ण्यप्रतिबिम्बोपस्थित्या काव्यनाटकादिनिर्मितिः, तच्छ्रोतुर्द्रष्टुश्च काव्यप्रभावेण कवयितुर्भावेन तादात्म्यं साधारणीकरणम्।

अन्यैस्तु—पाठकादेर्भावस्य कवेर्भावेन तादात्म्यस्थापनं साधारणीकरणम्।

परैस्तु—काव्यादिद्वारेण कविस्तांस्तान् भावान् प्रस्तुवन् सहृदयानां सुप्तं भावलोकं क्षोभयति। उद्बुद्धेषु भावेषु श्रोतारोऽपहाय इमं लोकं शुद्ध-चैतन्यात्मके भावजगति वर्तमानाः कविवर्णितैर्भावैः सह साधारणी-करणाख्यम् ऐक्यमनुभवन्ति इत्युच्यते। विभावादीनां स्थूलोपकरणानान्तु तत्तद्भावजागरण एवोपयोगः। यथाग्नेः क्षोभणाय प्रादुर्भावाय आग्नेयपदार्था-नामुपयोगः। प्रादुर्भूते च तस्मिन् केवलस्य वह्नेरनुभवः। लौकिक्यां स्थितौ प्रेमादीनां व्यक्तिविशेषसम्बन्धः स्फुरति। तावत्येव तत्परिमितिश्चाऽऽभाति। अभिव्यक्ते भावे व्यक्तिविशेषसम्बन्धतिरोधानेन तदपरिच्छिन्तिरेव अनु-भूयते। तथा च कवेर्भावेन विभावादीनाञ्च भावेन ऐक्यमापन्नः सामाजिक-भावो विगलितप्रमातृप्रमेयादिभेदसाधारण्यमुपयाति।

भक्तिरसे तु भगवान् परमानन्दस्वभावः सर्वदा विद्यमान एव आल-म्बनविभावः, तस्य नित्यत्वात् सर्वगतत्वाच्च। श्रवणादिना सगुणसाकार-रूपेणापि रसिकानां हृत्सरोजे तत्प्रादुर्भावस्मरणात्। तदुक्तम्—

त्वं भावयोगपरिभावितहृत्सरोजे आस्से श्रुतोक्षितपथो ननु नाथ पुंसाम्।
यद्यद्धियात्त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय॥

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्। इति।

अतो भगवद्रसानुभवः सुन्दर उक्तः।

कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः। इति।

रसिकानां हृदये भगवद्गुणगणवर्णनश्रवणादिभिः, भावराज्यस्याऽऽवि-र्भावो भवति। यत्र भावमयः सोपकरणो भगवान् व्यज्यते यथायोग्यं विभावाद्यभेदबुद्धिरपि तत्र जायते। भावनाबलादेव विभावादीनां साधा-रण्यादिकम्।

यद्यपि भक्तिः आह्लादिनीशक्तिरूपा नित्या विभ्वी च; तथापि सारश्रवण-जनितद्रुतचित्तजनितवृत्तावेव अभिव्यज्यते इति तदर्थं वृत्तिरपेक्षिता।

सविकल्पकं ज्ञानं चाक्षुषादिभेदेन बुद्धिवृत्त्या जन्यत इति वृत्ति-र्विचार्यते। तत्र नेत्रनिमीलने कृते बहिर्दृष्टपदार्थस्येव कश्चिदाकारो नेत्रान्त-र्भासते। स आकारो न बाह्यवस्तुनः आश्रयमतिहाय, तत्र तस्याशक्यवचन-त्वात्। अतः स आन्तरस्यैव कस्यचन भवितुमर्हतीति तदाश्रयत्वेन साङ्ख्यै राहङ्कारिकं तत्त्वान्तरं वृत्ति-नामकं कल्प्यते। तथा हि प्रवचनसूत्रद्वयम्—

प्रमार्थप्रकाशलिङ्गाद् वृत्तिसिद्धिः। भागगुणाभ्यां तत्त्वान्तरं वृत्तिरिति।

अर्थस्तु—प्रमा पूर्वोक्तरीतिकमाकारज्ञानम्, तत्सहितो योऽर्थप्रकाशो विषयज्ञानम्। एवमुभयविधात् लिङ्गाद् वृत्तिसत्तानिश्चयः। यदि वृत्तिर्न

स्यादुक्त आकारो न प्रतीयेत। अतैजसत्वादचलं चक्षुर्विप्रकृष्टं विषयमप्राप्नुवत् तत्प्रकाशनं न कुर्यात्। जायते च तदुभयम्, अतः साऽस्तीति निश्चयः। एवं भागो विभागः, अहङ्काराद्विभज्य विषयादेशावधिगमनं, गुणः उक्ताकारः; ताभ्यां कृत्वा आहङ्कारिकं तत्त्वान्तरं वृत्तिरिति। अभियुक्तोक्तिश्च—

वृत्तयः प्रसरद्रूपाः स्फारिताक्षस्य पञ्च च।
अदृष्टानुग्रहात् तत्तत्सम्बन्धार्थावबोधिकाः॥ इति।

अमूर्तायास्तस्या कथं क्रिया इत्यतस्तृतीयं सूत्रम्—न द्रव्यनियमस्तद्योगादिति। अनियतत्वात् पदार्थानां न द्रव्य एव क्रियानियमः। किन्तु यत्र यत् प्रमाणतः सिद्ध्यति तत्र तदनुमन्यामहे। अतो दूरस्थवस्तुन आकारग्रहणदर्शनात् साऽपि क्रियावतीत्यर्थ इति।

एवं मायावादिनोऽपि अन्तःकरणविशिष्टस्य चैतन्यस्य प्रमातृत्वमङ्गीकृत्य तस्मिन् ज्ञानसूक्ष्मावस्थारूपं विषयसंस्कारमाधातुं विषयेन्द्रियसन्निकर्षसामर्थ्यजन्याम् अन्तःकरणपरिमाणरूपां वृत्तिमङ्गीकुर्वन्ति।

नैयायिकादयस्तु—नयनकिरणानां निर्गमनेन विषयसन्निकर्षात् ज्ञानम्। तेन च भावना-संस्काराख्यं गुणान्तरं चरमस्मृतिनाश्यमात्मनि अङ्गीकुर्वन्तो वृत्तिपदार्थमेव नेच्छन्ति। तत्तु नेत्रान्तरानुभवस्य सार्वजनीनत्वादप्रयोजकमिति वृत्तिः सर्वथाऽभ्युपेयैव।

शुद्धाद्वैतरीत्याऽपि—बुद्धिवृत्तिः संस्काराधानाद्यर्थं जन्यते। सा वृत्तिः बुद्धेर्न तत्त्वान्तरम्, नाप्यन्तःकरणपरिणामान्तरम्, किन्तु बुद्धितत्त्वस्य कालक्षुब्धसत्त्वादिगुणकृतः अवस्थाविशेष एव। न च तस्यावस्थाविशेषत्वे निर्गमाभावेन विषयासंसर्गात् तदाकारकत्वं वृत्तेर्दुर्घटमिति शङ्क्यम्; मायागुणस्य रजसश्चञ्चलत्वेन विक्षेपकत्वेन च दर्पणे मुखस्येव नेत्रगोलकेऽपि बाह्यविषयाकारसमर्पणे तदाकारस्य सुघटत्वात् स एव मायिकाकारो नयनकिरणेषु नेत्रमुद्रणे प्रत्यावृत्तेषु गोलकान्तरानुभूयते। एवमिन्द्रियान्तरेऽपि वृत्तिर्ज्ञातव्या। यद्यपि सा नानुभूयते, तथापि तादृशसंस्काराधानात् निश्चीयते।

एकादशाऽऽसन् मनसो हि वृत्तय आकूतयः पञ्च धियोऽभिमानः।
मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीर भूमिः॥

इति जडभरतवाक्याच्च। भूमिषु पञ्चानां ज्ञेयत्वेन विषयत्वम्। ततः पञ्चानां कार्यत्वेन पुरस्य स्वीकार्यत्वेन ज्ञेयम्। संस्कारस्तु जातस्य ज्ञानस्य सूक्ष्मावस्थेत्युक्तम्। बुद्धिश्च कर्मज्ञानेन्द्रियानुग्राहिका। सा च वृत्तिद्वारैव अनुगृह्णाति इति इन्द्रियजन्यस्य विशिष्टज्ञानस्य नानाभेदाः। अतो बुद्धेरवस्थाविशेष एव वृत्तिरिति निश्चयः।

ननु इन्द्रियार्थसम्प्रयोगोत्तरं सम्प्रयुक्तार्थाकारसमानो बुद्धौ आकारो जायत इति प्रमा भवतु। भ्रमादिकं तु न भविष्यति, शुक्त्यादौ तद्विरुद्धस्य रजताद्याकारस्याभावेन बुद्धौ मायाकृततत्समर्पणायोगात्, अन्यथाख्यातिप्रभृतीनां चानङ्गीकारादिति चेन्न। स्वभावगुणानुग्रहादेव तस्यापि सिद्धेः। पूर्वोत्पन्नस्य रजताद्याकारकसंस्कारस्य रजसा बहिःक्षेपे सम्प्रयुक्तार्थाकारस्य तमसावरणे च भ्रमस्य सुखेन वक्तुं शक्यत्वात्।

एवं नानाविधाद् गुणक्षोभजवृत्तिभेदादेव अन्येऽपि ज्ञानभेदा उन्नेयाः। यदा विषयेन्द्रियसंयोगात् निर्विकल्पकं तदेन्द्रियदेशे बुद्धेर्वृत्तिः। तया इन्द्रियानुग्रहे सविकल्पकम्, अननुग्रहे तु न। वृत्त्यन्तरेण पूर्ववृत्तेर्नाशे सविकल्पकस्य संस्काररूपेणावस्थानम्। तस्योद्बोधकैः उद्बोधे मायोपस्थापितमायिकार्थसहकृता स्मृतिः, राजसै रागादिभिः संस्कारप्राबल्ये मायया विषयाकारावरणपूर्वकं मायिकपदार्थसहितस्य ज्ञापनस्य गोलकाग्रभागे क्षेपे भ्रमः। किञ्चिदावरणे संशयः। सत्त्वेन सर्वथाऽवरणभङ्गे विक्षेपस्यापि निवृत्तौ विशेषदर्शनमित्यादिवृत्तिविषया तु वृत्तिर्न भवतीत्यनुभवानुसारेणैव निश्चीयते।

न च वृत्तीनां गुणजन्यत्वे मानाभावः शङ्क्यः;

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः॥

इत्येकादशे हंसवाक्यात् संशयादिप्रवृत्तीनां तदवान्तरभेदत्वेन तदनतिरेकात्।

यत्तु—"जाग्रद्भोगप्रदकर्मोद्बोधे जागरणं तदुपरमे निद्रया स्वप्न-सुषुप्ती" इति मतम्; तत्रापि कर्मोद्बोधोपरमहेतोः अवश्यवाच्यत्वेन लाघवात् ईश्वरेच्छानुगृहीतानां परस्परोपमर्दकादिस्वभावानां गुणानामेव अवस्थाहेतुत्वं साधीयः। तस्माद् बुद्धिगुणजन्या तदवस्था वृत्तिः। सा यदा अनुगृह्णाति तदा वक्ष्यमाणप्रक्रियया सविकल्पकं ज्ञानं जन्यते। तथा हि—

अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम्।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्॥
शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः।
न्याय्यं वा विपरीतं वा पञ्चैते तत्र हेतवः॥

इति गीतायां कार्यमात्रं प्रति पञ्चहेतव उक्ताः। तत्र अधिष्ठानं शरीरम्। कर्ता जीवः, करणं बाह्याभ्यन्तरम्, चेष्टाः प्राणादिवायुकर्माणि, दैवं काल-कर्म-भगवदिच्छादि।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥

इति वाक्यादन्तर्यामी वा दैवपदवाच्यः। देवानां समूहो दैवमिति तत्तदिन्द्रियाधिष्ठातारो वा। एवं सति ज्ञानजनक-मनःसंयोगादिहेतुभूत-क्रियायामपि एतान्येव कारणानि।

तत्राऽयं क्रमः—दैवानुकूल्येन अन्तर्यामिणा मनस्तत्तत्कार्यार्थं प्रेर्यते। तच्च इन्द्रियप्रेरणाय तत्तदिन्द्रियेण संसृज्यते। तत्र तत्तदिन्द्रियदेवतानुकूल्ये विषयसंसृष्टैरिन्द्रियैः स्वावच्छिन्ने मनसि पूर्वं निर्विकल्पकमुत्पाद्यते। तदिन्द्रियदेशे बुद्धेर्वृत्तिः। ततो बुद्ध्याऽपि वृत्तिद्वारा तदनुग्रहे सविकल्पकं भवति। चाक्षुषे तु नयनकिरणा विषयपर्यन्तं गच्छन्ति। इन्द्रियान्तरे तु किरणाभावात् इन्द्रियेण सह विषयं मनः प्राप्नोति। तदा क्रमेण सहैव वा निर्विकल्पकं सविकल्पकञ्च तत्तदिन्द्रियसंसृष्टे मनसि उत्पद्यते। ज्ञानद्वयेऽपि विषयेन्द्रियस्पर्शादिकं व्यापारः। तत्र सविकल्पकं प्रमेयानन्त्यादनन्तविधं भवति। तत्रापि कारणान्तरसमवधानेन संशयविपर्यासनिश्चयस्मृतिभेदा जाग्रति भवन्ति। यथासम्भवं स्वप्नेऽपि ते सविकल्पकजन्यहानोपादानबुद्धौ तु विशेषः।

इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः।
चेतनां हरते बुद्धेः स्तम्बस्तोयमिव ह्रदम्॥

इति वाक्याद्विषयैरिन्द्रियाकर्षः, ततस्तैर्मनसः। तच्चाशुद्धमिति तत्र कामोत्पत्तौ उपादानबुद्धिः। तादृशे मनसि द्वेषोत्पत्तौ तु हानबुद्धिः। न चेद-मप्रयोजकम्; कामिनीकुचकुम्भदर्शनादौ चक्षुषः, शीतादिकालेषु ऊष्मादिना त्वचः, रागादियुक्तगीतेन श्रवणस्य, चन्दनादिगन्धेन घ्राणस्य, भक्षितस्यापि दध्यादेः पुनरास्वादनेन रसनस्य, तैश्च मनस आकर्षणस्य अनुभवसिद्धत्वात्। मनसश्च रूपद्वयं बाह्यमान्तरं चेति तृतीयस्कन्धे तत्त्वस्तुतौ 'परहृतान्तर्मनस' इत्यस्य सुबोधिन्यां स्थितम्। तत्र आन्तरं येन विषयेणेन्द्रियद्वाराऽऽकृष्यते तद्विषयिणी हानोपादानबुद्धिर्भवति; येन तु नाकृष्यते, तद्विषयिण्युपेक्षाबुद्धि-रिति युगपन्नानाबुद्धिसत्त्वम्। न च तत्र वेगाद्यौगपद्याभिमान एवेति वाच्यम्; एकाग्रदशायां पुस्तकदर्शने युगपन्नानाक्षरापेक्षास्थले वेगाङ्गीकारस्य अनुभव-विरुद्धत्वात् अतो रूपद्वयमेव युक्तमिति। यदा मनसोऽनाकर्षः, तदा उपेक्षा-बुद्धिः। अत एव तस्या न स्थिरत्वम्, अभ्यासाद्यभावात्। इदञ्च सर्वं ज्ञान-मन्तःकरणाद्यध्यासात् जीवात्मा स्वस्मिन्नभिमन्यते।

निर्विशेषाद्वैतरीत्या तु यद्यपि 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुत्या ब्रह्मचैतन्य-मेव मुख्यं ज्ञानम्। तच्च सर्वदाऽपरोक्षमेव, अवेद्यत्वे सत्यपरोक्षत्वेन स्वप्रकाश-

त्वात्; तथापि परोक्षापरोक्षज्ञानभेदविषयसम्बन्धावरणाभिभवाद्यर्थं वृत्त्यपेक्षा भवति। वृत्तिस्तु मायाऽन्तःकरणान्यतरपरिणामरूपा सन्निकर्षलिङ्गागमाद्यनेकहेतुका। तन्मनोऽसृजत इति श्रुत्या मनसः कार्यत्वावगमेन मध्यमपरिमाणत्वेन मनसः परिणामसम्भवेन तापकैर्भावैर्द्रवीभूतस्य तस्यैव परिणामभूतायां भगवदाकारवृत्तौ नित्यसिद्धाया भक्तेर्भगवदाकारताया वाऽभिव्यक्त्या तत्प्राकट्यम्। वेदान्तपरिभाषा-सिद्धान्तलेशसङ्ग्रहाऽद्वैतसिद्ध्यादिषु च वृत्त्यादिप्रतिकर्मव्यवस्था विस्तरेण उपपादिता।

'भक्तिरसायन'रीत्या तु—यथा स्वभावकठिनं जतुद्रव्यं तापकाग्न्यादिसम्बन्धेन जलमिव द्रुतं चीनांशुकशतक्षालितं निर्मलं भवति। तत्र निक्षिप्तहिङ्गुलादिरङ्गस्य सर्वांशप्रवेशः स्थिरता च भवति। पुनः काठिन्ये पुनर्द्रवतायां वा न रङ्गविश्लेषो जतुनो रङ्गस्य वाञ्छायां सत्यामपि। तथैव सावयवं मध्यमपरिमाणं चित्तमपि काम-क्रोध-भय-स्नेह-हर्ष-शोक-दयादिभिस्तापकैर्द्रुतं भवति, तच्छान्तौ पुनः कठिनं भवति। तत्र द्रुते चित्ते वस्तुनो यः स्वाकारः क्षिप्यते, स एव संस्कार-वासना-भाव-भावनादिशब्दैर्व्यपदिश्यते। द्रवीभावपूर्वकं चित्तस्य विषयाकारतापत्तिर्भवति। तदुक्तं भगवद्भक्तिरसायने—

मूषासिक्तं यथा ताम्रं तन्निभं दृश्यते तथा।
घटादि व्याप्नुवच्चित्तं तन्निभं जायते ध्रुवम्॥
चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम्।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते॥
काम - क्रोध - भय - स्नेह - हर्ष - शोक - दयादयः।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं तु तत्॥
द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना।
संस्कार - वासना - भाव - भावना - शब्दभागसौ॥
शिथिलीभावमात्रं तु मनो गच्छत्यतापकैः।
न तत्र वस्तु विशति वासनात्वेन किञ्चन॥
द्रवतायां प्रविष्टं सत् यत्काठिन्यदशां गतम्।
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति॥ इति।

यथा तत्तत्प्रतिमाद्याकारघटितोदरे मृदादिसंस्थानविशेषे मूषा (पुटपाकयन्त्रादि)-निषिक्तं द्रुतताम्रादि तत्तदुदरस्थसंस्थानाकारं भवति, तथैव रागद्वेषादिना द्रवीभूतं चित्तं चक्षुरादिद्वारा यत्रैव घटादिविषये सिक्तं भवति, तत्तद्विषयाकारं सम्पद्यते। यथा वा व्यञ्जकः सौराद्यालोको व्यङ्ग्यस्याकारतां याति, तथैव सर्वार्थव्यञ्जकत्वात् मनोऽपि तत्तद्व्यङ्ग्याकारं

शृङ्गाररससम्बन्धादन्येऽपि स्यू रसा इति ।
यथैवोपकृतिः सर्वा महतां स्वर्णनिर्मिता ॥
शृङ्गारस्य तथा कार्ये रसा एवोपयोगिनः ।
स एव.... साकारः सच्चिदानन्दो विरुद्धाखिलधर्मधृक् ॥
रूपवानखिलाधारो - ऽनन्तशक्तिस्वभावतः ।
अप्राकृतनिजानन्द - रूपदेहेन्द्रियादिकः ॥

स च संयोग-विरहभेदेन द्वेधा । तदुक्तम्—

रसे यथा तारतम्यं संयोगाद्विरहे तथा ।
तत्स्वरूपेऽपि मन्तव्यं भक्तानुभवतः स्फुटम् ॥
पूर्वोऽखिलस्य शास्त्रीयक्रियाधारस्तथोत्तरः ।
भावात्मा भावरूपैकक्रियामात्राश्रयः स्मृतः ॥
लोकवेदप्रसिद्धो हि पूर्वस्तस्मात्तथा मतः ।
श्रुतिसिद्धाखिलब्रह्म धर्माधारो जगत्कृतिः ॥
चतुर्व्यूहादिसहितः सर्वाश्चर्यमयो हरिः ।
उत्तरो गूढभावत्वात् भक्तैकहृदयस्थितः ॥
अनुभूतिप्रमाणैकवेद्यो मानान्तरातिगः ।
अनन्तकोटिलीलानामाश्रयो नित्यनूतनः ॥ इति ।

व्यूहयुक्तो हरिर्वसुदेवगृहेऽवतीर्णः । तदुक्तम्—

वासुदेवस्य कार्यं तु व्रजेऽप्यस्ति न संशयः ।
पूतनादिमहादैत्य - मुक्तिदानान्निरूप्यते ॥

राजन्यदैत्यमारणं सङ्कर्षणरूपेण, नन्दगेहे मायया सह मूलरूपः पुरुषोत्तमोऽवतीर्णः । मूलरूपस्य शुद्धसत्त्वात्मकव्यूहरूपस्य वसुदेवगृहे जन्म । स च तत्प्रतिकृतिरूपः ।

यशोदोत्सङ्गललित - मूलप्रतिकृतित्वतः ।
गमनानन्तरं तत्र भावरूपेण योजनम् ।
अत एव हि संयोगवियोगानुभवो मतः ॥ इति ।

रसोऽन्तःकरणे व्यज्यते । श्रीकृष्णरूपो रसोऽपि शुद्धसत्त्वात्मके वासुदेवे व्यज्यते । तदुक्तम्—

अतो हि वासुदेवाख्यः शुद्धसत्त्वात्मकः परः ।
आविर्भावाय कृष्णस्य प्रादुरासीदितीर्यते ॥ इति ।

भावात्मा तु भवत्येव शुद्धे सत्त्वे स्वयं प्रभुः ।
इति बोधयितुं वासुदेवोत्पत्तिर्निरूपिता ॥

वासुदेवस्तु भक्तानामन्तःकरणमूर्तिमान् ।
तमादौ स्वाश्रयीकृत्य भावात्मा व्यक्ततां गतः ॥ इति ।

'वासुदेवोऽत्रैवाविर्भूतः' इति सिद्धान्तसुबोधिनी; अन्यथा केवलमाया-जनितं स्तन्यं न पिबेत् । शुकेनात्मजत्वमुक्तम् । जाताह्लादत्वमहामनस्त्वञ्च नन्दस्य तदैवोपपद्यते। ब्रह्मणा वेदविदः कथं जातकर्मादिकं कारयेयुः? निःसाधनानां प्रभुपरत्वेन अभ्यर्हितत्वेन च तेषामुद्धारार्थं नन्दगृहे वासुदेवस्य जन्म । वसुदेवसुतत्वेन क्षत्रियवंशकृत्यम् । स्वदत्त-श्रुतिगणवर-सार्थकत्वं नन्दगृहे । लीलार्थं प्राकट्यं तत्रैव। तत एव मायासाहित्येन अवतारः । वस्त्रपरिवेष्टितस्य महामहेन्द्रनीलमणेरिव मायावृतस्य भगवत आविर्भावः। वसुदेवद्वारा तदपसारणेन कंसज्ञापनादिकार्यञ्च । रसात्मनः सालम्बनता युक्ता । तेन वासुदेवस्यालम्बनता, 'तवात्मजो वासुदेव' इति वसुदेवोक्तत्वात् । इत्थञ्च भगवतो भावानामपि तत्स्वरूपानतिरिक्तत्वात् तेन रसस्य यावती मर्यादा सर्वाऽपि भगवत्यस्तीति मन्तव्यम् । अन्यथा रसत्वव्याहतिः ।

किञ्च—संयोगे धर्मसहितो धर्मिरूपो भगवान् । विप्रयोगेऽभिव्यक्त-धर्मराहित्येऽपि भाव्यमानधर्मसत्त्वेन तत्राप्यालम्बनद्वयस्थितिकत्वमस्त्येव । अत एव 'आत्तगजेन्द्रलीलः', 'श्रान्तो गजीभिरिभराडिव भिन्नसेतुः' इत्यादि-दृष्टान्ताः सङ्गच्छन्ते । भगवान् भक्तेष्वनुग्रहातिशयेन स्वस्वरूपमर्यादामति-क्रम्यापि तदधीनत्वं गच्छति । तदभीष्टलीलां कुर्वन् सर्वभावान् भजति । भगवदतिरिक्तस्य सर्वस्यैव मर्यादापराधीनत्वं भवति। भिन्नसेतुत्वं नोपपद्यते, भगवत एव तदुपपत्तेः ।

लोकेऽपि परं ब्रह्मैव रसशास्त्रोक्तप्रणाड्या हृदि आविर्भूतं सद् 'रस' इत्याख्यायते । रसेषु शृङ्गारस्य प्राधान्यात् तस्य च रत्याख्यस्थायिभाव-स्वरूपत्वाद् रसरूपत्वं मन्तव्यम् । तत्र व्रजसुन्दरीभावालम्बन-विभावत्वेन तन्निष्ठस्थायिभावरूपत्वेन च भगवतो रसरूपत्वं रसवत्त्वञ्च । यद्यपि च भगवतो मानसीनत्वेन अतिगुप्तत्वमेव । बहिराविर्भूतस्यापि आसक्तिभ्रम-न्यायेन बहिः प्रतीतत्वेऽपि गुप्तत्वमेव ।

ननु शृङ्गारस्य परस्परसाकाङ्क्षस्त्री-पुंव्यक्त्यात्मकालम्बनद्वयाधीन-स्थितिकत्वात् तत्र तथात्वमेवाङ्गीकर्तव्यम् । तच्च भगवतो रसत्वे विरुद्धयते । एकालम्बनकत्वेन रसाभासत्वप्रसङ्गादिति चेन्न । आलम्बनत्वस्यापि तत्र सत्त्वात् । रसत्वेऽपि व्रजनारीणामालम्बनत्वेन रसमर्यादया रसवत्त्वस्या-प्युपपत्तेः । भगवानपि तासु तादृशभाववानिति तद्वत्त्वं तद्रूपत्वञ्च । तदुक्तम्—

मणिः स्पर्शेन ताम्रादिसौवर्णमिव तत्त्वतः ।
अतस्तत्र कृतं सर्वं साक्षात् कृष्णे कृतं भवेत् ॥ इति ।

यथा स्पर्शमणियोगान् ताम्रादि तत्त्वतः सौवर्णं सुवर्णमेव सौवर्णं भवति तथैव मूर्तिषु भगवदावेशाद् भगवद्रूपतैव जायते। तेन मूर्तौ कृतमर्चनादिकं भगवत्येव कृतं भवतीति भावः।

यद्यपि स्पर्शमणियोगात् ताम्रादीनां सुवर्णत्वमेव, न स्पर्शमणित्वम्; तथाप्यत्र तु भगवद्योगाद् भगवत्त्वमेव जायते। तथैव भक्तचेतोऽपि रसामृतमूर्तेः भगवतोऽनुसन्धानादिना रसात्मकं भवति। केषाञ्चिद्रीत्या यथा पारद-निघर्षणेन गन्धकस्य रसरूपतापत्तिस्तथैव निखिलरसामृतमूर्तेर्भगवतः सन्धानेन चेतसोऽपि रसरूपता।

अथवा—यथा निरावरणाग्निना काष्ठेन संसृष्टस्य सावरणाग्नेरपि काष्ठस्य निरावरणाग्निरूपता सम्पद्यते तथैव निरावरणस्य भगवतः समवाये चेतसोऽपि निरावरण-रसरूपतापत्तिः। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते इति रीत्या सर्वस्यैव प्रपञ्चस्य आनन्दरूप-ब्रह्मकार्यत्वेन आनन्दरूपता यद्यपि स्वाभाविकी; तथापि मायाशक्त्या सा तिरोधीयते। निरावरण-ब्रह्म-संसर्गेण तु तिरोधानं यत्रापनीयते, तत्र सा व्यज्यते।

सर्वं चैतत् लोकाभिप्रायेणोक्तम्। भगवांस्तु सच्चिदानन्दरससारसरोजस्थानीयः। नीरसरोवरे पार्थिवात् पङ्काज्जातस्य पङ्कजस्य यथा सौन्दर्यमाधुर्योदयस्ततोऽप्याधिक्येन क्षीरसरोवरे नवनीतमयात् पङ्काज्जाते पङ्कजे तत्सर्वमुपपद्यते। अमृतरससारसरोवरे तत्सारसर्वस्वरूपात् पङ्काज्जाते पङ्कजे किमु वक्तव्यम्? सचिदानन्दरससारसरोवरात् तत्सारसर्वस्वभूतात पङ्काज्जाते पङ्कजे ततोऽतितमां माधुर्यादिकं व्यज्यते। तदुक्तम्—

अनाघ्रातं भृङ्गैरनपहृतसौगन्ध्यमनिलै-
रनुत्पन्नं नीरेष्वनुपहतमूर्मीकणभरैः।
अदृष्टं केनापि क्वचन च चिदानन्दसरसो
यशोदायाः क्रोडे कुवलयमिवौजस्तदभवत्॥ इति।

व्रजस्यापि पूर्णानुरागरससार-सरोजरूपत्वम्। तत्र गौरीणां व्रजसीमन्तिनीनां पीतकिञ्जल्करूपत्वम्। तत्रत्य-परागस्य श्रीकृष्णरूपत्वम्। तन्मकरन्दस्य रासेश्वरीरूपत्वम्।

श्रीहरिरायमुक्तावलीरीत्या पूर्वं (१) स्वरूपभावना, श्रुतमात्रे योगवचिन्तनम्। विरहार्तिसाहित्येन भक्तिमार्गीयत्वम्। ततो (२) लीलासहिते हृदि प्रविष्टे तद्विप्रयोगेण प्रणयानुभूतलीलाभावना। लीलाभावनायां तद्रूपापत्तिः। आसक्तिभ्रमन्यायेन सर्वत्र क्रियासु ज्ञानेषु प्रभुलीलामेव प्रतियन्तीति तदात्मकत्वम्। तथा चोक्तम्—

परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ।
तदेवाऽऽस्वादयत्यन्तः परसङ्गरसायनम् ॥ इति ।

(३) भावभावनं तृतीयम् नवीनतया रसपरवशं चेत उत्पादयति । भावः प्रेमाख्यो गूढभावः । येन वा स्वरूपादिसम्बन्धिसुखानुभवः । सर्वोऽपि क्षुधान्नरसानुभव इव स भावः स्वविषयं स्वरूपं लीलां वा प्राप्य तदानन्दं शीतलं जलमिवानुभूय किञ्चिच्छान्तो भवन् न देहेन्द्रियादिकं दाहयति । तदभावे देहादिनूतनताभावेन पूर्णवियोगात्मककेवलभावानुभवो न भवति, संयोग-सुखतारतम्येन तत्सुखानुभूतितारतम्यवत् । तापतारतम्येन केवलभावानुभवतारतम्यम् । तापश्च स्वास्थ्यलेशेऽपि ह्रसति । भगवत्सम्बन्धिज्ञानगुणादि तु तापहारकम् । यथा तत्सम्बन्धिनामेव तत्संयोगानुभवः, तथैव तद्भिन्नानां तदसम्बद्धानामेव वियोगात्मककेवलभावानुभवः ।

ननु तीव्रेण विरहाग्निना देहादिनाशे कथं सर्वांशेन तदनुभव इति चेन्न । विरहस्यापि रसरूपत्वेन तेनैव तद्रक्षणात् । स च पूर्वदेहं स्वतापेन संशोध्य वह्निसम्बन्धेन काष्ठमिव तेजोमयं विधाय तदात्मकत्वात् तद्रक्षणञ्च विधाय मूर्तिवदधिष्ठानत्वेन तमधिष्ठाय तत्र भावात्मा बहिः प्रकटसमानाकारः सर्वलीलाविशिष्टः प्रविशति ।

स च विरहात्मा दुःखेनैवानुभूयते । यथा ब्रह्मानन्द आत्मनैव, स्वर्गो विशिष्टदेहेनैव, भजनानन्दोऽलौकिकदेहादिभिरेव चाऽनुभूयते, नान्यथा तद्वत्, स्वरूपलीला-गुण-स्वास्थ्यादिप्रतिबन्धकाप्रतिबद्धः केवलस्तापात्मको भावो भवति । स एव स्वतन्त्रभक्त्यादिकम् । यत्र भावातिरिक्तसर्वनैरपेक्ष्यम्, तत्सिद्धौ भावनैव मुख्या, भावो भावनया सिद्ध इति वाक्यात् ।

पञ्चमे मर्मवर्णने श्रीहरिरायमुक्तावल्याम्—

पञ्चमं कृष्णलीलाया भावनं हृदि सर्वथा ।
तद्भावेन प्रभुः प्राप्तभावात्मा तदभेदतः ॥
नहि लीलाविचारे तु स्वरूपादतिरिच्यते ।
स्वसर्वधर्मरूपत्वात् प्रभोर्भेदो न युज्यते ॥
तथाप्याविष्कृते रूपे भेदबुद्धिर्निजेच्छया ।
लोकदृष्ट्या यथा सूर्ये किरणेषूदिते सति ॥
धर्मधर्मिप्रतीतिर्हि प्राकट्ये रूपलीलयोः ।
अन्तःस्थितौ तु लीलैव स्वरूपमिति निश्चयः ॥
गुणगाने तथाचार्यैरासक्तिवशतो हरौ ।
जाता तन्मयता क्रीडामयतैव निरूपिता ॥

कृष्णः प्रविशति प्रीतो लीलया हृदयस्थितौ ।
तदात्मा सकलैः स्त्रीयस्वरूपैररिति निश्चयः ॥ इति ।

हृदि श्रीकृष्णलीलाभावनम् । सदानन्दस्वरूपस्य भगवतो रसमयीनां नित्यनवनवायमानलीलानां भावनया प्रभुः सद्यो हृद्यवरुद्ध्यते ।

भावात्मा भगवान् भावेनैवोपलभ्यते, तदभिन्नत्वात् । सदानन्दसिन्धोः भगवतस्तरङ्गस्थानीया लीला अपि तत्स्वरूपभूताः । सर्वधर्मरूपोऽपि भगवानेव । तेन प्रभोर्लीलानाञ्च स्वाभाविकोऽभेद एव । यथोदिते सूर्ये तत्किरणेषु च लोकदृष्ट्या भेदोऽपि भवति, तथैव भगवदिच्छयैव आविष्कृते रूपे स्वरूपलीलयोः धर्मधर्मिभावेन भेदोऽपि लौकिको भवत्येव । तदासक्त्या गुणगानेन प्रेममार्गाचार्यभूता गोपाङ्गनाः क्रीडामय्यः सञ्जाताः ।

षष्ठं व्रजस्थितानां यो भावः स्मर्यो वियोगिनाम् ।
ततो भावस्य सम्प्राप्तिर्भविताऽतो हरेर्भवेत् ॥
अवस्याक्लेशभावो वा तत्सम्बन्धी विचिन्त्यताम् ।
न स्वरूपं पृथग् यस्मात् न तत्र विशते मनः ॥
तत्रविष्टतया नैव स्वरूपं भिद्यते ततः ।
अतोऽन्तःस्थितकृष्णास्ताः सततं हृदि भावयेत् ॥
तापक्लेशानन्द इति तत्स्वरूपं निरूप्यते ।
कामसर्वात्मभावो हि भगवत्प्राप्तिसाधनम् ॥
कामः सापेक्षतारूपः उत्तरस्तदभाववान् ।
विरहस्थायिभावत्वात् स्थाय्यात्मा स निगद्यते ॥
सम्बन्धस्यापि नापेक्षा तापेनैवाखिलोदयः ।
विलक्षणस्तत्क्लेशोऽपि कामजातात् तथाऽपरः ॥ इति ।

यथा योगे वीतरागविषयं चित्तं स्थितिपदं लभते तथा श्रीकृष्णविप्रयोगजन्यतीव्रतापवतीनां व्रजसीमन्तिनीनां भावनया तदन्तस्थः क्लेशमयस्तासां ताप एव भावितो भवति । विप्रलम्भरतिरूपस्थायिवत्यस्ताः श्रीकृष्णान्तरस्था एव, विप्रलम्भस्थायिभावस्य धर्मिकृष्णस्वरूपत्वात् । तत्स्वरूपत्वादेव तत्क्लेशतापस्यापि आनन्दरूपता । कामसर्वात्मभावयोरुभयोरपि भगवत्प्राप्तिसाधनत्वेन प्रसिद्धिः । प्रथमः सापेक्षतारूपो द्वितीयस्तु निरपेक्षतारूप एव । विरहस्थायिभावस्यैव तत्र ध्येयत्वेन तत्सम्बन्धोऽप्यत्र नापेक्षितः । विरहतापक्लेशेनैवात्र सर्वोदयः ।

रसवत्ता रसवतां हृदि संभवति स्वतः ।
भगवद्रसवत्यस्तु स्वामिन्यो नात्र संशयः ॥

अतस्तद्धृदये सक्तः 'कृषि'शब्दान्निरूप्यते ।
रसानन्दश्च तत्रैव 'ण'कारेणैव बोध्यते ॥

अतः कृष्णः सदानन्दः स्वामिनीहृदयस्थितः ।
सत्ता भगवतो वाच्या नित्या त्रैकालिकी यतः ॥

आनन्दश्च तथोपाधिरहितो नित्य एव हि ।
अतो हि स्थायिभावात्मा प्रभुर्वाच्यः श्रुतेर्मतः ॥

स भावः प्रकृतेर्वाच्यो यशोदोत्सङ्गलालितः ।
तदङ्कुरस्तदुत्पन्नः कामात्मा ह्यधिदैवतम् ॥

तद्गतो यो रसः प्रोक्तस्तदेतत्त्रितयं पुनः ।
मिलितं कृष्णशब्दार्थो भावात्मा मन्मथो रसः ॥

तल्लक्षणात् स शृङ्गारः साकारः श्रुतिबोधितः ।
भावेनान्तःस्थितेनैव पोष्यतेऽन्तर्गतो रसः ॥

अतो हि स्वामिनीभावे रसात्मपरिपोषणम् ।
इयमेव हरेर्लीला सर्वगूढा निरूप्यते ॥

यदन्तःस्थितरूपेण भावैर्विक्रीडनं हृदि ।
तद्विशिष्टः प्रभुः कृष्णपदार्थः परिभाव्यताम् ॥

रसस्तु रसवतां हृदि प्रतिष्ठितो भवति। भगवद्रूपो रसस्तु स्वामिनीषु स्थितः। तेनैव तासां हृदयस्थः स्थायिभावात्मको रसः सत्तात्मको भावरूपः कृषशब्दार्थः। तेन सदानन्दः 'कृष्ण'शब्दार्थः। तत्रैव स्थितो रसानन्दस्तु णकारार्थः। तेन सदानन्दः कृष्णशब्दार्थः सिद्धो भवति। त्रिकालाबाध्यासत्ता निरुपाधिक आनन्दश्च स्थायिभावरसस्वरूपे कृष्णेऽन्तर्भवति। रसो वै सः इति श्रुतिः परमात्मानं रसं वक्ति। भरतोऽपि स्थायिभावं रसमाह। स स्थायिभाव एवात्र यशोदोत्सङ्गलालितः श्रीकृष्ण उक्तः। भाव एव तत्त्वं भवति। तस्य भावस्तत्त्वमिति। तस्य भावस्त्वतलौ (५.१.११९)इति सूत्रोक्तदिशा तेषां तेषां पदार्थानां भावस्यैव तत्त्वपदवाच्यता भवति। स च भावो भगवत्येव पर्यवसितो भवति। तथा चोक्तम्—

सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः ।
तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम् ॥

कार्याकारेण परिणामं प्राप्नुवत् कारणं तस्मिन् भवति। कारणे सर्वेषां कार्याणां भावः, सत्ता स्वकारणे पर्यवस्यति। कारणत्वस्यापि पर्यवसानं भगवत्येवेति तस्यापि भावो भगवत्येव पर्यवस्यति। तदुक्तमाचार्यैः—

तत्त्वं हि सकलो भावो स्थायी स परमो मतः ।
यः सर्वान्तर्गूढभावः स्थायी कृष्णो निरूपितः ।
तत्प्राप्तिर्भावसम्प्राप्तिर्नान्यदित्येष निश्चयः ॥ इति ।

भगवत्कार्यः प्रपञ्चो नित्यः, तदात्मकश्च वेदान्तवेद्यः कूटस्थः सच्चिदानन्दो व्यक्तो व्यक्ताश्रयः प्रपञ्चान्तःस्थः । स च पुरुषोत्तमस्याङ्घ्रिः, तल्लोकस्तदासनञ्च कूटस्थः । सच्चिदानन्दोऽव्यक्तो व्यक्तसमाश्रयः पुरुषोत्तमाङ्घ्रिः, तल्लोकस्तस्य चासनम् । तेन पुरुषोत्तमोऽक्षरब्रह्मान्तर्गतः, स रसात्मकः शृङ्गारात्मकः । तदन्तःस्थो लोकवेदाप्रथितः पुरुषोत्तमः । 'लोकवेदप्रथित' इत्येव-पाठो युक्तो न 'लोकवेदाप्रथितः', अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः इति विरोधात् । सर्वलीलादिसामग्रीसहित आनन्दमयो भक्तयुतः संयोगात्मकः, तदन्तःस्थस्तु वियोगात्मकः । तत्र या काचित् सामग्री साऽपि रसरूपैव । रसात्मकैरिन्द्रियैरेव तदुपलब्धिः । तत्सेवाऽपि भावात्मिकैव । तेन स एव सर्वान्तरः । भावेनैव लीलाविशिष्टस्य विरहात्मनः संयोगोऽपि ।

तस्य या काचिदेव स्यात् सामग्री सापि तादृशी ।
तद्रूपानुभवोऽप्यत्रेन्द्रियैरपि तथाविधैः ॥
भावात्मकत्वाद्रूपस्य तस्य सेवाऽपि मानसी ।
तत्संयोगोऽपि भावेन लीलाभिर्विरहात्मनः ।
सर्वान्तरञ्चैतदेव रूपं सद्भिर्विबुद्ध्यताम् ॥ इति ।

भगवान् स्वामिनीसहित एव पूर्णरसात्मकः, तस्य आलम्बनविभावद्वय-संयोगनिष्पन्नत्वात् । तदेतत्सर्वं मुक्तावल्यां स्फुटम्—

श्रीकृष्णः सच्चिदानन्दो गूढं ब्रह्म परात्परः ।
गूढस्त्रीभावभावात्मा स्वामिनीहृदयस्थितः ॥
स्थायिभावात्मकः सर्वलीलारूपफलात्मकः ।
स्वामिनी - वृन्दमध्यस्थस्तदेक - रसमग्नकः ॥
जीववत्तदधीनश्च लभ्यः सर्वात्मभावकैः ।
लोकवेदाप्रसिद्धश्च पुरुषोत्तमनामकः ॥
संयोगे राधिकायुक्तः संयोगात्मा तदात्मकः ।
कामजातस्तु यः क्लेशः स शाम्येत् स्पर्शनादिभिः ।
सर्वात्मभावसंभूतस्तैर्भवे द्विगुणस्तथा ।
विरहे भावनास्पर्शः क्लेशवृद्धिकरो यतः ।
लीलोदये तापभावाद् द्विगुणः सोऽनुभूयते ॥
अतो विलक्षणक्लेशानन्दोऽपि हि तथाविधः ।
कामातितः परं कृष्णसायुज्यं नित्ययोगयुक् ॥

पुरुषोत्तमसम्बन्धो ह्यन्तर्गृहगतास्विव ।
सर्वात्मभावक्लेशेन संयोगेन कृतार्थता ।
क्लेश एव हि संयोगाधिकानन्दानुभूतितः ।
यथा प्राकृतदेहेषु नियता कामसंस्थितिः ।
तथाऽलौकिकदेहेषु सर्वभावप्रतिष्ठितिः ॥ इति ।

संयोगात्मक-रसध्यानापेक्षयाऽपि विरहात्मक-क्लेशचिन्तनं बहुमतम् । सर्वात्मभावोऽपि मुक्तावल्यां निरूपितः, कामात् सर्वात्मभावभेदोऽपि तत्रैव—

अत एव निरूप्यन्ते निष्कामास्ते व्रजस्थिताः ।
तादृशैर्भगवल्लीला सर्वथैव हि युज्यते ॥
कामाद्विलक्षणः सर्वभावस्तत्क्लेशभेदतः ।
संयोग-विप्रयोगाभ्यां तदानन्दोऽपि भिद्यते ॥
सर्वेषामिन्द्रियाणां च देहादीनां तथा पुनः ।
आत्मभावो भगवति सर्वभावः स कथ्यते ॥
आत्मभावश्च सर्वत्र स्वसम्बन्धविचारणम् ।
न स्वसम्बन्धितास्फूर्तिरस्माकं भगवानिति ॥ इति ।

अत एव तद्भावे देहाद्यस्फूर्तिः, विषयत्यागोऽपि सर्वभावसाधनम् ।

कामभावे कामफले भावतो नहि सर्वता ।
अहं भगवतः सर्वं इति सर्वात्मभावनम् ।
प्रभुर्ममेति भावो हि कामभावो यतो मतः ॥
सर्वात्मभावोऽधिकृतो विरहेणेति तद्वचः ।
अतः सर्वात्मभावो हि त्यागात्मोपेक्षया युतः ॥
भावस्वरूपफलकः स्वसम्बन्धप्रकाशकः ।
देहादिस्फूर्तिरहितो विषयत्यागपूर्वकः ॥
भावात्मकामसम्बन्धि - रमणादिक्रियाः सदा ।
स्वतन्त्रभक्तिशब्दाख्या फलात्मा ज्ञायतां जनैः ।
प्रवृत्तिः कामभावेऽस्ति निवृत्तिस्तु द्वितीयके ॥ इति ।

प्रपञ्चासक्तिनिवृत्त्या भगवत्सम्बन्धो भवति, उभयोरप्यधिकारभेदेन फलभेदोऽपि । यथा—

श्रुतयोऽग्निकुमारास्तु स्वात्मरूपव्रजस्थिताः ।
आत्यन्तिकस्वविरहफलभाजस्तथा कृताः ॥
अन्तर्गृहगताः स्वस्मिन् क्रियारूपेण वेशिताः ।
तेषां स्वावसरें स्वस्मान्निष्कास्य रमणं पुनः ।
प्रवेश्य नित्यसंयोगरूपेणैव व्यवस्थितिः ॥ इति ।

ऋषिरूपाणाम् अग्निकुमाराणां तु विरहदानम् । अन्तर्गृहगतानां नित्य-संयोगदानम् । विरहभावेऽपि क्वचिद्बहिरपि तत्प्रादुर्भावः ।

श्रुतीनामग्निपुत्राणां प्रथमाधिकृतिर्यतः ।
अतः क्वचित् क्वचित्तस्याऽऽविर्भावोऽत्र निरूप्यते ॥
यथा स्वरूपसेवायां कदाचिद् रूपदर्शनम् ।
देहस्य भौतिकत्वेन तथाऽत्रापि विबुद्धयताम् ॥
लीलां कृत्वा प्रमाणादिफलप्रकरणावधि ।
निरोधेन तथाऽऽविद्यां सपर्यां विनिवार्य च ॥
स्वानन्दं पूरयित्वैव शरीरमनआदिषु ।
श्रुतयोऽग्निकुमाराश्च निर्दोषानन्दरूपिणः ॥
कृतास्तेषां ततो भावं केवलं विरहात्मकम् ।
आत्यन्तिकवियोगाख्यमुक्त्याऽपि फलमूर्ध्वगम् ॥
फलं दत्त्वा भावरूपा व्रजस्थाः स्वस्थिताः कृताः ।
अक्रूरनयने प्रोक्ता अन्यथाभावभाविताः ॥
सिद्धं विदित्वा भगवान् तत्प्राकट्यप्रयोजनम् ।
प्रायः प्राणानिति श्लोके तास्तत्रैव ह्यनूदिताः ॥

अक्रूरप्रसङ्गे—

मुख्यशक्तिस्वरूपं तु स्त्रीभावो हरिरुच्यते ।
तत्र स्त्र्यंशः परा शक्तिर्भावांशः कृष्णशब्दितः ॥
यथा हि सर्वभावात्मा कृष्णः सापि च तादृशी ।
विशिष्टस्यैव सर्वेषां कृष्णस्य हृदये स्थितेः ॥
द्वयोर्मिलितयोर्वाच्यं मन्मथत्वमभेदतः ।
द्विपत्रत्वाद्रसस्यालम्बने द्वैविध्यमुच्यते ॥ इति ।

रसात्मकस्वरूपात्मकभेदे गोपीजनसमन्वितो भगवान् व्रजे गोवर्धने च विलसति । यथा अग्निसुतान् ऋषींश्च अनुगृह्य स्वरूपात्मभक्तावेशं विधाय तद्रूपापन्नो मूललीलापरायणः पूर्वरूपे स्वयमाविश्य तत्तल्लीलाः करोति, तथैव सर्वासु श्रुतिषु भावात्मा स्वीयरूपतां सम्पाद्य मूलरूपेण तादृशीषु रमते । एकत्र उत्तरदलात्मकविरहभावात्मना अपरत्र पूर्वदलात्मक-संयोगात्मना रमते । मुख्यशक्तिस्वरूपं तु स्त्रीभावो हरिरुच्यते । तत्र स्त्र्यंश परा शक्तिः इति ।

यदान्यविहितं दुःखं भक्तानामिह जायते ।
तदासुरविनाशायाऽवतरत्यञ्जसा हरिः ॥

कामेन यत्र तद्दुःखं स्वरूपविषयं मतम् ।
आविर्भावो भवेत्तत्र हरेः पूर्णरसात्मनः ॥
यत्रैव सहजस्नेहो दुःखं तत्र स्वयं हरिः ।
मूलरूपेण करुणस्तदर्थं प्रकटो भवेत् ॥ इति ।

ब्रह्मादिप्रार्थनया यथा स देवकीवसुदेवयोर्जातस्तथैव श्रुतिरूपाणां सहजस्नेहतो ह्यभूत् ।

दुःखं तु विरहादेव जायते नान्यथा पुनः ।
विरहोऽपि तदा दुःखहेतुर्यदि हृदि स्फुरेत् ॥
तत्स्फूर्तिस्तेन भगवत्सम्बन्धो द्विविधो मतः ।
देहभावविभेदेन तत्राऽऽद्यो हरिणा स्मृतः ॥
अवतारो द्वितीयः स्यात् परोक्षाध्यक्षयोरपि ।
यथा पत्या स्त्रियाभावसम्बन्धो नहि देहजः ॥
स जायते निरुपाधिः स्वसर्वस्वनिवेदनात् ।
यथा कन्या स्वसर्वस्वं निवेद्य च निजाग्रहात् ॥
गृह्णाति तद्गतं भावं परोक्षे तापरूपिणम् ।
तथाऽत्रापि स्वसर्वस्वं निवेद्य स्वाग्रहादपि ॥
ऊरीकृत्य च तद्भावं परोक्षे तापरूपिणम् ।
तस्यानुभावतः कृष्णप्राकट्यं हृदये मतम् ॥ इति ।

अन्यथा व्रजभक्तानां संयोगरसानुभावनं न स्यान, मूले तदनाविर्भावात् । संयोगरसानन्तरं स्वतन्त्रविरहरसानुभवश्च न स्यात् । द्वितीयालम्बनाविर्भावे तु आवरणं विग्रह एव. सितारसस्य तन्मूर्तिरिव मूर्तीभूते रसत्वस्याऽस्फूर्तेः । तेनोभयोरपि अनन्तमूर्तित्वाद्रूपान्तराणि संयोगसिद्धये अप्राकृताखिलसामग्रीसहितस्य प्रादुर्भावः । रसस्य तु वासुदेव एवाधिष्ठानम् । माया तु रसपोषाय इतराज्ञानाय मध्यस्थतया तिष्ठति ।

ननु मायाया मथुरागमने तदावरणीयस्यापि तत्र गमनं स्यादिति चेन्न । गमनेऽपि तत्रावस्थानाभावात् । अत एव कंसकरादुड्डीय पुनर्व्रजे गमनम् । तत्रापि योगमायाया समीपस्थितिरेव सर्वथा तदावरणम् । श्रुतीनामग्निकुमाराणाञ्च हृदये 'भावैरङ्कुरितमि'त्यादिरीत्या यद्रूपं तद्भावात्मकं तदपि तासां नन्दगृहे समागमनेन दर्शनानन्तरं तत्रायातम् । तथा च नन्दगृहे वासुदेवाधिष्ठानः पूर्वं पश्चात्तदागमनानन्तरं निरधिष्ठानस्तद्भावोऽप्यागत इति द्वयमप्यत्र रूपे सङ्क्रातमिति यथाधिकारं तदनुभवः ।

निःसाधनफलात्मा च प्रादुर्भूतोऽस्ति गोकुले ।
अतो वयं हि निश्चिन्ता जाता सर्वत एव हि ॥ इति ।

भावात्मकस्तु भगवान् स्वभक्तैस्तास्ता लीलाः कुर्वन् सदैव व्रजे रमते। 'जयति जननिवास' इति लीलासहितस्य वर्तमानत्वमेवोक्तम्। प्रभासीय-कथा तु व्यामोहिकैव। तस्यैवांशैरन्यानि कार्याणि। यथा देवक्यां देवरूपिण्यां हरेर्जन्म। प्रद्युम्नजन्मगर्भस्थितिस्तु तेनैव रूपेण धर्मरक्षारूपदेवकार्यार्थम्। अनिरुद्धः मनांस्यासन् प्रसन्नानि इति मनोऽधिष्ठातोत्पन्नः। सङ्कर्षणः सलिलशायी विष्णुः निशीथे तम उद्भूते जायमाने जनार्दने इति उत्पन्नः। मुक्तिदानं तु वासुदेवादेव। आविरासीदिति धर्मसहितः पुरुषोत्तमः प्रादुर्भूतः।

तमद्भुतमिति तस्यैव रूपवर्णनम्, प्रद्युम्नेस्य तदसम्भवात्। अर्जुनसाहित्येन सितकृष्णकेशरूपसङ्कर्षणकलागमनम्, ताविमौ भगवत्तातहरेरंशाविहागतौ इति वाक्यात्। केवलपुरुषत्तमो मायासहितो नन्दगेहेऽवतीर्णः। वसुदेवगृहे प्रादुर्भूतं धर्मविशिष्टं स्वस्वरूपं धर्मिरूपेऽन्तर्भावयति। प्रागयं वसुदेवस्य क्वचिज्जातः, तस्मान्नन्दात्मजोऽयं ते, देवकीजठरभूरुडुराजः। एतेन तत्रापि मूलरूपप्रादुर्भावः। यद्धिया त उरुगाय विभावयन्ति इत्युक्तेः मायावृतत्वात् पृथक् तदुत्पत्तिर्नोक्ता, मायोत्पत्त्यैव तदुत्पत्तिनिरूपणात्, शक्तिमन्तमपहाय शक्तेरनवस्थानात्। रसात्मकत्वबोधनाय सावरणप्रादुर्भावः। पीताम्बरावरणञ्च तदेव। तस्य चालम्बनविभावद्वयभेदेन उभयरूपत्वमाविर्भाव्यलीलासृष्टौ कृपया केषाञ्चित् संयोगरसानुभावनम्। तेन च पोषकेण केवलविरहरसञ्च दातुं नन्दगृहे वृषभानुगृहे च प्रादुर्भावः।

ततो दिवानिशं तस्य वासना हृदये यदि।
तदा रसः समग्रोऽपि प्रादुर्भूतो हरिर्हृदि॥
प्रपञ्चास्मरणैस्तस्य सर्वदाऽनुभवः फलम्।
आच्छादनं माययैव लोकवेदप्रदर्शनैः॥ इति।

व्रजसीमन्तिनीनां सहजोऽनुरागः, जातमात्रे तथाभावात्। यथा अदृष्टेऽपि चन्द्रोदये कुमुदिनीविकासस्तथैव कृष्णजन्ममात्रेण स्वस्वमातॄणामुत्सङ्गेषु स्थितानामेव तासां प्रेमोल्लासः। उत्सवे तद्दर्शनात् सोऽपि तत्र सङ्गतः इत्यप्युक्तमेव। यथा—

अनुरागस्तु सहजस्तासामेवेति निश्चयात्।
जातमात्रे तथाभावात् सूचितश्चोत्सवे पुनः॥

अवतारदशायां स्वरूपदर्शनजस्यानुरागस्य सम्भवेऽपि तदभावान्न तत्सम्भवः। ततस्तदानीं श्रवणमात्रजन्यत्वं सम्भवति। तेन शास्त्रद्वारैव मोचकत्वमुक्तम्।

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥ इति।

तेनैव श्रवणं मुख्यं साधनम्। मम सर्वं हि भगवान् अहं भगवतः पुनः इति शरणे चात्मसम्बन्धे भेदो निरूपितः। तदीयत्वेऽहंतानिवृत्तिः, अन्यत्र ममत्वनिवृत्तिः।

तस्मादेव तदीयानां सम्बद्धानाञ्च सर्वशः।
जातभावाङ्कुराणाञ्च तापक्लेशजुषामपि॥
महापुरुषमुखतः श्रवणाज्जायते रुचिः।
काव्यश्रवणवल्लोके स भावः पल्लवप्रभः॥
कोमलत्वाद् द्विरूपत्वाद् दृढताभावतः परम्।
ततस्तत्सेवनाच्छास्त्रजोषणाज्जायते दृढा॥
स एव कलिकारूपो भावस्तत्र निरूपितः।
स 'भावस्तापसम्बन्धाद्विचित्रो हृदये भवेत्।
कमलं स्फुटति प्रायः सूर्यसम्बन्धतो यथा॥ इति।

तास्वपि प्रसादशक्तिप्रवेशेन अलौकिकं दिव्यं स्त्रीभावं दत्त्वा स्वस्वरूपस्य तत्सम्बन्धित्वं विधाय स्वरूपात्मिकाभिः सह रमते। तेन नेयं काम-लीला, किन्तु स्वरूपानन्द-लीला। तेनैव तच्छ्रोतुरपि निष्कामतोक्ता।

विक्रीडितं व्रजवधूभिरिदं च विष्णोः
श्रद्धान्वितोऽनुश्रृणुयादथ वर्णयेद्यः।
भक्तिं परां भगवति प्रतिलभ्य कामं
हृद्रोगमाश्वपहिनोत्यचिरेण धीरः॥

यथा मायासामान्यस्य व्यामोहजनकत्वेऽपि भगवदधीनायास्तस्याः श्रवणवर्णनादिकं मायातरणहेतुभावं भजते, तद्वत्।

मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः।
श्रद्धया शृण्वतो राजन् माययात्मा न मुह्यति॥

इति भागवत-वचनात्। तदप्युक्तम्—

भगवच्चरितं सर्वं यतो निष्काममीर्यते।
अतः कामस्य नोद्बोधः ततः शुकवचः स्फुटम्॥ इति।

विरहानुभवार्थं स्वास्थ्यहेतूनां ज्ञानगुणलीलादीनामप्यत्र त्यागइष्टः। भागवता धर्मा अपि त्याज्याः। देहरक्षाऽपि न कार्या। ततः परं विरहेण स्वस्फूर्तिरपि नश्यति। निःसाधनत्वानुसन्धानपूर्वकं शरणमेवैकं साधनम्। अतो भगवतो निःसाधनाधीशत्वमप्युक्तम्।

मर्यादामार्गीये संन्यासे ज्ञानिनो हरौ प्रवेशः। अनुग्रहमार्गीये संन्यासे तु प्रेमात्मको राग एवाऽऽश्रयणीयो भवति। तत्र परोक्षापरोक्षरूपकृष्णसेवैव कर्तव्या भवति। तत्रैव तडिल्लतावत् तदाविर्भावः। क्वचिद्भावात्मकस्य

क्वचिन्मूर्त्याविष्टस्य आविर्भूतिः। आर्तिवर्धनमपि भगवानेव कृत्वा गृहाद्यरागपूर्वकप्रेमभावं वर्धयति। तेन सर्वत्यागः सम्पद्यते। यथा वह्नौ तिरोहिते भस्मैवावशिष्यते, न काष्ठम्, तथैव प्रभोस्तिरोभावेऽपि विप्रलम्भात्मको रसो व्यज्यते। मर्यादायां श्रवणादिकं विधीयते, परमत्र तन्निपिद्ध्यते। तत्र देहरक्षार्थं भिक्षाटनादिकम्, अत्र तु तत्त्यागपूर्वकविरहाद् देहत्यागार्थमेव प्रयासः। तत्र मोक्षकामना, अत्र तु प्रभोरपि न वाञ्छा।

तत्र प्रणवध्यानम्, अत्र क्लेशभावनम्। तत्र कृष्णे प्रवेशः, अत्र तु कृष्णस्य भक्ते प्रवेशः।

भगवतो धर्माणां तच्छक्तीनाञ्च भगवदनतिरिक्तत्वाद् भगवद्रूपतैव। तदुक्तम्—

भगवद्धर्मशक्तीनामपि तद्रूपतोच्यते। इति।

शृङ्गाररस-सारसर्वस्व-रूपस्य भगवतः क्रियात्मकसंयोगभावात्मक-विप्रयोगभेदेन द्वैविध्यम्। तत्र प्रथमो लोकवेदप्रसिद्धो द्वितीयस्तु केवलानुभवैकगम्यः।

क्रियात्मकस्तु संयोगो लोकवेदनिरूपितः।
विप्रयोगस्तु भावात्मा केवलानुभवैकवृक्॥ इति।

भावात्म स्वरूपस्य भगवतः शक्तिरूपा व्रजसीमन्तिन्योऽपि भावात्मान एव। तत्सहितस्य तस्य तत्तल्लीलोपयोगिनी सर्वा सामग्री च तथाविधैव ज्ञेया। यथा—

भावात्मकस्वरूपस्य भावात्मानो व्रजस्थिताः।
तदा तदेकसहितास्तद्रूपा नहि संशयः।
तस्य सर्वैव सामग्री मन्तव्या हि तथाविधा॥ इति।

स्वभावात्मानो व्रजजनाः व्रजे प्रादुर्भूताः। स्वयञ्च संयोगात्मा भगवान् वसुदेवगृहे प्रादुर्भूतः। ततश्च नन्दगेहमागत्य गोपिकाभावरूपं व्रजसंश्रयं भावात्मकं स्वात्मानं स्वस्थितं विधाय रसात्मिकास्तास्ता लीलाः स्वस्थितेन भावात्मकेन रूपेणैव करोति। यथा—

स्वभावात्मव्रजजना प्रथमे प्रकटीकृताः।
संयोगात्मा स्वयं जातो वसुदेवगृहे प्रभुः॥
नन्दगेहे समागत्य भावात्मव्रजसंश्रयम्।
गोपिकाभावरूपं स्वमात्मानं स्वस्थितं व्यधात्।
स्वस्थितेन स्वरूपेण सततं रमते व्रजे॥ इति।

तत्रापि पूर्वक्रियाप्रधानसंयोगे भावात्मिकास्ता रसोद्बोधाय निरूपिताः। उत्तरत्र विप्रलम्भात्मके तु भावे तस्य तासाञ्च भावात्मकमेव रूपं भवति। अत एव भावप्राप्तिरेव तत्प्राप्तिः।

क्रियाप्रधानसंयोगे रसोद्बोधाय रूपिताः।
भावास्तथोत्तरे ह्युक्तं स्वरूपमपि तादृशम्।
भावात्मकं तु तत्प्राप्तिर्भावप्राप्तिर्न चेतरत्॥ इति।

पूर्वत्र भावो रसोद्बोधाय। उत्तरे तु भावात्मकमेव भगवतः स्वरूपम्।

स विप्रयोगात्मको भावः स्वेन तापात्मकेन रूपेणा पूर्वदेहं सर्वथा अनिवर्त्यैव नूतनं सर्वसामर्थ्ययुतं देहं विदधाति, येन निष्प्रत्यूहं सर्वोत्कृष्ट-वियोगानुभवो भवति। यथा—

स भावः सर्वथा पूर्वं देहं स्वेनानिवर्त्य च।
विदध्यान्नूतनं देहं सर्वसामर्थ्यसंयुतम्।
निष्प्रत्यूहं यथा तस्य वियोगानुभवो भवेत्॥ इति।

स एव निरोधः प्रोच्यते। प्रपञ्चस्मरणेन तद्विरोधो भवति। यथा—

स एव शब्दित सर्वग्रन्थे रोधः प्रभुप्रियैः।
विरोधस्तस्य सततं प्रपञ्चस्मरणेन च॥ इति।

निरोधलीलाया गुणगानेन प्रपञ्चस्मरणाभावः सम्पद्यते। तस्मिन् सति निरोधो निरूढो भवति। दैन्यभावनया भावप्राप्तिर्भवति। यथा—

तदभावो निरोधैकलीलाया गुणगानतः।
दैन्यभावनयैव स्यात् सुलभा भावसङ्गतिः॥ इति।

विरहाग्निमयाद् आचार्यादेव तदाश्रया विरहभावात्मक-तापप्राप्तिः। तापेन सर्वथा सर्वत्यागः, तेन प्रपञ्चविस्मृतिः, ततस्तदासक्तिः, ततो व्यसनम्, ततः पूर्णा कृतकृत्यता। यथा—

तापेन सर्वथा सर्वपरित्यागो भविष्यति।
परित्यक्तेऽखिले नूनं प्रपञ्चास्मरणं भवेत्॥
तदस्मृतौ तदासक्तिः सर्वथैव भविष्यति।
आसक्तौ व्यसने जाते ततः किमवशिष्यते॥ इति।

अत एव तादृशेन भगवद्विप्रयोगात्मकेन तापेन यस्य शरीरत्रितयं न तप्तं स अतप्ततनुत्वात् आमोऽपरिपक्वः, तेनैव च स भगवद्रसात्मकं दिवं नाश्नुते। अतप्ततनुर्न तदामोऽश्नुते दिवम् इति श्रुतिरप्याह। यथा—

स्वरूपे तु तदानन्द-प्रत्येकावयवैस्तथा।
तत्तल्लीलाश्रयत्वेन माधुर्येण विभाव्यते॥

८

निरूप्यते समानेषु यदा स्थातुं न शक्यते।
तदा तेनैव रूपेण विरहे तापसंयुतैः॥
कोटिकन्दर्पलावण्यरूपं चानन्द एव हि।
ऐश्वर्यादिगुणाः रूवें तद्रूपा नात्र संशयः॥ इति।

यदा तु तत्तल्लीलाश्रयत्वेन माधुर्योपेतान् स्वानुभूतरसात्मकान् तत्तदवयवान् विरहदशायां तत्तल्लीलान्तरङ्गस्थान् परस्परं निरूपयन्ति, यदा च तदन्तरा स्थातुं न शक्नुवन्ति, तदा तेनैव कोटिकन्दर्पलावण्यरूपेण भगवान् आविर्भवति।

हिताद्वैतिनस्तु—मधुर-वैवश्यं प्रेमतत्त्वम्, यस्य स्पर्शवशात् भगवानपि वैवश्येन स्वं विस्मरति। यच्च अनिर्वचनीयं मूकास्वादनवद् अनुभवैकगम्यम्। प्रेम्ण एव स्वातन्त्र्यं परमाराध्यत्वञ्च। तदाश्रितैव भगवत्ता। प्रेम्णः शक्तिरूपत्वे शाक्तमतप्रवेशः, प्रेम्णश्च उत्पाद-विनाशौ अशक्यौ।

आविर्भावदिने न येन गणितो हेतुस्तनीयानपि,
क्षीयेतापि न चापराधविधिना नत्या न यो वर्धते।
पीयूषप्रतिवादिनस्त्रिजगती दुःखद्रुहः साम्प्रतं,
प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्निष्ठताजाघवम्॥—इत्युक्तेः।

प्रेम्णः स्पर्शेन परमेश्वरोऽपि सार्वज्ञ्यादिकं विस्मृत्य श्रीराधामेव जानाति सार्वज्ञ्यं च संकुचति। जीवोऽपि तत्स्पर्शेन स्वीयमल्पज्ञत्वं विस्मरति। प्रेम्णो भगवदभिन्नत्वे तद्गुणत्वे स्वरूपशक्तिरूपत्वे वा भगवतस्तत्पारवश्यं कीदृशमिति विचारणीयम्। वस्तुतः कस्य स्वातन्त्र्यं भगवतस्तच्छक्तेर्वा? शक्तेः स्वातन्त्र्ये शाक्तमतप्रवेशः भगवतः स्वातन्त्र्ये प्रेम्णः स्वाभाविकं स्वातन्त्र्यं बाध्येत। ततो भगवतः प्रेमपारवश्यमपि औपचारिकमेव स्यात्।

तत एव प्रेम्णः परमाराध्यता, भगवत्ता च तदीयोऽन्यतमो गुण एव। तत एव भगवत्ता सर्वथा तदधीनैव। प्रेम्णः सम्बन्धविशेषरूपत्वेन आश्रय-विषयसापेक्षत्वेन च न सर्वथाऽद्वैतरूपता संभवति। किन्तु उभयनिष्ठोऽपि प्रेमा उभयोरैक्यमापादयति। तच्चैक्यं नौपचारिकम्, किन्तु सहजसत्यरूपमेव। नित्यसम्बन्धात्मकत्वात् नित्यमेव तत् सद्वितीयमद्वितीयञ्च।

वस्तुतस्तु—मेयस्य मानाधीनत्वेन प्रमाणमूर्धन्येन श्रुतिप्रमाणेन एकमेवाद्वितीयम् इत्यनेन सद्वस्तुनः सजातीय-विजातीय-स्वगतभेदराहित्यप्रतिपादनेन तस्यैव च रसो वै सः इति रसरूपत्वप्रतिपादनेन च भगवतः प्रेम्णश्च अभेद एव युक्तः। तत्र च परस्परविरोधेन एकत्र समसत्ताकयोः भेदाभेदयोरसंभवेन औपाधिक-स्वाभाविक-भेदाभेदप्रतिपादनमेव युक्तम्।

भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत्।

इति श्वेताश्वतर (१.१२) श्रुतिमवष्टभ्य वदन्ति। प्रेमाश्रयो भोक्ता, प्रेमपात्रं भोग्यम्। द्वयोः परस्पररतिरूपः प्रेमैव प्रेरिता। स एव उभयोः बाह्याभ्यन्तरः सन् पोषको नियामकश्च। द्वयोरेकत्वविधायकत्वन्तु तत्स्वभावः। तेन भोक्तृ-भोग्ययोरुभयोरपि अन्योन्यात्मतया अन्योऽन्यनिमज्जनोन्मुखता। यद्यपि सर्वमेतद् अद्वयब्रह्मात्मकमेव; तथापि तत्प्रेरकेण प्रेम्णा अव्याहतप्रेम-रसास्वादनाय तयोः प्रातिस्विकस्वरूपमवस्थाप्यते। अन्यथा भोक्तृ-भोग्ययो-रुभयोः स्वरूपानवस्थाने प्रेम्णः स्वरूपावस्थित्यसंभवः।

तच्च प्रेमतत्त्वं नेश्वरवत् प्रेरकम्, किन्तु सहचरीव दासीव च तौ प्रेरयति। प्रेम्णो भगवत्स्वरूपत्वेन तदभिन्नस्वभावानां भोग्य-भोक्तृ-प्रेरकाणां समेषामपि रसाश्रयत्वं रसविषयत्वं रसरूपत्वञ्च। रतेस्तदुभयरूप-स्वकारणा-श्रितत्वम्, तयोश्च रत्याश्रयत्वम्। रसिकानां भजन-रससिद्ध्यर्थं नित्यलीला-मयं प्रेमैव श्रीनन्दनन्दनस्य, वृषभानुनन्दिन्याः, तत्सहचरीगणस्य श्रीवृन्दावनस्य च रूपेण व्यज्यते। तत्र नन्दनन्दनो भोक्ता, तत्प्रेयसी वृषभानुजा भोग्या, तत्सहचरीगणो वृन्दावनञ्च प्रेरक-प्रेमस्वरूपम्।

लीलारसात्मकत्वात् तदेव रसरूपेण लोके वेदे चाख्यायते। रसो वै सः इत्यत्र रसरूपं प्रेमैव बोध्यते। रसरूपोऽपि स नित्यनूतनरसोपलब्ध्यैव आनन्दी-भवति, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति इति श्रुतेः। यद्यपि लौकिकोऽपि प्रेमा स्वकारणाश्रयेणैव व्यज्यते; तथापि लौकिकस्य कारणस्य विकारित्वेन तदधीन-निष्पत्तिकस्य प्रेमस्वरूपस्यापि विकारित्वमनुभूयते। तेनैव निर्विकारस्य निखिलदिव्य-सद्गुणगणालङ्कृतस्य भगवत एव प्रेमाश्रयत्वमभ्युपगम्य शुद्धतमः प्रेमा तदुपासकैः अपरोक्षीक्रियते।

परन्तु भगवतो माधुर्येण साकमैश्वर्यमपि भगवदविनाभूतम्, तत्रावश्यंभाविसहजप्रेमपारवश्यमग्रे माधुर्ये तत्सामञ्जस्यं न संभवतीति रसिकैस्तस्य माधुर्याधिष्ठात्र्या महासाम्राज्याद् ऐश्वर्याधिष्ठात्रीं महाशक्तिं बहिरेवावस्थापयितुं प्रयत्यते। तेनैव वृन्दावनधाम्नः परस्ताद् बिल्ववने महा-लक्ष्म्या निवासः। तथा चोक्तम्—

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष-
कामास्ततः समचरन् भगवत्प्रपन्नाः।
सा श्रीः स्ववासमरविन्दवनं विहाय
यत्पादपङ्कजमलं भजतेऽनुरक्ता॥ इति।

पर्यङ्के सन्निविष्टाया श्रीराधायाः पादपङ्कजे प्रेम्णा परिचरत्येव श्रीकृष्णः परमो वशी। तदुक्तम्—

पर्यङ्के सुशयनाया नागर्या नागर. प्रियः।
चरणाब्जं करे धृत्वा हृदि भाले दृशोर्मुदा॥
स्पर्शयित्वा चिरं दध्यौ महाभाग्यं हि माधवः।
प्रेयसः परमां प्रीतिं दृष्ट्वा प्रीता हृदीश्वरी॥
कृपामहार्णवे मग्ना भुजाभ्यां परिषस्वजे।
यद्यद्धि रोचते तस्मै प्रेयसे तद्धि मे प्रियम्॥
मम यद् यद् प्रियतमं प्रियस्तत्त करोति हि।
प्रेयसस्तु दृशो वांसो यथा मह्यं प्ररोचते।
प्रेयान् सदा ममदृशोस्तारो भवितुमिच्छति॥ इति।

सम्भोगश्रृङ्गारे द्वयोरेकत्वं पर्यवस्यति।

कैश्चित्तु—स्वाभाविकं दिव्यदम्पत्योरेकत्वं नित्यसिद्धम्; तथापि तदास्वादनार्थं द्वित्वसपेक्षितम्। द्वयोस्तादृक् प्रेम्ण एव वैशिष्ट्यं येन द्वयोरेकत्वं न दुर्लभम्। किन्तु सहजमेकत्वमपहाय द्वित्वापत्तिरेव दुर्लभा। परं तद्रीत्याऽपि पूर्वरागादयो वर्ण्यन्त एव।

प्रेम्णा देहेन्द्रियादितापः शाम्यति, तृष्णा वर्धते, चित्तं ह्रियते, मनश्च मार्दवं भजते। तदेव दम्पत्योः हृदि विलसति। तौ विलासयति। तदेव रसिकेषु रसमनुभावयति।

आकृतिरूपो परिणामरूपश्च नियमः। यथा रसाविर्भावेण सार्धमेव या याः क्रियाश्चेष्टाभावा अभिव्यज्यन्ते, ता एव नियमशब्देन आख्यायन्ते। प्रेमतत्त्वमेकरसं भवति, नियमास्तु आविर्भावतिरोभावशालिनो भवन्ति। यथा सुवर्णस्य एकरसत्वेऽपि कटक-मुकुटादयस्तत्परिणामभूतास्तद्वत्। तेन यथा सुवर्णयन्त्रिताः कुण्डलादयस्तथैव रसनियन्त्रितास्तास्ताः चेष्टा रसाविनाभूतास्तन्नियन्त्रिताः।

प्रेम्णो नाद्यनन्तत्वम्, नित्यत्वमेकरसत्वम्, मादकत्वं स्निग्धत्वञ्च। नियमस्य भावरूपत्वेऽपि सादित्वं सान्तत्वञ्च। रक्तपटस्येव नियमान्वितप्रेम्णो नियमैरेव विशिष्टरूपता। यथा विशिष्टाकृतिमतः पात्रस्य वैशेष्यम्, तथैव नियमान्वितस्य प्रेम्णोऽपि वैशेष्यम्। हसित-भाषित-मानविलासादयो नित्ये प्रेमरसे प्रादुर्भावतिरोभावशालिनः। एवमेव प्रेमलक्षणायां भक्तौ श्रवणादिलक्षणा नव भक्तयोऽपि नियमरूपा एव।

केचित्तु—विधानोक्ताः क्रियास्तत्परिणामरूपा नियमाः प्रेमोदयेऽस्तं गच्छन्ति। किन्तु प्रेमनियतास्तु नियमाः प्रेम्णा सहानुवर्तन्ते। अत एव मदनः कामो वा मधुरप्रमयन्त्रितो नियम एव। तेनैव प्रेममन्मथयोगेन श्रृङ्गार-

रसनिष्पत्तिः । दिव्यदम्पत्योः राधा-माधवयोस्तु प्रेम-कामौ नित्यनूत्नौ अप्राकृतावेव। आस्वाद्यमानः प्रेमैव रसो भवति। मदनकेलियोगेनैव च स आस्वाद्यते।

यावद् श्रीराधायाः पदनखमणिचन्द्रिका हृदि नोदेति, तावद् वृन्दावनभुवि चेतो न रमते। यावच्च वृन्दावननिष्ठा न भवति, तावद् राधायाः करुणाऽपि नोदेति। श्रीराधाया रसमयी जडिमा वृन्दावनरूपेण व्यज्यते। चैतन्यञ्च सहचरीगणरूपेण व्यज्यते। राधाया हृदये सर्वदैव प्रेमरसजाड्यं व्याप्नोति। तदुपर्यत्र चिन्मयाः प्रेमविलासाः प्रकाशन्ते। प्रेम्णो घनीभूतावस्था जडिमा, घनीभूतं प्रेमतत्त्वं जडवत् प्रतिभासते। तेन जडीभूते प्रेममये वृन्दावने चिन्मय्यः प्रेमक्रीडा विराजन्ते। तेन प्रेम्णो जाड्यं वृन्दावनम्, चापल्यं च सहचर्यः, प्रेममयत्वात्।

वस्तुतस्तु—वृन्दावनस्यापि चिन्मयत्वमेव, तत एव वृन्दावनधाम्नि सङ्कुचितास्वपि कुञ्जवीथीषु विहरमाणयोरपि दम्पत्योः वसनानि तैर्न व्यरुद्ध्यन्ते, न वा स्पृश्यन्ते। कुञ्जानां चेतनत्वेन यथायोग्य-सङ्कोच-विकासशालित्वात् तदुपपद्यते। यदा च प्रेमोन्माद-पराधीनयोः विह्वलयोः देहाद्यनुसन्धानशून्ययोः कदाचित् विश्लिष्टयोः संश्लिष्टयोश्च गच्छतोर्वृन्दावनमेव मार्गं दर्शयति। यासु कोमलतरासु प्रफुल्लितासु लतासु तौ विहरतः, ताश्च प्रेमविवशाः प्रहृष्यन्ति, माद्यन्ति मूर्च्छन्ति च। सहजप्रेमोन्मिषितैः दिव्यनयनैरेव भूतलस्थितं वृन्दावनम्, तदीय खग-मृग-लताप्रतानादयश्च चित्प्रेममयान्येव दृश्यन्ते। प्रेमामृतसिक्तानां तत्रस्थ-द्रुम-लतानामवधीरितकल्पद्रुमलतानां दर्शनेनैव कामा विलीयन्ते।

रसलीलानामाधारत्वेन रसोपासनाया अपि सुतरां तदाश्रितत्वम्। रसोपासनाधारकत्वादेव तस्य धर्मत्वमपि संपद्यते। अत एव वृन्दावनधाम्नि प्रेमामृतसिन्धुरुद्वेलितः, तद्धारकत्वाद् वनस्य धर्मत्वमुक्तमेव। धारकत्वाद् यथा धर्मत्वम्, तथैव धार्यत्वादपि धर्मत्वम्। प्रथमः साधनात्मकः, द्वितीयः साध्यात्मकः। प्रेमभक्तेर्वृन्दावनस्य वा साधनं नवधा भक्तिः। तेन प्रेम्णः सहजं वैभवं वृन्दावनम्। तच्च श्रीराधायाः चरणयुगलाश्रितमपि तद्धारकम्। तस्माद् धर्मधर्मिणोः अन्योन्याश्रितत्वम्।

यद्यपि रसो धर्मेभ्यः समस्तेभ्योऽपि परः; तथापि परमसूक्ष्मो रसस्यापि धर्मो भवति, येन तत्सकलविलासा धार्यन्ते। रसस्य धर्मधर्मिभावमाश्रित्यैव रसोपासनं निष्पद्यते। रसस्य सहजधर्मेण तद्धर्मिणा च रसस्य शुद्धतमा स्थितिर्व्यज्यते। वृन्दावनं प्रेमात्मकस्य रसस्य सहजधर्मरूपम्। राधामाधवौ तद्धर्मिरूपौ, तयोः सहजधर्मधर्मियोगेन शुद्धरसोपासनं सम्पद्यते।

कैश्चित्—वृन्दावनं राजधानी। रसाब्धिचन्द्रः कृष्णस्तत्रस्थो नृपः। व्रजनवतरुणीकदम्बमुकुटमणिभूता वृषभानुजा महाराज्ञी। वैकुण्ठाद्या दिव्यलोकाः स्थानविशेषाः। कोटि-कोटिमेघाः तदुद्यानसेक्तारः। चतस्रो मुक्तय उदहार्यः। दिवाकर-निशाकरौ यामिकौ। एकोनपञ्चाशन्मरुतः परिचारकाः। इन्दिरा परिचारिणी। निगमागमाः चारणाः। साक्षाद्धर्मः सभारक्षी। सनकादयः सूचकाः। सत्त्वं द्वाररक्षकम्। कालः अभियुक्तः। कर्माणि दण्डधराः। कामकेलिसुखं ध्वजः। सौवर्णी मारकती च भूमिः। कुसुमितवनराजयः प्रासादाः। रसिकभक्ताः अन्तरङ्गपरिचारिण्यः। प्रतिकुञ्जं प्रेममयानि शयनीयानि प्रेमायनानि च। सर्वत्र कुञ्जे विविधाः शृङ्गारसामग्र्यः समुपचिताः। दिव्यातिदिव्यानि पटवासोपचितानि पट्टाम्बराणि। वादित्र-नृत्य-गान्धर्व-समलङ्कृतानि मणिमयानि च रासमण्डलानि। तत्र दिव्यसहचरी-मण्डल-विलासिनोः दिव्यदम्पत्योः नित्यप्रेमसंभोगा विराजन्ते।

प्रेमरतिरेव वृन्दावनरतिः। नित्यनूत्नं प्रेमैवात्र वृन्दावनम्। तत्रत्यौ रसिकौ श्रीराधा-माधवौ। सख्यस्तदुपासिकाः। वृन्दावनधाम्न्येव सा प्रीतिलता समुदेति, यस्यां रङ्गरूपात्मके प्रेमसौन्दर्यमये द्वे पुष्पे विकसतः। तल्लतासक्ता रसिका एव सहजप्रेमविलासमास्वादयन्ति। तच्च वृन्दावनं गोष्ठवृन्दावन-क्रीडावृन्दावनाभ्यामपि विलक्षणं राधाविहारवृन्दावनम्। स्वसुखवासनाशून्यायाः शुद्धतमायाः परमसमृद्धायाः पूर्णाया रतेः सहजरूपं तत्। तत्रैव श्यामा-श्यामयोः शृङ्गारक्रीडा चकास्ति। यथा रति-रसयोः स्वाभाविकः सम्बन्धस्तथैव तेन तयोः सम्बन्धः।

अत्रैव पारावारवर्जिते दिव्य-विषम-कामसागरे अनाद्यनन्ते दिव्यदम्पती सर्वदा क्रीडतः। तयोः सर्वाश्चर्यमयं कैशोर्यम्, सर्वाङ्गीणसंश्लेषाऽविनाभूतञ्च जीवनम्। तदुक्तम्—

नित्यौ शुद्धौ परसुखमयौ कोमलौ कान्तिमन्तौ
गौरश्यामौ इह विहरतो वामकामाम्बुधौ यत्।
तस्याधारं वनमिह सदा भावयन्त्येव भव्याः,
तच्चाप्येवं सुखविलसितं भावये तत्स्वरूपम्॥ इति।

पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः। इति च।

अत्र तु प्रेमसौन्दर्यमयावेव तौ दिव्याप्राकृत-शृङ्गाररसासक्तौ दिव्योज्ज्वल-रसपरायणौ। तत्र प्रेमप्रेरितौ प्रेमसौन्दर्यमयौ राधामाधवौ प्रेमरसाविष्टौ प्रेमभोगपरायणावपि प्रेमतृट्-परीतौ।

सख्यश्च सर्वदैव विवाहकौतुकाविष्टाः प्रतिदिनं विवाहोत्सवं कुर्वन्ति। प्रेमाविष्टा वरवध्वोः नानाविधान् शृङ्गारान् आरचयन्ति। जलजमयानि मौलिभूषणानि सज्जयन्ति। तैरुभयोः कन्दर्पकोटिलावण्यं दीप्यते। महामोहनं तत्स्वरूपमापीय कोटिकोटि-रति-कन्दर्पाः स्वात्मानं निर्मोचछयन्ति। छबिमयं वितानं विवाहमण्डपम्। हितमयानि वन्दनावाराणि तोरणानि च। मयूरहंसादयो गायन्ति नृत्यन्ति च। निकुञ्जप्राङ्गणे सख्यो विविधमुक्ता-माणिक्य-मौक्तिकमयानि भद्राणि विरचयन्ति। शय्यैव वेदिः, तत्र वरवध्वौ संनिवेश्य देवीपूजां कारयन्ति। परस्परावलोकनैः दृगञ्चलयोः ग्रन्थिमारचयन्ति। तयोर्मनसोः भ्रमावर्तनान्येव महाग्निपरिक्रमणानि। प्रेममयान्येव कङ्कणानि रूपसूत्रावनद्धानि तावुभौ धारयन्ति। एवं विविधकौतुकमयानि विधानानि आरच्य सौभाग्यवर्धापनम्, आशीर्भिरापूरणं च सम्पादयन्ति।

उभौ नित्यविवाहोत्सव-सुखभोगिनौ नित्यविवाहोचित-पट-भूषणादिभिरलङ्कृतौ नित्यनूतन-वयःसुखभोगिनौ नित्यसुभग-रजनीमुपाश्नुतः। दिव्यदम्पत्योः राधा-माधवयो रासोत्सवेऽपि लोकोत्तरे कालिन्द्याः कूले विविध-कुसुमाकीर्णे जले स्थले च शतकोटि-योजनविस्तीर्णे रासमण्डले विविध-मृदङ्गादिवादित्र-ताल-नृत्य-गान्धर्वसङ्कीर्णे प्रेमरसाविष्टौ प्रेमपरायणौ प्रेम-पटालङ्कारधारिणौ लास्यक्रीडां क्रीडतः। तत्रत्य-वंशीनिनादामृतं चरणनूपुर-रणितामृतकणां च आपीय देवाधिदेवा महर्षयश्च मुह्यन्ति। देश-काल-वस्तुमर्यादातीतं सहजं प्रेमैव विविधभूषण-वसनालङ्कृत-राधा-माधवयुगलरूपेण क्रीडति। तत्र न उपचाराः, न स्तुतिः, न अपराधः, नापि संभ्रमश्च। अनिर्वचनीय-लावण्यचमत्कृतिरेव तत्र। सर्वदैकरसं कैशोर्यम्, निरूपमं रूपम्, परमाश्चर्यमयं च केलिकला-विलासमयं चातुर्यम्। तदुक्तम्—

सा लावण्यचमत्कृतिर्नववयो रूपञ्च तन्मोहनम्,
तत्तत्केलि - कला - विलासलहरी - चातुर्य - माधुर्यभूः।
नो किञ्चित् कृतमेव यत्र न नुतिर्नागो न वा संभ्रमः,
राधा-माधवयोः स कोऽपि सहजप्रेमोत्सवः पातु वः॥ इति।

प्रीतिपरवशौ निर्मर्यादौ निर्भयौ शृङ्गारकेलिपरौ दिव्यस्वात्मकरसमुपाश्नुतः। तयोर्ललिताङ्गानां चञ्चलभावभङ्गिपरम्परामालोक्य शृङ्गारकला अपि लज्जन्ते। रसिकानां तदेवोज्जीवनम्। तच्छ्रवण-वर्णन-गानादिभिस्ते गम्भीररसमापूरयन्ति।

कदाचित् क्रीडासुखसिन्धुकणमालोक्य पञ्चवाणो महानङ्गोऽपि मुह्यति। तदीय-पञ्चवाणास्तमेव आहत्य जर्जरयन्ति। विवशो विसंज्ञो महानङ्गः स्वशर-पीडितो लज्जितो नीचीनमुखो भवति। सर्वा अपि कामवृत्तयस्तदीयशृङ्गारलेश-मास्वाद्य मोहिता विवशा लज्जिताश्च भवन्ति। तयोस्तु कामः शुद्धतमप्रेमात्मकः। तेन स नित्यनूत्नः। शृङ्गाररसास्वादनार्थमेव कामः प्रेमभेदभिन्नतामनुयाति। राधा-माधवौ तत्कामक्रीडास्तदुपकरणानि तदुद्भूता अनुभावाः सर्वाण्यपि प्रेमामृतमयान्येव। प्रेममूर्ती दम्पती प्रेमपुष्पमय्यां शय्यायां प्रेमक्रीडा-परायणौ प्रेमदृग्भिर्मत्तौ प्रेमस्मितौ प्रेमरक्तौ प्रेमकेलिकलानुगौ। लौकिकस्तु कामः किञ्चिद्भेदसापेक्षः, तेनैव निकटतमे सम्बन्धे एवोदेति। राधा-माधवौ तु शुद्धैकरसप्रेमविलासमयौ। ततस्तयोर्न लौकिक-कामप्रवेशावकाशः।

लोके कामेन भिन्नयोर्द्वयोरैक्यमुपजायते। परमत्र तु सर्वथा एकस्यैव ज्योतिषः कामेन राधा-माधवयुगलरूपता जायते। लोके भोगान्ते वैरस्यमुप-जायते। परमिह तु उत्तरोत्तररसवैशिष्ट्यमेव अवगाह्यते। प्रेमरङ्गेन रक्तस्य श्यामसुन्दरस्य स्वप्रेयस्याः कोमलाङ्गानि मानसैरपि करैः स्प्रष्टुं सङ्कोचः। प्रेयसा प्रेमतापिताश्वाः स्वप्रेयस्याः सौकुमार्यातिशयेन तदुपरि प्राणातपत्रैः छाया क्रियते। तस्याः स्मितमेव तत्कृते सर्वविलाससारः। स तदालोकयैव सर्वसुखानि विस्मरति। काचित्तादृशी विलक्षणा शक्तिः यया दूरादेव तदुपरि स्वात्मानं निर्माञ्छयति। प्रेमात्मकस्य कामस्य कोऽपि विलक्षणोऽनुभावो येन प्रतिक्षणं प्रेयस्या अङ्गानि शिलष्यन्न मानसैरपि करैः स्पृशति। प्रेम-कामौ स्वीयां शुद्धतमामुत्कृष्टतमाञ्च कोटिमाटीकेते।

प्रेममय-कामस्यानुभवे लौकिकस्तु कामो बाधको भवति। स च दिव्य-दम्पत्योः स्वानुभावमिव अवलोक्य भ्राम्यति। परमिह तु सर्वासामपि क्रियाणां लौकिकायितत्वेऽपि कामस्पर्शोऽपि न भवति। तदुक्तम्—

क्रिया सर्वाऽपि सैवात्र परं कामो न विद्यते। इति।

अत्र तु प्रेमसौन्दर्ये प्रेमलीलाया रसास्वादनाय दिव्यं वपुः बिभ्रतः। जगत्-पावनी लोकोत्तरेयं प्रेमलीला!

राधामाधवयोरिमां लीलां महानुभावा बहुधा वर्णयन्ति। तयोरनुरागोऽनेक-रङ्गैरेकोऽपि बहुधाऽवभासते। राग-रागिण्योरिव राधा-माधवयोः अविनाभावः। प्रेमरङ्गरञ्जितयोः परस्पराङ्गसंश्लेषोऽपि विचित्ररसपाक इव परमास्वाद-नीयः। तदाश्लेषसौभाग्यमपि सर्वरसिकवन्दनीयम्। सर्वाङ्गपूर्णं निरति-शयं निरवधिकञ्च प्रेमतत्त्वमेव इह माधवतत्त्वम्। तच्च न केवलं प्रेमगोचरम्, किन्तु प्रेमाश्रयप्राधान्येन सर्वदैव प्रेमतृट्परीतमित्युक्तमेव। तेन प्रेम-

तृष्णाया वृद्धिमनुप्रेमाधीनताऽपि संवर्धते। प्रेमस्पर्शेन प्रेमाधीनतैव वर्धते। सर्वाणि बन्धनानि शैथिल्यमुपयान्ति। प्रेमराज्यप्रवेशेन भक्तवद्भगवानपि प्रेमोन्मत्तो विलक्षणः सर्वतः सङ्कुचद्वृत्तिर्भवति। तेनैव मधुररससारसिन्धु-साराम् अपगताशेषबाधाम् अगाधां राधामाश्रित्य माधवोऽपि सृष्ट्यादि-वार्तां विस्मृत्य नारदादीन् स्वभक्तानपि अनाकलय्य श्रीदामादीन् मित्राण्यपि न मिलति। स्वपित्रोः स्नेहवृद्धिमवितीर्य प्रेमैकसीमां मधुररससुधासिन्धु-सारैरगाधां राधामेव जानन् मधुपतिरनिशं कुञ्जवीथीमुपास्ते। तदुक्तम्—

दूरे सृष्ट्यादिवार्ता न कलयति मनाङ् नारदादीन् स्वभक्तान्
श्रीदामाद्यैर्सुहृद्भिर्न मिलति हरति स्नेहवृद्धिं स्वपित्रोः।
किन्तु प्रेमैकसीमां मधुररससुधासिन्धुसारैरगाधां
श्रीराधामेव जानन् मधुपतिरनिशं कुञ्जवीथीमुपास्ते॥

(रा० सु० नि० २३५) इति।

मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि। इति च।

एतेन जीवो यथा प्रेमाविष्टो देहेन्द्रियाऽनायकताम्, अल्पज्ञताम्, अल्प-शक्तिमत्तां च विस्मरति, तथैव भगवान् अनन्तकोटि-ब्रह्माण्डनायकतां सर्वज्ञतां सर्वशक्तिमत्ताञ्च विस्मरति। तेनैव राधामेव जानाति, नान्यद् विजानाति। भक्तपराधीनो भगवान् भगवत्तां विस्मृत्य भक्तानेव स्मरति। परमोज्ज्वल-विशुद्धप्रेमरसभावापन्नस्य तस्य भगवत्ताऽपि अवाचनीयैव। तथापि स निरतिशयां ब्रह्मरूपां बृहत्तां विस्मृत्य श्रीराधाया नयनाञ्जनभावं वाञ्छति। यस्य प्रतिबिम्बसौन्दर्यकणमास्वाद्यापि कोटिकोटि-कन्दर्पगणो मोमुह्यते, स साक्षान्मन्मथमन्मथोऽपि कोटिदिव्य-कमनीय-कामिनीकदम्ब-सङ्कुलितोऽपि राधायाः सौन्दर्यसुधाकणायापि दैन्यमालम्बमानोऽधीर एव जायते। श्रीराधा-मुखारविन्द-मकरन्द-मिलिन्दनयनो नान्यत्र रमते। पक्ष्मसंपुटावरुद्धोऽपि अत्यातुरो व्याकुलायते। तस्याः श्रवसोः कुवलयम्, अक्ष्णोः अञ्जनम्, उरसो मृगमदो भवन्नपि न शाम्यति। स्ववल्लभाया नाभिसरो मीनायते। परस्पर-श्रीविग्रहैक्यभावमुपगतोऽपि तदेव पौनःपुन्येन कामयते। लव-निमेष-व्यवधान-मपि तस्य कोटिकल्पायते। राष्ट्रभाषाकविनाऽप्युक्तम्—

कहा कहौं इन नयननि की बात!
ये अति प्रियावदन अम्बुज रस अटक अनत न जात॥
जब जब रुकत पलक संपुट लट अति आतुर अकुलात।
लम्पट लव निमेष अन्तर ते अलप कलप सरसात॥
श्रुति पर कञ्ज दृगञ्जन कुच बिच मृगमद ह्वै न समात।
जैसी 'हित हरिवंश' नाभिसर जलचर जाँचत सांवल गात॥ इति।

यद्यपि प्रेयान् प्रेयस्या मनसि मनस्तादात्म्यमापाद्य प्रेयस्याः स्वाङ्गानि स्वात्मतादात्म्यापन्नानि चिकीर्षति ; तथापि तथात्वे तद्दिदृक्षाकुलस्य कथं तद्दर्शनमित्यसमञ्जसम्। तदेकासक्तस्य तस्य तन्नयनसंश्लेष एव तज्जीवितम्। तन्वोर्नयनानां मनसोरात्मनोः सर्वाङ्गीणसंश्लेष एव जीवनाभिलाषा। अतिदैन्यमापन्नः तद्भ्रूक्षेपमसहमानो माधवस्तामेव अनुनयन् तदनुग्रहं प्रार्थयते।

स्वप्रेयस्या गाढालिङ्गनवेलायां प्रेमविह्वलितस्तां द्रष्टुमक्षमो नयनं विरहमश्नुते। नयनपरिरम्भे तु गात्रं विरहतप्तं सीदति। तदुक्तम्—

परस्पराङ्ग - संश्लेष - समुद्रिक्त - प्रमोदयोः।
नयनं विरहव्याप्त्या भृशं तातप्यते शुचा॥
नयनं श्लेषनिर्वृत्त्या दृगानन्दरसासवम्।
आपीयापीय निर्वृत्तं गात्रं तातप्यते तदा॥ इति।

श्रीराधायाः प्रत्यङ्गमत्याश्चर्यपूर्णं प्रेममयसौन्दर्यमास्वाद्य माधवस्य नयनमक्रीतदासायते। तदेव व्यञ्जयन्नाह—प्रियाया अङ्गानि निरुपमाऽगाधसौन्दर्यसीमान्यालोक्य नेत्रं विह्वलितं मनश्छबिसिन्धुनिमग्नं च भवति। तत्प्रत्यावर्तनं दुःशकं भवति। सर्वं चातुर्यं सार्वज्ञ्यञ्च कुण्ठितं भवति। श्रीराधायाः सौन्दर्यसीमात्वमुक्तमभियुक्तैः—

प्रेमोल्लासैकसीमा परमरसचमत्कारवैचित्र्यसीमा
सौन्दर्यस्यैकसीमा किमपि नववयोरूपलावण्यसीमा।
लीलामाधुर्यसीमा निजजनपरमोदारवात्सल्यसीमा
सा राधा सौख्यसीमा जयति रतिकलाकेलिमाधुर्यसीमा॥ इति।

स्व-स्व-स्वात्मसमर्पणेन तदात्मवशंवदत्वमेव निस्तारबीजम्। प्रेमतृड्व्याकुलस्य अधीरस्य दीनदीनस्य प्रेमाश्रयस्य प्रियपराधीनतैव सम्पद्यते। तस्य प्रेमभरार्तिः, तस्याश्च प्रेममयसौन्दर्यातिशयश्च तं सर्वथैव तदात्मजीवनं भावयतः। तेन भगवानपि भक्तभक्तो भवति। तदुक्तम्—

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज। इति।

प्रेमलक्षणायां भक्तौ जातायां श्रवणादयोऽपि प्रेममया एव भवन्ति। तेन माधवः श्रीराधायाः प्रेमभक्तो भवति। तदैव तद्देहस्तच्चरणपङ्कजालयो भवति—देहि मम शिरसि पादपङ्कजमुदारम् इति। तेन माधवो राधां प्रार्थयते—प्रिये! यत्र यत्र त्वत्पादपङ्कजं तत्र मन्मनश्छत्रं सच्छायां तनुते। मदीयानन्तानन्तमूर्तयस्तत्र चामर-व्यजनादिभिस्तदाराधयन्ति। काश्चन ताम्बूलानि कानिचित् माल्यानि अर्पयन्ति। काश्चिन् नीराजयन्ति। त्वद्रुचिमनुसृत्य

त्वत्प्रसन्नतायै त्वदाराधनं सम्पादयन्ति। माधवः श्रीराधायाः नामवैभवं शृणोति गायति च—

प्रेम्णाऽऽकर्णयते जयत्यथ मुदा गायत्यथाऽऽलिष्वयम्,
जल्पत्यश्रुमुखो हरिस्तदमृतं राधेति मे जीवनम्॥ इति।

श्रीराधायाः पदयोर्विचित्राणि यावकमयानि चित्राणि रचयति। मृगमदतिलकं विरच्य विविधपुष्पमालाः समर्पयति। कबरीर्निर्माय विविधैः भूषणैराभूष्य कर्पूरवीटिकां दत्त्वा दर्पणं प्रदर्श्य रूपं निरीक्ष्य स्वात्मानं निर्माञ्छयति। पूर्वं यः सर्वैरुपासकैः स्प्रष्टुमशक्यः, स एवात्र उपासकः, तस्य राधा तथैव दुर्लभा दुर्गमा च।

प्रीतेरपि स्वभावो यत्प्रीतिपात्रे तत्सम्बन्धिषु लोकोत्तरप्रियताप्रतीतिः। यद्यपि लोके विरहवेलायां प्रेमा समुल्लसति; परमिह तु संयोगदशायामपि तथैवोल्लसति। यत्र तस्याः पादविन्यासस्तत्स्थानं पश्यन् प्रेमविह्वलोऽश्रुपूर्णस्ताम्यति। मत्प्राणा एव तस्याः पादारविन्दस्याधिष्ठानं स्युरिति च वाञ्छति। श्रीराधा येषु वन्यपुष्पेषु वनराजिषु सस्नेहं पश्यति, तत्सर्वं तत्स्नेहामृतासिक्तमिति कृत्वा तत्रानुरज्यति। यत्र प्रियो वसति' तत आगतः खरोष्णपवनोऽपि प्रियो भवति। किमुत वक्तव्यं राधाया वसनाञ्चलखेलोत्थ-धन्यातिधन्यपवनस्पर्शेन माधवः कृतार्थमात्मानं मन्येत। अत एव तत्कृपापात्रभूतासु सहचरीषु दास्यं कुर्वन्नेव मोदते। परं तत्तादृगलौकिकं दास्यं परमेशिताऽपि यस्य दास्यं कामयते। तदीयानि वस्त्रालङ्करणादीन्यपि तत्सम्बन्धित्वेन प्रियतमानि भवन्ति। तैः सहचरीवेषं विधाय कुसुमव्यजनेन तां वीजयन् मोदते। तद्वेषधारणेन माधवस्य सौन्दर्यं वर्धते। विचित्रवेषरचनां विलोक्य सा किञ्चित् प्रसाध्य निजैर्विशिष्टैर्भूषणैराभूष्य वर्धयतितमां शोभाम्। अत एव केचित् श्रीराधामेव स्वेष्टदेवतां मत्वा तच्चरणयोरनुरक्तं माधवं दृष्ट्वा तत्रानुरज्यन्ते। राधा-माधवयुगलं स्वहृदयभूषणं चक्रुः। तेषामेव घोषोऽयम्—

रहहु कोऊ काहुहि मनहि दिये।
मेरे प्राणनाथ श्री राधा शपथ करौं तृन छिये॥

× × ×

अलं विषयवार्तया नरककोटिबीभत्सया
वृथा श्रुतिकथाश्रमो बत बिभेमि कैवल्यतः।
परेशभजनोन्मदा यदि शुकादयः किं ततः
परं तु मम राधिकापदरसे मनो मज्जतु॥
(रा० सु० नि० ८२) इति।

अन्यैरपि उक्तम्—

ब्रह्म में ढूंढ्यो पुरानन गायन
वेद रिचा सुन्यो चौगुने चायन।
देख्यों सुन्यों कबहूं न कहूँ वह
कैसे सरूप औ' कैसे सुभायन।
हेरत हेरत हारि पर्‍यो 'रसखान'
बतायो न लोग लुगायन।
देख्यो दुर्‍यो वह कुंज-कुटीर में
बैठ्यो पलोटत राधिका पायन॥ इति।

कैश्चित्तु—पिय को नाचन सिखावत प्यारी इत्यादिपद्यैः तस्याः शिक्षा-गुरुत्वमपि बोध्यते।

अन्यत्रापि—कुंजविहारी नाचत नीके, लाड़िली नचावत नीके। इति।

पुञ्जीभूत-रसामृताब्धिसर्वस्वा प्रेमानन्दघनाकृतिः निखिलनिगमागोचरा श्रीराधा प्रेमोल्लासपरमावधिः परमरसचमत्कार-वैचित्र्यभूः रूपलावण्यसार-सिन्धुः माधुर्यसीमारतिकलामाधुर्यास्पदं सहजानन्दवर्षिणी मेघमाला वृन्दावन-चन्द्रचन्द्रिका नित्यनवीनकेलिसिन्धुः। तदुक्तम्—

प्रत्यङ्गोच्छ्‌ल - दुज्ज्वलामृत-रसप्रेमैकपूर्णाम्बुधिः,
लावण्यैकसुधानिधिः पुरुकृपावात्सल्यसाराम्बुधिः।
तारुण्य-प्रथमप्रवेश - विलसन्-माधुर्यसाम्राज्यभूः,
गुप्तः कोऽपि महानिधिर्विजयते राधारसैकावधिः॥

(रा० सु० नि० १३५) इति।

लावण्यसार - रससार - सुधैकसारे कारुण्यसार - मधुरच्छविरूपसारे।
वैदग्ध्यसार - रतिकेलिविलाससारे राधाभिधे मम मनोऽखिलसारसारे॥

(रा० सु० नि० ९५) इति च।

यथैव व्रजतरुणीनां रूपगर्वं श्यामघनसौन्दर्य निरीक्षणेन पलायते, तथैव श्रीराधाया रूपसौन्दर्यमालोक्य माधवस्यापि रूपगर्वमपैति। श्यामसुन्दरस्य श्यामरङ्गेन व्रजसीमन्तिनीनां मनांसि रञ्जितानि, तथैव श्रीराधाया गौरतेजसा पुनस्तासां श्यामसुन्दरस्य च मनांसि रञ्जितानि। यथा निकषनिष्ठ-कनक-रेखया कनकपरीक्षणं तथैव रूपवतो हृदि रूपरेखया रूपपरीक्षणम्। तदुक्तम्—

राधेहि मिलेहु प्रतीति न आवत।
यद्यपि नाथ विधुवदन विलोकति दर्शन को सुख पावति॥
भरि भरि लोचन रूप परमनिधि उर में आनि दुरावति।

विरह विकलमति दृष्टि दुहुँ दिशि रुचि सरधा ज्यों पावति ॥
चितवति चकित दहति चित अन्तर नैननिमेष न लावति ।
सपनो आहि कि सत्य ईश विधि बुद्धि वितर्क बनावति ॥ इति ।

श्रीराधायाः स्वप्रेयसोऽभिसंमिलनेऽपि तथात्वविश्वासो न भवति । प्रेयसो मुखचन्द्रावलोकनेऽपि अतृप्तिविशेषात् लोकोत्तरं सुखमनुभवन्त्यपि न विश्वसिति । लोचनपुटैरापूर्यापूर्य परमरूपनिधिमुरःस्थल्यां गोपायति ।

सारस-दम्पत्योः विरहासहिष्णुता स्वात्मोत्सर्गश्च अतीव प्रशस्तः । चक्रवाकयुगलस्य च विप्रलम्भजनित-दुर्धर्ष वेदना-सहिष्णुत्वमपि रसिकस्ग्रहणीयम् । विषमविषसम्पृक्ते अग्निमयतैलपरिपूर्णे कटाहे प्रक्षिप्तस्य सर्वस्यैव क्षणेन पञ्चत्वावाप्तिः । ततोऽपि विषमे विरहाग्नौ निपतितस्यापि यदि कस्यचिज्जीवनं दीर्घकालमवशिष्येत, तदा तज्जीवनमपि परमत्यागमयमेव । जलविश्लिष्टस्य मीनस्य मृत्युरेव सुखकरः । तज्जीवनन्तु अतीव दुःखाकरमपि यदि संभाव्येत, तदा तल्लोकोत्तरं तप एव । दीपशिखासक्तमनसः पतङ्गाः क्षणेनैव तदात्मसाद् भवन्ति । यदि तां पश्यन्तोऽपि तत्तृष्णविमूढाः क्षणे मरणादपि विषमवेदनानुभवशीला अपि जीवन्ति, तदा तदपि तप एव । विरहमन्तरा औत्सुक्यातिशयो दुर्लभः । प्रेम्णस्तु पूर्णपरिपाकस्तेनैव भवति । संभोगशृङ्गारमन्तराऽपि चर्वणा नोपपद्यते । दिव्यदम्पत्योस्तु सम्पूर्णरूपेण सर्वाङ्गीणे संश्लेषेऽपि समुत्कण्ठातिशयो विह्वलतातिशयो विचित्रोऽतृप्तिविशेषो लोकोत्तर आर्तिभरातिशयश्च संश्लिष्यतोः संपश्यतोरपि दिदृक्षातिशयादशान्तिः परस्परप्राणप्रविविक्षा । तदुक्तम्—

मधुरान्मधुरं नित्यं दिव्यं विहरणं तयोः ।
अनौपम्यमनौपम्याद्रसानां रसवत्तमम् ॥
सुखसारं विलासानां नित्यं विलसनं प्रियम् ।
प्रेम्णामपि प्रेमतमं निर्वितर्कमगोचरम् ॥
विभ्रमप्रभवस्यापि विप्रलम्भस्य कल्पना ।
यत्र भीतिकरी भाति विप्रलम्भः कथं त्विह ॥ इति ।

दिव्यदम्पत्योः राधा-माधवयोः प्रेमापि दिव्यमेव । तत् सूक्ष्मादपि सूक्ष्मम् महतोऽपि महीयः, सुन्दरादपि सुन्दरम्, महासिन्धोरपि अगाधगम्भीरम्, स्निग्धेभ्योऽपि अतिस्निग्धम् मृदुभ्योऽपि अतिमृदुलं रम्यादपि रम्यञ्च । तद्रश्मिकणेनैव रसिकाः भृशं मुह्यन्ति, माद्यन्ति, स्निह्यन्ति, रोमाञ्चन्ति, लुभ्यन्ति, विस्मरन्ति, तृप्यन्ति सर्वस्वं त्यजन्ति च । तेनैव हृदग्निर्दीप्यते, अशब्दं श्रूयते अदृश्यं च दृश्यते ।

प्रेममाहात्म्यमेव खलु तादृग् येन श्रीकृष्णः, तत्प्रेयसी, श्रीराधा तत्सहचरी-गणाः, तद्धाम वृन्दावनञ्च सर्वमनन्यत्वादिभिः पूर्णम्, यत्र विजयः पराजयः, पराजय एव विजयः, दैन्यमेव उत्कर्षः, पारवश्यमेव च स्वातन्त्र्यम्।

पराजयौ जयो यत्रो दैन्यमुत्कर्ष एव च।
पारवश्यं हि स्वामित्वं प्रेमराज्यं तदुच्यते॥ इति।

'प्रेम-पत्तने' बहुधैतत् प्रपञ्चितम्।

सत्यं शिवं सुन्दरम् इत्यस्य इदमेव तात्पर्यं यत् सत्यं तदेव शिवम्, यत् शिवं तदेव सुन्दरम्। यथा सत्ययोगेन असत्यमपि जगत् सत्यमिव भाति, शिवेन अशिवमपि मङ्गलायते, तथैव असुन्दरमपि जगत् तत्संसर्गेणैव सुन्दरं भवति। अतः सौन्दर्यं स्त्री-पुं-नपुंसकादिभिन्नं सर्वरूपञ्च, तत्त-दुपाधिभेदेन भिन्नमिवाऽनुभूयते।

क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः। —इत्युक्तेः

अनन्तमपारमगाधं सौन्दर्यरसरूपमेव यत्र यावतांऽशेन सत्त्वमुद्रिच्यते, तत्र तावतांशेन तदभिव्यज्यते। नवनवोन्मेषशालिन्या सात्त्विकवृत्त्या नव-नवायमानता अखण्डैकरसेऽपि तस्मिन् भाति। अत एव कैश्चिद् अन्तः-करणस्यैव धर्मविशेषः सौन्दर्यमुच्यते। भवेत् सौन्दर्यमङ्गानां सन्निवेशो यथोचितम् इत्यादौ तु शरीरादिसौन्दर्यं लक्षितम्। तत्रापि सन्निवेशौचित्यादिकमपि तदभिव्यञ्जकमेव। तेन न बाह्यवस्तुगतं मुख्यसौन्दर्यम्।

ननु यदि सौन्दर्यं भगवद्रूपमेव, तर्हि सर्वेषां निर्विशेषैव तदनुभूतिः स्यात्। दृश्यते तु विषमानुभवः; सरस-नीरसान्तःकरणभेदेन समानवस्तु-न्यपि सौन्दर्यतारतम्यप्रतिभानादिति चेन्न। सात्त्विकवृत्तिविशेषस्य भग-वदानन्दव्यञ्जकत्ववत् सरसहृदयस्यैव सौन्दर्यविशेषाभिव्यञ्जकत्वेन व्यञ्जक-तारतम्येन तत्तारतम्यानुभूत्युपपत्तेः। यथा पुण्यविशेषेण भगवदानन्द-व्यञ्जक-सात्त्विकवृत्तिविशेषलाभः, तथैव पुण्यविशेषेणैव विशिष्टसत्त्वोद्रेकात् तेषु तेषु वस्तुषु सौन्दर्यव्यञ्जक-सन्निवेशौचित्यं भोक्तृषु तदनुभवप्रयोजकं सरसत्वादिकञ्च जन्यते।

स्वमूर्त्यालोक-लावण्य-निर्मुक्त्या लोचनं नृणाम्।
गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः॥
आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ।
तमोऽनयाव तरिष्यन्तीत्यगात् स्वं पदमीश्वरः॥

इति भागवतपद्ये भगवन्मूर्तेरेव लोकलावण्योद्गमस्थानत्वं सूचितम्।

लोकेभ्यो लावण्य-सौन्दर्यादेः निर्मुक्तिदानं तया तया लोकलावण्य-निर्मुक्त्या स्वमूर्त्या नृणां लोचनमाहरति। यथा आनन्दसिन्धोर्भगवत एव इतरत्र आनन्दकणा वितीर्यन्ते, तथैव सौन्दर्यसिन्धोर्भगवत एवान्यत्र यथाकर्म यथाश्रुतं सौन्दर्यादिकं वितीर्यते। भगवत्येव नवनवायमानत्वमपि भक्तानामाञ्जस्येन सङ्गच्छते।

यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवम्।
पदे पदे का विरमेत तत्पदाच्चलाऽपि यच्छ्रीर्न जहाति तत्पदम् ॥ इति।

यत्र सौन्दर्यातिशयस्तत्रैव कामः सम्पद्यते। यत्र कामस्तत्रैव प्रेमाऽपि व्यज्यते। श्रुतिरपि आत्मकामशेषत्वेनैव अन्यत्र प्रेम दर्शयति। आत्मनस्तु कामाय सर्वं प्रियं भवति इति श्रुतेः। अत एवान्येषां सोपाधिकप्रेमविषयत्वे सातिशयप्रेमास्पदत्वम्। आत्मनस्तु निरुपाधिकप्रेमविषयत्वेन निरतिशयप्रेमास्पदत्वम्। कामेच्छाप्रेम्णाम् अवान्तरभेदवत्त्वेऽपि वस्तुसौन्दर्यानुभवजन्यत्वं तु समानमेव। लौकिकवस्तूनां काव्य-सङ्गीतादीनाञ्च सौन्दर्यं सोपाधिकं सातिशयञ्च भवति, तेन सातिशयप्रेमास्पदत्वमेव। निरुपाधिकं निरतिशयञ्च सौन्दर्यं भगवत्येव पर्यवस्यति। तेन तत्रैव निरतिशयप्रेमास्पदत्वम्।

लोके यद्यपि प्रेमसौन्दर्ययोः विषयविषयिभावेन भिन्नाश्रयत्वेन च भेद एव दरीदृश्यते; तथापि एकप्रकृतिकत्वमव्याहतमेव। यथा चक्षूरूपयोः विषयविषयित्वेऽपि एकतेजःप्रकृतिकत्वं तद्वदिहापि।

रसरूप-भगवत्प्रकृतिकत्वेन रसरूपे भगवदात्मनि तु प्रेमसौन्दर्ययोरैक्यमेव। आत्मन एव निरतिशयप्रेमास्पदत्वेन सर्वातिशायिसौन्दर्यम्, तस्यैव च प्रेमरूपत्वम्। यथाऽन्यत्र प्रकाश्यप्रकाशयोर्भेदेऽपि आत्मनि तयोरैक्यमेव अवेद्यत्वे सत्यपरोक्षत्वेन स्वप्रकाशत्वात्, तस्मिन्नेव प्रकाशत्वम्, निरावरणवस्तुरूपत्वञ्च; तथैवाऽऽत्मन एव निरतिशयप्रेमास्पदत्वदर्शनात् तस्यैव परमानन्दरूपत्वं सौन्दर्यरूपत्वञ्च। तस्यैव रसरूपत्वेन प्रेमरूपत्वमपि। एवं परमाभेदेऽपि लीलया तत्रैव भेदप्रचिकाशयिषया सौन्दर्यमयस्य आनन्दस्य वृषभानुजारूपत्वं प्रेम्णो रसस्य वाऽऽनन्दसूनुरूपत्वम्। तयोरेवान्यत्र कामेश्वरीत्वम्, त्रिपुरसुन्दर-त्रिपुरसुन्दरीत्वादिकं व्यज्यते।

मूलतत्त्वं कैश्चिद् ब्रह्मतत्त्वेन, कैश्चित् हिततत्त्वेन चाख्यायते। तस्यैव च परात्परप्रेमरूपत्वञ्च प्रोच्यते। आनन्दो नाम नाविज्ञातस्तिष्ठति, अप्रकाशमानस्य अनानन्दत्वात्। नित्यापरोक्षस्तु प्रत्यगात्मा। तस्मादेव तदभेदेनैव परमात्मनोऽपि स्वप्रकाशत्वमानन्दरूपत्वञ्च। तस्मात् प्रत्यगात्मैव त्रिपुरसुन्दरी

पुरत्रयसाक्षिणी प्रोच्यते। लोके यद्यपि स्थूल-देश-कालाद्युपाधिवशात् प्रेम-सौन्दर्ययोः पार्थक्यमनुभूयते; तथापि प्रेम-सौन्दर्ययोः सहजः सम्बन्धो लोकेऽपि स्फुटं दरीदृश्यते।

यावतांशेन काव्य-सङ्गीतादिभिः देश-कालोपाध्यतिक्रमणम्, तत्र तावतांशेन सहजत्वं व्यज्यते। तेनैव सहृदयेषु प्रेम-( रस )-सौन्दर्ययोरभिव्यक्तिः। दिव्य-दम्पत्योरिह राधा-कृष्णयोस्तु प्रेमसौन्दर्ययोः पूर्णमैक्यं सामरस्यमैकरस्यं वा व्यज्यते। तेनैव विपिनराज-वृन्दावनधाम्नि परमानन्दरसमय्यां रासक्रीडायां लोकोत्तरप्रेम-सौन्दर्यरूपयोरेव श्रीकृष्ण-तत्प्रेयसीराधारूपेण अभिव्यक्तिः सहृदयैः क्रियते।

लोकोत्तर-वन्द्य-मधुर-प्रेमबन्धनाबद्धयोः प्रेमासक्तयोः पूर्णसामरस्येन एकैव रुचिः, एक एवास्वादः। सर्वोत्कृष्टानुराग-रससरोवरे दिव्यं प्रेमैव नीलसरोज-रूपः श्रीकृष्णः, दिव्यं सौन्दर्यमेव पीतपद्मिनी श्रीराधा। तदुक्तम्—

दिव्यरागमहोद्याने पुष्पितं नीलमुत्तमम्।
प्रेमैव परमः कृष्णो नागरः परिकीर्तितः॥
तत्रैव पुष्पितं पीतपुष्पं सौन्दर्यमुत्तमम्।
राधिका नागरी प्रोक्ता श्रीकृष्णप्राणवल्लभा॥
प्रेमैव किल सौन्दर्यं सौन्दर्यं प्रेमरूपधृक्।
तेनैव माधवो राधा राधैव ननु माधवः॥
रागोद्रेकाद्योग्यरूपा मोहिनी मोहनो भवेत्।
रसेश्वरो रसोद्रेकान्मोहनो मोहिनी तथा॥ इति।

यद्वा—

घनश्याम-तमालेन तरुणेन तु मोहिनी।
दिव्य-स्वर्णलताऽऽश्लिष्टा तरुणी ननु राधिका॥
अद्भुते प्रेमपर्यङ्के सौन्दर्यास्तरणान्विते।
प्रेमसौन्दर्यसर्वस्वौ संश्लिष्टौ दम्पती मुदा॥
प्रेमरूपावुभौ यद्वा सौन्दर्यैकस्वरूपकौ।
प्रेमसौन्दर्य - सर्वस्व - दिव्यामृत - महार्णवौ॥
समतिक्रान्तसीमानौ परिष्वक्तौ मुदोन्मदौ॥ इति।

अचिन्त्याद्भुतदिव्यलीलाशक्त्या सान्द्रौ प्रेमसौन्दर्यघनौ संविदानन्दौ मूर्तिमन्ताविह रसिक-रसनीयौ।

'स भगवः कस्मिन् प्रतिष्ठितः? स्वे महिम्नि इति श्रुत्या ब्रह्मणः स्वमहिम-प्रतिष्ठितत्वमुक्तम्। मूले मूलाभावात् मूलं मूलमिति रीत्याऽपि सर्वमूलस्य

मूलत्ववत् सर्वाधारस्य निराधारत्वं सर्वप्रकाशकस्य स्वप्रकाशत्वञ्च प्रोक्तम्। तेनैव वैकुण्ठ क्षीरसागर-शेषसिंहासनादिरूपेणापि भगवत एवाविर्भावविशेषः।

पूर्णानुराग-रससार-सरोजात-तत्सर्वस्व-पङ्कजनि-पङ्कजरूपं वृन्दावनम्। तदीयकिञ्जल्करूपाः तत्सीमन्तिन्यः। तत्परागो माधवः। तत्रत्यमकरन्द-रसात्मिका वृषभानुजेत्युक्तमेव।

रससारसर्वस्वरूपत्वादेव नित्याभिनव-नवोन्मेषसौन्दर्यशालि - प्रेमार्णवा-स्पदमेव वृन्दावनम्। तत्र कचिन्मरकतमणिमयीषु रत्नभूमिषु स्वर्णवर्णानि दूर्वादलानि। स्वर्णमयीषु भूमिषु महेन्द्रनीलमणिमयानि दूर्वादलानि। पद्मरागमणिप्रभासु भूमिषु स्फटिकप्रभाणि दूर्वादलानि। एवं स्फटिकप्रभेषु स्थलेषु पद्मरागप्रभाणि दूर्वादलानि। तेजोमयीषु प्रकाशप्रायासु स्थलीषु च नानाविधानि रत्नानि खचितानि।

ततश्च सौन्दर्यमाधुर्यमय्यो वीचयः प्रतिभासन्ते। कर्पूररजोमिश्रैः पुष्पपरागैर्मनांसि नयनानि च शीतलानि भवन्ति। तत्रत्याः सर्वेऽपि तरवः कल्पतरवः। तमालपरिष्वक्ताः स्वर्णलताः स्वभाभिः बलादावर्जयन्ति मनांसि। तत्रत्य-वृक्षलतादिप्रकाशकिरणाः कोटि-कोटि-मार्तण्डमण्डल-प्रकाशानतिशेरते।

वृन्दावनस्य परितः शृङ्गाररसप्रवाहपूरिता कलिन्दनन्दिनी निखिल-रसामृतमूर्तौ श्रीकृष्णे तत्प्राणेश्वर्यां कीर्तिजायामुत्तरोत्तरमुत्कृष्टभावं जनयन्ती कृतार्थयति आत्मानमन्यांश्च। विविधपुष्पपरागासवोन्मत्ता भृङ्गावलयो मनोरमैः स्वगुञ्जारवैः अनुरागघनगर्जनैरिव निनादयन्ति वनराजीः। हंस-सारस-कारण्डवाः शुक-पिक-मयूरादयश्च द्रुमारूढा रागिण्य इव कलरवै-र्गायन्ति। हरिण्यो मयूर्यश्च श्यामयोः पादारविन्दमकरन्दरसोन्मदा विपिन-राजं शोभयन्ति। मल्लिका-मालती-जाती-यूथिका-चम्पका-ऽशोक-पुन्नाग-पाटलादिभिः स्थलजैः जलजैश्च नील-पीतैः कुमुदैः कह्लारैरन्यैश्च अनेकविधैः कुसुमैः कुसुमाकरायते वृन्दारण्यम्।

मनोज्ञैरनेककोटिमनोजैः श्रिया रत्या चाहर्निशं सेव्यमानं तदरण्यं प्रेष्ठयोः प्रीतिततिकरम्। तत्रत्येषु अनन्तानन्तकुञ्जेषु नित्यनूत्नैः सुभगैः तूलिकातल्पैः किसलय-कुसुमस्तबकरचित-पर्यङ्कैः दिव्यैरन्यैश्च उपभोगोपकरणैः प्रातिस्विक-मावर्ज्यन्ते प्रेष्ठयोस्तत्सखीनाञ्च मनांसि। दिव्यगन्धान्वितैः पटवासैः विविधपुष्परसासिक्तैर्दिव्यैः कोटि-कोटिविधैः पट्टाम्बरैः दिव्यप्रभाभास्वरैः अलङ्कारैश्च कोटि-कोटि-घनदामिनी-द्युतिद्योतिभिः नीराज्यत इव वृन्दावनम्।

तत्र सौन्दर्यं प्रेमपरिष्वक्तं प्रेम च सौन्दर्यालिङ्गितं साक्षात्क्रियते। सौन्दर्य-माधुर्यमयैरुत्तालतरङ्गैः उद्वेलिते प्रेमसौन्दर्याम्बुधौ मुग्धौ रसिकवरौ प्रेष्ठौ मोदेते। तथा चोक्तम्—

महानन्द - सुधाम्भोधिरनुरागतरङ्गितः ।
प्रेमसौन्दर्यधाराभिरभिवृष्टः स्मराम्बुदैः ॥
प्रमोदेते मुदा तत्र पुष्पितौ नीलपीतकौ ।
दिव्यच्छविमयौ रम्यौ रसिकौ वरपङ्कजौ ॥
प्रेमामृत-रसागारे वृन्दावन - सरोवरे ।
क्रीडेते रससंसक्तौ मधुरौ रसिकोत्तमौ ॥ इति ।

श्रीवृन्दाया वनं यौवनमेव वृन्दावनम् । तद्वदेव प्रेष्ठयोर्विशिष्टलीलासु तदीय-साहचर्यम् । तस्य पत्रेषु प्रसूनेषु प्रेष्ठयोः स्वरूपप्रतिफलनमन्योन्यव्यतिकरसंभ्रमोऽपि । तत्र प्रेयसीभ्रान्त्या स्वपरिरम्भणे स्वस्य प्रवृत्तिः सम्भाव्यते । तद्वारणाय दिव्याङ्ग-सौरभादिभेदैस्तत्परिहृतिः । कचित्तदसंभवेऽपि नेत्रयोरञ्जनाद्यर्पणेन तत्सखीभावापत्तौ तदप्रतिबिम्बनस्वाभाव्येन निर्वाहः । तदुक्तं महानुभावैः—

श्रीराधाया मम च यदहो केलिचातुर्यधारा
यच्चात्युच्चैर्निरवधिकरी वृद्ध्यते कामतृष्णा ।
नित्यं गाढं यदतिवलते कोऽपि नौ प्रेमबन्धः
सर्वं वृन्दावनरसखनेः शक्तिविस्फूर्जितं ते ॥

( वृ० श० ) इति ।

राधाकरा-ऽवचित - पल्लव-वल्लरीके,
राधापदाङ्क-विलसन्-मधुरस्थलीके ।
राधायशो - मुखर - मत्त - खगावलीके,
राधाविहारविपिने रमतां मनो मे ॥

( रा० सु० १३ ) इति ।

किं वा नस्तैः सुशास्त्रैः किमथ तदुदितैर्वर्त्मभिस्तद्गृहीतैः,
यत्रास्ति प्रेममूर्तेर्नहि महिमसुधा नापि भावस्तदीयः ।
किं वा वैकुण्ठलक्ष्म्याऽप्यहह परमया यत्र मे नास्ति राधा,
किन्त्वाशाऽप्यस्तु वृन्दावनभुवि मधुरा कोटिजन्मान्तरेऽपि ॥

( रा० सु० २१६ ) इति ।

रसरूपायां राधायां रसधामललामभूतस्य तस्यैवानुग्रहेण प्रीतिः । तदीय-पदनखमणिचन्द्रिकया निरस्ततमसि चेतस्येव रसधाम्नि तत्रानुरागधीरुदेति । यथा—

परिपूर्णपरप्रेम्णो जाड्यं चैतन्यमेव च ।
अवस्था द्वितयी नित्यं व्यज्यतेऽनुक्रमेण तु ॥

जाड्यं रसमयं यच्च तद्वृन्दावनमेव हि।
चैतन्यमेव तत्सख्यस्तत्प्रेम-तरलाशयाः॥
घनीभूतेऽचले भावे श्रीवृन्दावनरूपिणि।
घनतारल्यभावेन निर्वृत्ते रसवत्तमे।
रसरूपे रसानन्दे राधिकाहृदयेऽमले।
चैतन्यमय्य-स्तत्सख्य-स्तत्क्रीडारस कौतुकाः।
क्रीडयन्ति परानन्दौ रसशेवधि-निर्वृतौ॥ इति।

रसः स्वप्रकाशः, तेन तन्मयं वृन्दावनं चिन्मयमेव। तेन तत्रत्यकुञ्जेषु प्रेमार्द्रौ प्रेमविह्वलौ प्रेमाब्धिमग्नमानसौ प्रेमविस्मृतविग्रहौ वृन्दावनमेव अवधापयति व्यवहारयति च। प्रेष्ठयोर्वदनबिम्बमाधुर्यं केलिमाधुर्यञ्च आस्वाद्य तत्रत्या लता-वल्लयो विह्वलितात्मानश्च उत्पुलकिताङ्गरुहाङ्घ्र्यश्च उदञ्चिताश्रुकणाः श्रीकृष्ण-प्राणनाथायाः श्रीराधायाः प्रेमामृतवर्षिण्या दृशा करपल्लवेन चोपलालिता वृन्दावनतरुलताः प्रेमामृतप्रदायिका भवन्ति। गोष्ठवृन्दावन-क्रीडावृन्दावनाभ्या-मप्युत्कृष्टं राधाकुञ्जवाटी-वृन्दावनम्।

तत्र प्रेमदैवतं सर्वदैव प्रेमतृषार्तम्। अन्यत्र जलेन पिपासोपशान्तिः, परं यत्र जलमेव पिपासार्तं तत्र कथं तदुपशान्तिः? प्रेमदैवतमेव राधाकृष्ण-युगलरूपेण परस्परप्रेमपिपासा-व्याकुलम्। अन्योन्य-वदनेन्दु-सौन्दर्यामृतपान-परायणमपि तत्तृषा-व्याकुलितम्। तथा च गोपालचम्प्वाम्—

कुञ्जाः क्वचिद्रत्नगृहाङ्गतां गता वृक्षाः क्वचिद्रागगृहाधिकस्पृहाः।
वल्ल्यः क्वचिल्लासकलाकलापिकाः स्थल्यः क्वचिद्रत्नतुलाऽतुलार्चिताः॥

स्वर्णक्षोण्यां तमाला गरुडमणिभुवि स्वर्णपुष्पाः सुवर्ण-
प्रख्ये वृक्षे पलाशान्यसितमणिसमान्येवमन्यत्र किञ्चित्।
तेषां यद्येकपत्रं प्रतिकृतिकलया कर्तुमिच्छेद्विधाता,
श्लोकेताऽहर्निशं वा तदपि नहि यशः किञ्चिदप्यश्नुतीव॥ इति।

लोकोत्तरप्रेमतृष्णयैव प्रेममयौ रसिकौ प्रेममयेऽपारमहोदधौ प्रेमवैवश्येन अवगाहमानौ विहरतः। चन्द्रस्येव राधामाधव-युगलस्य दर्शनेन उद्वेलितस्य तस्यैव अनन्तापारस्य प्रेममहोदधेः कस्यचित्तरलतरङ्गस्य कश्चिच्च्युतः कणो-ऽनन्तानन्त-ब्रह्माण्डानि पूरयित्वा समुद्रिच्य समुच्छलितः।

यद्यपि अनन्यनिष्ठैव तद्रतिः; तथापि प्रातिकूल्येन अन्यनिष्ठत्वेऽपि तत्र न प्रातिकूल्यस्फुरणमिति भावविशेष-दर्शनार्थमनेकनायिकासम्बन्धः। तदुक्तम्—

सखि हे चरतु यथेष्टं वामो वा दक्षिणो वाऽस्तु।
श्वास इव प्रेयान्मे गतागतैर्जीवयत्येव॥ इति।

माधवेन्दुवदनं विलोक्य वै वर्धतेऽम्बु तरसाब्धिरक्रमः।
यस्तदीयतरलस्तरङ्गकस्तत्कणोऽपि परितः प्रचक्रमे॥
सम्प्रपूर्य स उ विश्वसन्ततिमत्यरिच्यत ततोऽपि सत्वरः। इति च।

समानया प्रेमतृष्णया विवशं राधामाधवयुगलं सर्वथैक्यमापन्नम्। तेनैव तत्र युष्मदस्मत्प्रयोगोऽपि न सोढुं शक्यते। तथा हि—

'प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवादः
त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः।
त्वं मे ते स्यामहमपि च यत्तच्च नो साधु राधे,
व्याहारे नौ नहि समुचितो युष्मदस्मत्प्रयोगः॥ इति।

रसतृष्णा-परिप्लुत एव रसिकः तस्यां तीव्रतमायां सत्यां तत्र गाम्भीर्यमनुभवति। अनन्ततृष्णाया व्याप्तौ दिव्यदम्पती परस्परप्रेमरसास्वादयितृत्वादेव रसिकशिरोमणितामुपजग्मतुः। उभयोः समानं मनः, समानं हृदयम्, समानैव अभिरुचिः, समानं वयः, समानमेव वसनालङ्कारादिकम्, समानं छविसौन्दर्यादिकम्। समानेन रसेन परिप्लुतौ द्वावपि अन्योऽन्य-वदनेन्दुचकोरनयनौ। द्वावपि परस्परासङ्गसङ्गिनौ जलमीनायमानौ सदैव सद्भ्रयुञ्जौ प्रकाशेते। तत एव अन्योन्यप्रेमसौन्दर्ये अन्योन्यप्रतिबिम्बिते भवतः। तेनैव प्रेमात्मकं सौन्दर्यं सौन्दर्यात्मकञ्च प्रेमतत्त्वमभिव्यज्यते। सौन्दर्यमयं प्रेमैव माधवः, प्रेममयं सौन्दर्यञ्च राधा। सौन्दर्येण प्रेमतत्त्वमोतञ्च प्रोतञ्च। प्रेम्णा च सौन्दर्यमोतञ्च प्रोतञ्च। प्रेमसौन्दर्यमयस्य राधामाधवयुगलस्य सबाह्याभ्यन्तरमन्योऽन्यालिङ्गितत्वम्, अविविक्तत्वञ्च। यथा—

रतिरङ्गरसासक्तौ परिरब्धौ निरन्तरम्।
परस्पर-परिष्वङ्ग-लम्पटौ मोहितावुभौ।
प्रत्यभिज्ञाविरहितौ को गौरः श्यामलश्च कः॥ इति।

अत एव कः प्रेमसारसर्वस्वविग्रहः, कश्च सौन्दर्यसारसर्वस्वविग्रह इत्यपि निर्णेतुं न शक्यते। यथा—

अन्विष्यान्विष्य रसिकाः परिश्राम्यन्ति नित्यशः।
कः प्रेमा किञ्च सौन्दर्यं तयोर्नैवाधिजज्ञिरे॥ इति।

सत्यप्येवं नितान्तमैक्ये रसविशेषसिद्ध्यर्थं वैलक्षण्यमपि तयोरिष्यत एव। तदुक्तम्—

एके काञ्चन-चम्पकच्छविपरं नीलाम्बुदश्यामलम्,
कन्दर्पोत्तरलं तथैकमपरं नैवानुकूलं बहिः।

किञ्चैकं बहुमानभङ्गि रसवच्चाटूनि कुर्वत्परम्,
वीक्षे क्रीडनिकुञ्जसीम्नि तदहो द्वन्द्वं महामोहनम् ॥ ( रा० सु० ) इति ।

उभयोरपि प्रेममयत्वात् समानप्रेमवत्त्वेऽपि माधवस्य प्रेमाश्रयत्वं राधायास्तदालम्बनत्वम् । तथैव माधवस्य आवेशपूर्णा वेगवती प्रेमधारा कूलङ्कषा सरिदिव धावति, राधायास्तु प्रेमार्णवोऽतीव समुत्तालतरङ्गव्याप्तोऽपि गम्भीर-मर्यादामनतिक्रम्य स्वात्मन्येव समाहितः । यथा—

प्रियस्य प्रेम चापल्य-वेगावेश-समन्वितम् ।
प्रेयस्यास्तु तथैवास्ति प्रेम गाम्भीर्य-पूरितम् ॥
समुत्ताल-तरङ्गैस्तु व्याप्तोऽपि प्रेमसागरः ।
स्वमर्यादावशाबध्दोऽनियतस्त्वेव शोभते ॥ इति ।

प्रेमतृष्णामादायैव प्रेममार्गप्रवृत्तिः । तत्र सौन्दर्यजलेनैव तत्सेकः । रूप-सौन्दर्यस्य सर्वाङ्गपूर्णप्रकाशः शृङ्गारकेलिष्वेव व्यज्यते । तेन प्रेमतत्त्वं तृष्णा-प्रधानम्, रूपसौन्दर्यन्तु केलिप्रधानम् । माधवरूपेण प्रेमतृष्णा मूर्तिमती, श्रीराधा-रूपेण शृङ्गारकेलिमूर्तिमती । तेन प्रेमरूपयोर्नित्यतृट्केलियोगेन अखण्डमन-न्तञ्च प्रेष्ठप्रेयस्योर्विहारपारम्पर्यं वितन्यते । अनन्तसौन्दर्य-सुधाजलनिधिरपि अनन्तकोटि-कन्दर्पदर्पदलन-पटीयानपि सौन्दर्यसारसर्वस्वरूपां प्रेममयीं वृषभानु-नन्दिनीं तत्कटाक्षञ्च दृष्ट्वैव मोमुह्यते । तेन मदनमोहनोऽपि तत्कटाक्षोद्रिक्त-काममोहितो वेपथुगात्रो भवति । रूपसौन्दर्यमोहितं प्रेमाब्धिनिमग्नं दृष्ट्वा वैदग्ध्यसिन्धुरूपा वृषभानुकिशोरी कोमलकमनीय-भुजवल्लीपाशेन आबद्ध्य स्वाधरामृतं दत्त्वा बलात् समुद्धरति । जलहीनमीनो जलमिव स तन्महामधु-पानमापीय किञ्चिदवहितो भवति ।

नृत्यसङ्गीतपरायणयोस्तयोर्गुणै रसिकत्वम्, रसिकतया च गुणा उद्दी-प्यन्ते । तौ च बाहुप्रसार-परिरम्भ-करालकोरुनीवीस्तनालभन-नर्मनखाग्रपातैः कुटिलभ्रूविलोकन - कपटपूर्णरोषादिवाक्यपूर्णैः नेतिनेति वचनामृतादिभिश्च उद्वेलितमपि रसार्णवमतितरामुद्वेलयतः । चरणनूपुरकिङ्किण्यादीनां सङ्गीत-मयैः निनादतरङ्गैः हंसदात्यूहादयो निनदन्ति । तयोः सङ्गीतमाकर्ण्य खग-मृगादयोऽपि उत्पुलकिताङ्गरुहा भवन्ति । उडुगण-शशाङ्कादयः स्तम्भन्ते । कोटि-कोटिकन्दर्पतत्तयश्च प्रमुग्धमानसा भवन्ति । नित्यनिकुञ्जमन्दिरेषु कोमल-कमलदलकोमल-किसलयशय्यासु गौर-श्यामलौ दिव्यदम्पती सरस-नीलमणिमृदुल-काञ्चनकलेवरौ शोभेते । दिव्यदाम्पत्यमाहात्म्यातिशयात् रतिश्रियौ निजकरपल्लवैः पुष्पपरागपूर्णां मधुमयीं सुस्थलीं सुसेव्यां सम्पाद-यतः । प्रतिकुञ्जं दिव्यशय्यादिसमवेतां विपुलसामग्रीं भावयतः ।

दिव्यगन्धाढ्यं दिव्यतेजःसमन्वितं कोटिदामिनी-द्युतिसमन्वितं वृन्दावनं तन्महिम्नाऽतीव दीप्यते। यथा—

प्रेमामृतमहाम्भोधिमयं कामकलात्मकम्।
समुत्तालतरङ्गैश्च समुल्लासि सुखार्णवम्॥
दिव्यं युगलमद्वैतं राधामाधवरूपकम्।
नृत्य वादित्र-सङ्गीत-पूरितं तद्वनं सदा॥ इति।

तद्युगलसौन्दर्यमहिम्ना समुच्छलितदिव्यरसार्णवेन युगलं तदङ्गानि वसनालङ्करणानि तदावासस्थानानि तद्धाम च सम्प्लावितानि। तत्तद्वीचिषु तत्सखीनां नयनानि मीनायितानि। हंसमयूरमृगा दयोऽपि तन्मुखचन्द्ररसास्वादनपरायणाः चकोरायिताः।

तत्र समुद्वेलितौ रसमहार्णवाविव दिव्यदम्पती क्रीडतः। यौवनोन्मादेन अभिनवस्नेहोन्मादेन सौन्दर्योन्मादेन दिव्यानङ्गोन्मादेन मोदोन्मादेन रत्युन्मादेन अभिलाषोन्मादेन च मत्तौ स्वलोकोत्तरप्रेम्णा विश्वमेव उन्मादयतः। तत्रत्यानि खगमृगलतागुल्मादीन्यपि रसोन्मत्तानि। श्रीराधाया ये ये विलासास्ते सर्वेऽपि तत्सुखार्था एव। एवं श्रीमाधवस्यापि ये भावास्तेऽपि तत्सुखार्था एव। दिव्यलावण्यमय्याः प्रेयस्याः प्रेयसोऽनुरागमदेन रसकेलिप्रवृत्तायाः सौरतभावभरैरङ्गैः हावभावकटाक्षादिभिश्च मधुमयास्तरङ्गा उच्छलन्ति। कोटि-कोटिमन्मथमोहनैस्तैः माधुर्यामृततरङ्गैः प्रेयांसं तर्पयन्त्याः तस्या कोऽपि लोकोत्तरश्चमत्कारः समुल्लसति। प्रेयस्यास्तादृक्-प्रेमोल्लासभरैः विलासैः श्रमो भविष्यतीति प्रेयान् खिद्यते। दर्पणे स्वमुखचन्द्रमालोक्य खञ्जनमञ्जुनयनयोः अञ्जनरेखाञ्चितयो रसोद्दीपककटाक्षशरतैक्ष्ण्यं प्रेयसश्च मनोमार्दवमालोक्य तदसुखकल्पनया च प्रेयसी मोमुह्यते।

तत्सख्यश्च नित्यदिव्यदम्पत्योरपि नित्यनूत्न-विवाहकौतुकादिभिः नित्यवरवधूभावमापादयन्ति आस्वादयन्ति नववरवध्वोः पूर्वरागसङ्गमौत्सुक्यसम्भ्रमादिमयं नित्यनूत्नमेव रसार्णवमवगाहयन्ति—विवाहोचितैः नवनवैः शृङ्गारैः, अङ्गरागैः, प्रसाधनैः, अद्भुतैः वसनालङ्करणैश्च। यतोऽकाममपि भगवन्तं स कामयते, तेनैव तद्वशंवदस्य भगवतो वक्षसि नीलनीरदास्पदा दामिनीव श्यामल-तरुणतमाल-नवलपल्लवास्पदा पीतविहङ्गिकेव निकषाश्रिता सुवर्णरेखेव च राजते। निःसपत्नं परमसौभाग्यास्पदं पदं लब्ध्वाऽपि सा तुलस्या सपत्न्याऽध्युषितं पदाम्बुजरजश्चकमे। भक्तिपोषणार्थमपि कचित्तदुपयोगः, परं यत्र भगवदात्मकस्य प्रेम्ण एव परं प्रेमास्पदत्वम्, तत्र तु तदमितमाधुर्येणैव प्रेमभक्तिरुदयते।

वस्तुतस्तु–भगवदैश्वर्यमपि प्रेममयमेव, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि, जीवन्ति आनन्दं प्रयन्त्यभि संविशन्ति इति रीत्या दृश्यादृश्यमथस्य निखिलस्यापि जगतः तत्तद्रूपेण प्रेम्ण एवाभिव्यक्तिः। प्रेमाभिव्यक्तिमत्या दृशैव सोपलभ्यते। अत एव रसात्मकेन आनन्देन रसात्मकमेव सर्वं भास्यते।

केश्चित्तु—शुद्धज्ञानस्य परमतत्त्वरूपत्वेन द्रष्टृदृश्ययोरैक्यमेव तत्त्वमस्यादिभिः प्रबोध्यते। नेह नानास्ति किञ्चन इति नानात्वं तत्र निषिद्ध्यते। प्रेमदृश्यस्य प्रेमद्रष्टृस्वरूपत्वेन अभेदोऽभिप्रेयते। अत एव तत्रापि दृष्टृदृश्ययोरैकात्म्यमेव। न च प्रेमदृष्टेः मिथ्यात्वमिष्यते।

यद्यपि प्रेमदृष्टेः पक्षपातित्वं प्रसिद्धम्। तच्च आत्मपक्षपातित्वमेव, तत्स्वरूपस्य आत्मन एव निरतिशय-निरुपाधिक-परप्रेमास्पदत्वात्। तन्महिम्नैव अन्यत्रापि प्रेमास्पदेषु पक्षपातः। ज्ञानमपि तादृगेव। वेदान्तमतरीत्या ज्ञानमेव ज्ञानेन लक्ष्यते, अन्यस्य जडत्वेन स्फुरणानर्हत्वात्। सावरणस्य ज्ञानस्य तु वृत्त्यात्मकेन ज्ञानेन आवरणनिवृत्त्या स्वप्रकाशस्य तस्य स्वतोऽपरोक्षत्वसंभवः। तत्त्वपक्षपातो हि धियां स्वभावः, तत्त्वञ्च तदेव। तत एव प्रेमदृष्टिः स्वात्मपक्षपातिनी सती स्वात्मानमेव प्रकाशयति।

सर्वत्र माहात्म्यज्ञानमुपासनायां समपेक्ष्यते। भगवदैश्वर्यं तत्रापेक्ष्यते। किन्तु प्रेम्ण एवोपास्यत्वे तदमितमाधुर्यलेशानुभूत्यैव उपासकस्य स्वत एव स्वं स्वसर्वस्वञ्च तत्रार्पितं भवति। प्रेमात्मक-भोग्य-भोक्तृ-प्रेरितार एवात्र उपासकोपास्यगुरुरूपा भवन्ति। उपास्यस्य गुरोरिव उपासकस्यापि उपासनं भवति। प्रकृते राधैव उपास्या, कृष्णस्तु उपासक एव, तस्यापि प्रेमात्मकत्वेन उपासनम्। तेनैव अन्येषामपि उपासकानाम् उपास्यत्वमायाति।

प्रेमानन्दसुधासिन्धोः नित्यमेव अभिनव-नवायमानास्तरङ्गा इव उपासका अपि तद्रूपा भवन्ति। प्रेमरसमय्यस्तास्ता मुख्योपास्योपासकयोः विविधाश्चेष्टा एव लीलाः। लौकिकशृङ्गार-सादृश्येन ताः शृङ्गारात्मिका अपि भवन्ति। क्रिया सर्वाऽपि सैवात्र परं कामो न विद्यते इत्युक्तेः। निमित्तरहिता नित्या एव ता लीलापदव्यपदेश्याः। अनित्याः सहेतुकाः परिणामविरसाः शृङ्गारात्मिकाश्चेष्टाः। मूलप्रेमरसस्य उभयत्र समानत्वात् औपाधिकजीवेशयोरिव भेदोऽपि तात्त्विकोऽभेद एव। सर्वाधिष्ठान-परब्रह्मरूप-रसस्य शृङ्गार-करुण-हास्यादिवैविध्येऽपि रसाभिव्यक्तेश्चरमोत्कर्षः शृङ्गार एवेति स एवाङ्गीति, रसराज इति, उज्ज्वल इति चाख्यायते। अत्रैव शुद्धतमो रसो व्यज्यते। यथैव विज्ञानानन्दे विज्ञातृ-विज्ञान-विज्ञेयात्मक-त्रैविध्यविलक्षणेन स्वरूपानन्द

एवावशिष्यते, तथैवात्रापि आश्रया-ऽऽश्रयि-तद्विषयप्रभेदविलयेन शुद्धप्रेमात्मकः रसराज एव विराजते।

कैश्चित्तु—तात्त्विकभेदेऽपि त्रैविध्यप्रतीतिः सर्वदैव राजते। एवं नित्य-तृप्तावपि नित्यमतृप्तिः। तत एवोक्तम्—

अङ्कालिङ्गनशालिनी प्रियतमे हा प्रेष्ठ हा मोहने-
त्याक्रोशन्त्यनिकातराऽतिमधुरं श्यामानुरागोज्ज्वला।
व्यामोहादतिविह्वलं निजजनं कुर्वन्त्यकस्मादहो
काचित् कुञ्जविहारिणी विजयते श्यामामणिर्मोहिनी॥

अङ्कास्थितेऽपि दयिते किमपि प्रलापं
हा मोहनेति मधुरं विदधात्यकस्मात्।
श्यामानुराग-मदविह्वल-मोहनाङ्गी
श्यामामणिर्जयति कापि निकुञ्जसीम्नि॥

(रा० सु० नि० ४६) इति।

सन्निपातज्वरार्तस्य मधुरशीतल-सलिलपानमनु उत्तरोत्तरं पिपासार्ति-रुग्रा भवति, यथा स्वप्रकाशं ज्ञानं नित्योदितमस्तमयवर्जितं भवति, सुखञ्च अतिरोहितमेव तिष्ठति, तथैव रससुखसारमयप्रेमाऽपि यत्र क्वापि भवेदति-रोहित एव।

श्रीवृन्दावनीय-नित्यनिकुञ्जलीलायां दिव्यप्रेमात्मकस्य रसास्वादयितृ-रूपस्य भोक्तुस्तृष्णाभिलाषमयं दिव्यं प्रेमैव उज्ज्वलनीलरूपेण अभिव्यज्यते। विषयविषयिण्यास्तृष्णाया निन्द्यत्वेऽपि यथा परमात्मविषयिण्यास्तृष्णाया भक्तिरूपत्वं तथैव शुद्धप्रेमगोचरस्य अभिलाषस्य रसास्वादयितृ-भगव-द्रूपत्वमेव। तच्च उज्ज्वलश्यामलस्य अनन्तानन्तचन्द्रसिन्धुसमुद्भूत-दिव्य-चन्द्ररूपस्य कोटिकोटि-कन्दर्पलावण्यस्य निरतिशय-निरुपाधिक-परप्रेमा-स्पदत्वं स्फुटमेव। एवं परमोपभोग्यरूपस्य शुद्धप्रेममयस्य भोग्यस्य तु परमौदार्यमयस्य गौरतेजोमयत्वमपि स्फुटमेव निरतिशयमौदार्यमेव तद्रूपम्। चित्सारसर्वस्वरूपः प्रकाशस्तु उभयत्र सर्वज्योतींष्यतिशेते। तदेव दिव्य-दम्पतीमयं प्रेममयं नित्यमनन्तं ज्योतिरप्रकटलीलायां प्रकटलीलायाञ्च तत्त-द्धाम-नाम-रूप-लीला-तदुचित-परिकरादिविशिष्टं राजते। तदेव तत्त्वं तत्तदन्य-भगवदभिव्यक्तिरूपेण किंबहुना सर्वप्रपञ्चरूपेणापि रसिकैरनुभूयते। निरतिशय-निरुपाधिक-परप्रेमास्पदस्य प्रेमानन्दादिमयस्य सर्वहिततमस्य भगवत एव सर्वरूपत्वात्। (शतपथ १३, ६, १)।

तत्र कैश्चित्तु "वेदमारभ्यैव वैष्णवधर्मसम्बन्धेनैकविधानि परिवर्तनानि अङ्गीक्रियन्ते। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।" "विष्णुर्गोपाः इति

विष्णोर्गोपरूपत्वमपि । देवाधिदेव-नारायणरूपेण यज्ञादिरूपेणापि तस्यैव प्रसिद्धयः । वेदस्यैव एकायनशाखामाश्रित्य पाञ्चरात्रादि-वैष्णवागमैस्तदुपासनादिकं व्यञ्जितम् । वैखानसागमेन औखेयेन कृष्णयाजुषेणापि तदभिव्यञ्जितम् । एतैर्हिंसामयानां यज्ञानां स्थानेऽहिंसामयानां यज्ञानां प्रवर्तनम् । विचारस्वातन्त्र्यमेव वैष्णवधर्मस्य प्राधान्यमासीदित्यादिकं यत्कथितम्; तत्तु विकासवादिप्रभावमात्रफलम् । यतः तन्त्रागमपुराणादिभिः वैदिकधर्मस्य व्याख्यानमेव क्रियते स्म, न नूतनममूलं किञ्चित् परिकल्प्यते । 'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतं रसमेव भागवतं' रसिका मन्यन्ते । यच्च अव्याकृत-ब्रह्मधाम्नि रसमयं दिव्यदम्पतीमयं ज्योतिषामपि ज्योतिः, तदेव रसमयं रसपूर्णं तत्त्वं रसिकरसनाम्ये निकुञ्जे क्रीडते । सहजानुरागपूर्ण-वचनरचनामयं विविधस्फूर्तिमयैः शृङ्गारैः शृङ्गारितमिव प्रेमाङ्गनाङ्कितमिव वेणुगीतपीयूषमास्वादयति ।

कैश्चित्तु उच्यते—भगवतः प्रेमपारवश्यं सर्वैरङ्गीक्रियते । परं प्रेम्णो भगवतः शक्तित्वे गुणत्वे वा तन्नोपपद्यते, शक्तिगुणादीनां शक्तिमद्गुणि-पारतन्त्र्यावश्यम्भावित्वात् । प्रेम्णोऽपि पारतन्त्र्यं नाभ्युपगन्तुं युक्तम्, यस्मिन्नाधारे प्रेमा उदेति, तं वशयन्नेवोदेति । भगवत्ययं नित्योदितः, ततस्तं नित्यमेव स्वाधीनं कुर्वन्नेव भवति । तेन भगवतः प्रेमवश्यत्वं स्वाभाविकं नित्यं पूर्णञ्च भवति ।

यत्तु—प्रेमदातृत्वेनापि भगवतः स्वातन्त्र्यम्, प्रेमवत एव प्रेमदातृत्वसम्भवात्, तद्रहितस्य तदसम्भवाच्च । प्रेमवत्त्वे तु प्रेमवश्यत्वं प्रेमदातृत्वेनापि सिद्ध्यति । प्रेमवत्त्वेन प्रेमपरवशो भूत्वैव कृपया प्रेमदो भवति । तेन प्रेमैव तादृक् तत्त्वं सम्पद्यते, यस्य वशे भगवान् तद्भक्ताश्च तिष्ठन्ति । तेन प्रेमैव स्वतन्त्रं वस्तु । भगवान्, भक्तिः, भक्ताश्च तत्परिणामविशेषाः तदवस्थाविशेषा वा तद्रूपान्तराणि वा । दृश्यादृश्यमयं सर्वमपि तद्विलासविशेष एव । तदेव विविधरूपेण क्रीडते । प्रेमैव परमासाध्य-भगवत्तत्त्वमपि परमज्ञानप्रयोजको ज्ञानघनश्च स एवात्मा । तस्यैव निरतिशय-निरुपाधिकपरप्रेमास्पदत्वात् । तच्च रूपान्तरेषु इष्यत एव, आत्मनस्तु कामाय सर्वम् इत्यादिश्रुतिभ्यः । स एव सर्वसुखहेतुत्वात् 'हित' पदव्यपदेश्योऽपि गुरोरिष्टस्य चाभेदः सुप्रसिद्ध एव ।

वस्तुतस्तु—निरुपाधिकं ब्रह्मैव रसाऽऽनन्दादिशब्दैर्व्यवह्रियते । तस्यैव निरुपाधिक-परप्रेमास्पदत्वेन आत्मत्वमपि । भगवदादयस्तु तद्रूपान्तराण्येव । प्रेम्णो भगवतश्चाभेदेऽपि सर्वमेतदुपपद्यत एव । प्रेम्णस्तदवस्थाविशेषत्वेन भगवतः प्रेमवश्यताऽपि युज्यते । प्रेम्णः स्वात्मस्वरूपत्वेन तद्वश्यतापि आत्मवश्यतैव; अन्यथा पारवश्यत्वेन भगवतो दुःखित्वापत्तेः, सर्वं परवशं दुःखं सर्वं-

मात्मवशं सुखम् इति मनुस्मृतेः। स्वात्मरूपत्वे तु न दोषः। अन्यथा प्रेम्णः स्वतन्त्रतया परमतत्त्वरूपत्वे तस्याश्रयित्व-दानादिकमपि कथं संभवेत् ? वस्तु-भेदेऽपि औपाधिकभेदमादाय भेदव्यवहारोपपत्तिश्च सम्भवति। औपाधिकं भेदाभेदपक्षमादायैव प्रेमापेक्षितमेकत्व-द्वित्वादिकं संपद्यते। तत एव प्रेम्णः प्रियतमस्य चैकत्वमपि सङ्गच्छते। लोके तु प्रेम्णः स्वभिन्नाश्रयविषयत्वं प्रसिद्धमेव। यद्यपि तत्त्वतः सर्वाधिष्ठानरूपेण तत्राप्येकत्वम्; तथापि तस्य व्यावहारिकाऽभेदाप्रयोजकत्वमेव।

यदुक्तम्—"यत्तत्त्वं सर्वातीतं तदेव तत्त्वं सर्वव्यवहारगोचरमि"ति। तदपि नातीव चित्रम्; ब्रह्मण एव तादृग्लक्षण-लक्षितत्वात्।

सकलवाङ्मनसाऽतिगता चितिः सकलवाङ्मनस व्यवहारभाक्।

इति संक्षेपशारीरक - वचनात्। प्रेमरसस्य प्रीतिमयं जाड्यमेव वृन्दावनादि-भगवद्धामरूपेण व्यज्यते। तस्य चापल्यं तत्रत्यसखीरूपेण व्यक्तिमापद्यते, इत्युक्तमेव।

इन्द्र-प्रतर्दन-संवादपरायां कौषीतक्युपनिषदि ब्रह्मण एव हिततमत्वमुक्तम्। हितं कल्याणाद्युपकारकं वस्तु उच्यते। तच्च नैकविधं भवति। तत्रातिशयेन यद्धितं तदेव हिततमं भवति। 'वरं वृणु' इति इन्द्रेणोक्तः प्रतर्दनः 'यन्मनुष्याय हिततमं वेत्थ तदेव मे ब्रूही'ति वरं वव्रे। 'हिततमरूपेण मामेवोपास्व' इति इन्द्रेणोक्तम्। हिततमं वस्तु ब्रह्मैव निश्चीयते इति मामिति शब्दोऽपि शास्त्र-दृष्ट्या ब्रह्मपरः, तस्यैव निरतिशयकल्याणकरत्वेन परमोपकारकत्वात्।

यद्यपि प्रेमरसरूपं ब्रह्मतत्त्वं कूटस्थमेकमद्वितीयं चैव; तथापि अचिन्त्य-दिव्यलीलाशक्त्या तस्यैव साश्रय-विषय-नित्यनूतन-दिव्यप्रेमरूपेण अभिव्यक्तिः। प्रतिक्षणं नित्यनूतन-चमत्कृतिपूर्णस्य प्रेम्णः प्रादुर्भावात् प्रेमप्रवाहत्वोक्तिरपि सङ्गच्छते। तत्र प्रत्येकस्य नूतनत्वेऽपि तत्प्रवाहस्य अनाद्यनन्तत्वेन प्रेम्णोऽना-द्यनन्तत्वमपि सङ्गच्छते। तादृग्रूपस्य प्रेमतत्त्वस्य नित्यनूतनत्वेनैव भावुकैः दिव्यदम्पत्यो राधाकृष्णयोः प्रतिदिनं प्रतियामं प्रतिक्षणञ्च नित्यनूतनत्व-मनुभूयते सर्वासु लीलासु।

अभिनव-नवायमानयोः प्रियतमयोः ( प्रेष्ठ-प्रेयस्योः ) नवतमो रसो नवतमं च रूपसौन्दर्य-लावण्य-मार्दवादिकम्। तेन प्रतिक्षणं द्वयोः स्नेहोऽप्यभिनव एव। पीताम्बरमभिनवम्, नीलाम्बरञ्च अभिनवम्। तादृशैरभिनवैरेव प्रेमाम्बुद-बिन्दुभिः आर्द्रताऽप्यभिनवैव। तदुक्तम् आनन्दवृन्दावनचम्प्वाम्—

अनाघ्रातं भृङ्गैरनपहृत-सौगन्ध्यमनिलै-
रनुत्पन्नं नीरेष्वनुपहतमूर्मीकणभरैः।

अदृष्टं केनापि क्वचन च चिदानन्दसरसो
यशोदायाः क्रोडे कुवलयमिवौजस्तदभवत् ॥ इति ।

भाषाकविनाऽपि उक्तम्—

नयो नेह नवरङ्ग नयो रस नवल श्याम वृषभानु-किशोरी ।
नव पीताम्बर नव चूनरी नयी नयी बूँदन भीजत गोरी ॥ इति ।

अत एव अनाद्यनन्त-दिव्याद्भुत-प्रेमघनात्मकयो रसात्मकविहारस्य अनाद्यनन्तत्वेऽपि नाद्ययावत् परस्परं परिचयः, यतो नित्यनवनवायमानाऽभिरामाभा प्रभा शोभाकान्तिभिस्तादृशैरेव सौन्दर्य-माधुर्य-सौरस्य-सौगन्ध्य-वैदग्ध्यौदार्यादिभिः उभयोरपि प्रकाशवैलक्षण्येन समनस्काभ्यां नयनाभ्यां तदेवेति प्रत्यभिज्ञानाय परस्परमुखावलोकन-परायणयोरपि प्रेमाम्बुधिमग्नयोः प्रत्यभिज्ञान-दौर्लभ्यमेव ।

तत एव साश्चर्यं पृच्छति—

कोऽयं कृष्ण इति व्युदस्यति धृतिं यस्तन्विकर्णे विशन् ,

सखी प्रतिवक्ति—

रागान्धे किमिदं सदैव भवती तस्योरसि क्रीडति ।

तथापि अपरिचिन्वती परिहासोक्तिं मत्वा वदति—

हास्यं मा कुरु मोहिते !

सा च—

त्वमधुना न्यस्ताऽस्य हस्ते मया,

लब्धस्मृतिराह—

सत्यं सत्यमसौ दृगङ्गनमगादद्यैव विद्युन्निभः ॥ इति ।

श्री ध्रुवदासस्तु—

न आदि न अन्त बिलास करै दोउ लाल प्रिया मे भई न चिन्हारी ।
नइ नइ भाँति नई छवि कान्ति नई नवरङ्ग नव नेह बिहारी ।
रहे मुख चाहि दिये चित चाहि परे रसरीति सुलवे सुहारी ।
रहें इक पास करें मृदु हास सुनौ ध्रुव प्रेम अकत्थ कहा री ॥ इति ।

द्वयोः सतोः ऐक्यापत्तिरेव प्रेमानुभूतिरित्यपि महानुभावैरुच्यते । तच्च यदि वस्तुभूतयोर्द्वयोरैक्यं तदा भावना प्रकर्षजन्यैव । औपाधिकश्चेद्

भेदस्तदा तु प्रेमात्मिका सा। प्रेम्णोऽद्वयावस्था द्वित्वमन्तरा नोपपद्यते। वैवश्येन परस्परप्रेमामृतसिन्धौ निमज्जनमेव प्रेमाद्वयावस्था। द्वित्वावस्थायां चैतन्यं व्यज्यते। उद्रिक्तप्रेमसिन्धौ निमग्नत्वादैक्यम्। क्षणे क्षणे चैतन्यव्यक्तिरेव तस्य अभिनव-नवायमानता। प्रतिक्षणं प्रेमसिन्धु-निमज्जनोन्मज्जन-पारम्पर्येण वैवश्य-चैतन्यपारम्पर्यं स्फुरति।

भोक्तृभोग्यमय्यौ प्रेष्ठ-प्रेयस्यौ यदा प्रेमोल्लासवशाद् अद्वयभावमुपगच्छतः, तदाऽपि तद्युगलरूपं लीलोल्लासविशिष्टमनतुभूय व्याकुलता जायते। प्रेमसिन्धोः पुनस्तदुद्भवः। प्रेमतत्त्वमेव प्रेरकम्। द्वयो रसास्वादनाय व्याकुलतावशात् तदेव निरुपमसख्येन सखीभूत्वा तत्परिचरति। तस्याः सख्या निरुपम-रसामृतसिन्धुमय-हृदयादेव रसेश्वरौ उद्गच्छतः, तत्रैव च पुनर्निमज्जतः। अत एव भक्तजनानां हृदयस्थे पूर्णानुराग-रससार-सरोवरे नील-पीत-पङ्कज-स्थानीयौ तौ अभिन्नहृदयौ एकात्मप्राणौ परस्परं क्रीडतः।

अथवा—भोग्यभूतं रासेश्वरीतत्त्वमेव निरुपमं तत्पङ्कजम्। तदीयसौन्दर्य-मकरन्द-निष्यन्दलुब्धो निरुपम-मिलिन्दो नन्दनन्दनः। रसधामत्वात् सुखदत्वादेव भोग्यं तद् गौरं महः, नित्यनूतनाभिलाषमयत्वात् नीलं तद्भोक्तृमयं महः।

प्रेमतत्त्वं यद्यपि सावरणमेव राजते, निरावरणं सद्रसाभासं भवति। यथा—

प्रेमाद्वयो रसिकयोरपि दीप एव
हृद्वेश्म भासयति निश्चलमेव भाति।
द्वारादयं वदनतस्तु बहिष्कृतश्चे-
न्निर्वाति शीघ्रमथवा लघुतां प्रयाति॥ इति;

तथापि स्वप्रकाशत्वात् तन्न तिरोधातुं शक्यते, तेनैव परःसहस्रैः तिरोधापन-प्रयासवैफल्यैः पूर्णः प्रेमेतिहासः।

यद्यपि स्वप्रकाश-प्रेमरससारसिन्धु-समुद्भूत-निष्कलङ्क-चन्द्ररूपत्वात् श्यामौ, तद्धाम तत्सहचर्यश्च स्वनामभिर्नित्यमेव राजन्ते; तथापि प्रेमच्छुरितचक्षुर्भिरेव तत्सर्वमवाप्यते, नान्यैः। सर्वप्राणिप्रेमास्पदत्वेन सर्वाराध्य-रूपतया प्रसिद्धोऽपि सर्वभजनीयोऽपि सर्वाश्रयोऽपि भगवानाश्रितः सन् स्वात्मरूपामेव राधां भजते। सर्वाधारस्वरूपो रससिन्धुरपि सख्यभावेन स्वात्मोल्लासविशेषरूपां वृषभानुनन्दिनीं परिचारिणीव परिचरति। यद्यपि विशुद्धमेकं प्रेमतत्त्वमेव वात्सल्य-सख्यादिरूपेणापि व्यज्यते; तथापि शृङ्गार रस एव सर्वातिशायी तत्पाकः स्फुट्यते।

कैश्चित्तु—"प्रेम-हितादि-पदव्यपदेश्यं नित्यक्रीडापरायणमेकमेव तत्त्वं विविधक्रीडादिविशिष्ट-रसरूपेण व्यज्यते। तस्यैव सख्य-वात्सल्यादिरूपेण रसराज-शृङ्गाररूपेणापि अभिव्यक्तिः। शृङ्गारस्य रतिः स्थायिभावः। तस्या एव विवर्तभूता अन्येऽपि स्थायिभावाः। लौकिकः कामभाव एव काव्येषु सत्कविप्रतिभाजन्येन विभावनाख्येन अलौकिकव्यापारेण सर्वरसिक-वेद्याऽलौकिकशृङ्गारादिरूपेण व्यपदिश्यते। लोके यासां कामचेष्टानां दर्शने-नापि जुगुप्सा भवति, तासामेव काव्यनाट्यादिषु सत्कविनिबद्धत्वेन अलौकिक-रसाभिव्यञ्जकत्वं निष्पद्यते। लौकिकस्य रसस्य येषां कारण-कार्य-सहकारिणां योगेन निष्पत्तिर्भवति, तेषामेव काव्यादिषु विभावा-ऽनुभाव-सञ्चारिभावपद-व्यपदेश्यता भवति। सहृदयानुभवाधारेणैव तस्य स्वप्रकाश-चिन्मयाऽखण्डब्रह्मसहोदरत्वं साध्यते, स्वीक्रियते च। तथापि तस्य रसस्य संवेदनपूर्वोत्तरकालयोरसत्त्वेन क्षणिकत्वमेव। तस्य च कृत्रिमव्यापारेण विभावनाख्येन साधारणीकरणापरपर्यायेण सत्कविलोकोत्तरप्रतिभाजन्येन अभिव्यज्यमानत्वादेव क्षणिकत्वम्। व्यापारस्य तस्यालौकिकत्वेऽपि प्रतिभा-जन्यत्वेन कृत्रिमत्वम्। विभावानुभावादिभिस्तदभिव्यञ्जनमपि तत्कृत्रिमत्व-प्रयोजकम्। इत्थं लौकिकस्य रसस्य व्यक्तिगतत्वे लौकिकत्वे च सत्यपि काव्यरसस्य सर्वजनीनमलौकिकत्वं यद्यपि भवति, तथाप्यनित्यत्वं कृत्रिमत्वञ्च अपरिहार्यमेव।

किन्तु रसो वै सः इतिश्रुत्या परमतत्त्वस्य रसरूपत्वोक्तेः भक्तिरसस्य रसरूपता। भगवद्भक्तास्तु भगवन्तमेव निखिलरसामृतमूर्तिं मन्यन्ते। प्रेमोपासकास्तु नित्यक्रीडापरायणं प्रेमतत्त्वमेव रसस्वरूपं मन्यन्ते। भगद्रूपत्वादेव तन्नित्यं भवति। भगवदंशभूतानां जीवानामपि कृते तत्सहजमेव। श्रुतिषु पुराणादिषु च रसरूपपरमतत्त्वस्य कथं रसरूपतेति वर्णनं नोपलभ्यते। अग्निपुराणादौ यत्तद्वर्णनम्, तदपि भरतसूत्राश्रितमेव। भक्तिरसामृतसिन्ध्वादिषु भरतरसप्रणालीमाश्रित्यैव भक्तिरसस्य रसत्वं विवृतम्। परन्तु भरतादिप्रोक्त-रसाभिव्यञ्जनप्रणाल्याः कानिचित् परिवर्त-नानि ऊरीकृतानि। तत्सर्वं प्रीतिसन्दर्भे स्पष्टम्।

तत्र भक्तिरसस्य साधारणीकरणाय कविप्रतिभाजन्यो विभावनव्यापारो नाङ्गीकृतः। किन्तु भक्तिरसस्य विभावादिस्वरूपमेव तादृशं येन तद्वासनावतां हृत्सु स स्वयं विभाव्यते। तेन पूर्वोक्तकृत्रिमताप्रयोजकस्य प्रथमहेतोरपाकरणे-ऽपि विभावानुभावादिजन्यत्वप्रयुक्त-कृत्रिमत्वस्य तत्प्रणाल्याः स्वीकारेऽपरि-हार्यत्वमेव। लौकिकरसस्य कारण-कार्य-सहकारिण एव काव्योपदर्शिताः सन्तो विभावादयो भवन्ति। कारणादीनामनित्यत्वेन विभावादिव्यक्त-रसस्य

कृत्रिमत्वमनिवार्यमेव। काव्यरसस्योद्बोधे रतेः कारण-कार्य-सहकारिणां हेतुत्वेन तस्य सामाजिकनिष्ठत्वमेव, नानुकार्य-नायकादिनिष्ठत्वम्। अनुकार्यानुभाव्य-रसस्य तु तद्रतिकरणादयो लौकिका एव। तेन अनुकार्यनिष्ठो रसो न कथमपि काव्यरसः। परं भक्तिरसस्तु तन्निष्ठोऽपि। भगवतो रसरूपत्वादेव भगवदनुभाव्यस्य रसस्य तद्रतिकारण-कार्य-सहकारिणस्तु स्वाभाविका एव रसकारणतां प्रतिपद्यन्ते, न स्वाभाविकं रूपमपहाय अलौकिकविभावादयो भूत्वा। तेन भगवत्प्रेमरसः भरतप्रोक्तपरिपाट्या अभिव्यज्यमानात् काव्यरसात् विलक्षण एव। भगवतः काव्यरसालम्बनत्वेऽपि रसस्य सामाजिकनिष्ठत्वमेव। भगवतोऽपि लोकवल्लीलत्वेन तद्रसानुभवः स्वाभाविकरीत्यैव भवति। लोके बालो यस्य वात्सल्यरसस्य विषयतां प्रतिपद्यते, स न काव्यरसवत् कृत्रिमो भवति। तस्य कारणादयस्तु यथावस्थिता लौकिका एव। लौकिके रसे भगवद्रसे च सहजत्वमेव समानम्, नान्यांशेन समानता। भगवत्कर्तृक-रसास्वादनस्य रसकर्तृक-रसास्वादरूपत्वमेव इत्यस्मिन्नंशे अस्याऽलौकिकत्वम्।

लोके सङ्कुचितपरिधिभिः नैकविधैरन्तरायैश्च क्षणिकमेव रसस्फुरणम्। काव्यरसस्तु कृत्रिमत्वात् क्षणिकः। परं भगवत्प्रेमरसस्तु कृत्रिमत्व-परिच्छित्ति-विनिर्मुक्तत्वात् नित्य एव। तेन तत्स्फुरणमपि शाश्वतमेव। तेनैव भगवत्प्रेमरसस्तु भगवद्रूप एव। अपरिमितत्वात् अलौकिकत्वात् अन्तरायशून्यत्वाच्च सरसहृदि स्वयं विभाव्यते। तेनैव भगवन्निष्ठोऽपि भक्तनिष्ठो भवति, तदुभयोः मधुरसम्बन्धस्य विद्यमानत्वात्। तेनैव स्वपरभेदमननुसन्धाय भक्तः भगवत्प्रेमरसं निर्विघ्नमनुभवति। काव्यक्षेत्रे नैतत् संभाव्यते, तेनैव तत्र कविप्रतिभा-जनित-विभावनव्यापारोऽपेक्षितः।

भरतरसपरिपाट्या नायक-नायिकाभेदा अपि अपेक्ष्यन्ते। तेनैव गौडीय-भक्तिरस-साहित्येषु राधाकृष्णयोरेव तत्तद्रूपेण वर्णनम्। कृष्णलीलायाः पौराणिकरूपवर्णनाय तद्युज्यतेऽपि। प्रेमरसोपासकैस्तु सा परिपाटी नैवाद्रियते। रतिः प्रेमैवाऽऽस्वादितः सन् रस उच्यते। अत्र तु प्रेम्णः अद्वय-युगलस्वरूपमेव श्यामयुगलम्। तदेव कारणं कार्यञ्च, तेन नालम्बन-विभावनत्वमिति।

तत्रोच्यते—यद्यपि प्राकृतरसापेक्षया भगवत्प्रेमात्मकस्य अप्राकृतरसस्य महद्वैलक्षण्यं खद्योत-मार्तण्डादिदृष्टान्तैः मधुसूदनसरस्वतीपादैरुक्तमेव ; तथापि तत्प्राकृताऽप्राकृताऽऽलम्बनभेदमूलकमेव मन्तव्यम्। रसाभिव्यक्तिप्रकारस्तु रसशास्त्रीय एव। तैत्तिरीयके ( ७ अनु० ) उक्तम्—

असद्वा इदमग्र आसीत् ततो वै सदजायत।
तदात्मानं स्वयमकुरुत। तस्मात् सुकृतमुच्यते। इति।

सर्वकारणस्य परमात्मनो जगदुत्पत्तेः प्राक् अनुत्पन्न-नामरूपत्वेन व्यवहारानर्हत्वेन असद्रूपत्वमुक्तम्। तत एव सतो व्यवहारार्हस्य जगत उत्पत्तिरुक्ता। नात्र 'पितुः पुत्र इव ब्रह्मणो विभक्तं जगदि'ति द्योतयितुं तद्ब्रह्म आत्मानं सच्चिदानन्दैकरसस्वरूपं स्वयं कर्त्रन्तरनैरपेक्ष्येण अकुरुत, जगदाकारेण कृतवत् इत्युक्तम्, तद्भिन्नस्य निमित्तोपादानादेरभावात्। तस्माद् ब्रह्म, स्वयंकर्तृत्वात्' सुकृतमुच्यते। जीवास्तु न स्वयंकर्तारः, किन्तु अन्तर्यामिप्रेरिता एव कुर्वन्ति।

यद्वै तत्सुकृतम्। रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति। इति।

यद्वै पूर्वोक्तं सुकृतशब्दवाच्यं ब्रह्मास्ति, स ब्रह्मपदार्थः रस एव। लोके तृप्तिलक्षणस्य आनन्दस्य हेतुर्मधुराम्लादिपदार्थो रस इत्युच्यते। ब्रह्मापि कृतकृत्यत्वादिलक्षणस्य तत्त्वविदामानन्दस्य हेतुत्वाद्रसो भवति। रसनीय-वेदान्तवाक्यजनित-मनोवृत्त्यात्मकेन ज्ञानेन आस्वादनीयत्वादपि ब्रह्मणो रसत्वम्। प्रीतिपूर्वं रसग्रहणमास्वादनम्। प्रीतिश्च आनन्दमन्तरेण न संभवति। तस्माद्रसशब्देन ब्रह्मण आनन्दरूपत्वमुच्यते। तेन निरतिशय-निरुपाधिकपरप्रेमास्पदत्वाद् ब्रह्मणो रसत्वं निरुपचरितमेव। अत एव अयं तत्त्ववित् पुरुषं रसं लब्ध्वा साक्षात्कृत्य धन्योऽस्मीत्येवमानन्दवान् भवति, आत्मलाभान्न परं विद्यते इत्यादिशास्त्रात्। तस्मात्तद्वत् परितोषहेतुत्वाद् ब्रह्मणो रसरूपता।

को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति।

इत्यादिश्रुतिभ्यः वैषयिकानन्दहेतुत्वादपि ब्रह्मणो रसरूपता युज्यते। यदि हृदयव्योमगतोऽयं परमात्मस्वरूपानन्दो न स्यात्तदा को वागादिभिरिन्द्रियैश्चेष्टेत? को वा प्राणेन श्वासादिकं कर्म कुर्यात्? एष हि द्रष्टा स्प्रष्टा घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः इति श्रुतेः प्राणाद्यात्मभावमपनोद्य अनया श्रुत्या रसरूपस्य परमात्मन एवाऽऽत्मत्वं बोध्यते। यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः इति श्रुतेश्च। यद्यपि असङ्गस्य चेष्टादिकर्तृत्वं न सम्भवति; तथापि विज्ञानमयकोशोपाधिकस्य तस्य तत् संभवत्येवेति सर्वथा स्फुटम्।

स एव आनन्दरूपो भगवान् सर्वान् प्राणिन आनन्दयति, परितोषयति, अभीष्टविषयलाभे सति मनो विषयाभिमुख्यं परित्यज्य विषयान्तराभिलाषोदयात् पूर्वमन्तर्मुखं तत्प्रत्यगानन्दमनुभवति। सोऽयमेव विषयानन्द उच्यते।

सैषाऽऽनन्दस्य मीमांसा भवति। युवा स्यात् साधुयुवाऽध्यापकः।

आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः।

इत्यादिविस्तरेण रसरूपस्य आनन्दस्य मीमांसा तैत्तिरीयोपनिषदि (ब्रह्मवल्ली, अनु० ८) अन्यत्र च प्रस्तुता। अविद्यया विवेके तिरस्क्रियमाणे अविद्यायाञ्चोत्कृष्यमाणायां हिरण्यगर्भमारभ्य मनुष्यपर्यन्तेषु जीवेषु ब्रह्मानन्दस्तत्तत्कर्मवशाद् विषयादिसाधनसम्बन्धवशाच्च यथाविज्ञानं भाव्यमानतया अपक्षीयमाणो भवति। स एव विद्याकर्मप्रकर्षेण गन्धर्वादिषु हिरण्यगर्भपर्यन्तम् उत्तरोत्तरं शतगुणोत्कर्षयुक्तः अकामहत-विद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते। ब्रह्मविद्यया त्वपनीतायामविद्यायां स्वाभाविकः परिपूर्णः परमानन्दोऽपरिच्छिन्नोऽवतिष्ठते।

तेन रसो वै सः इत्यादिना निर्विशेषः सविशेषश्च रसो निरूप्यते। पूर्वः कूटस्थोऽनाद्यनन्तैकरसः, द्वितीयस्तु तत्तदुपाधिशुद्धितारतम्यजनित-तारतम्योपेतः। नीरसमिदं जगद् रसरूपेण ब्रह्मणा सरसम्, स्फूर्तिरूपेण तेनैव स्फूर्तिमत् सद्रूपेण च तेन सत्तावदुच्यते।

तदुक्तमेव वार्तिके—

आब्रह्मस्तम्बलोकेऽस्मिन् पुण्यकर्मानुरूपतः।
आनन्दः परमो यस्मादानन्दयति नः सदा॥
सोऽयं लौकिक आनन्दो निष्ठां साधनसम्पदा।
यत्र प्रपद्यते भूम्नि सोऽस्त्यानन्दः परो रसः॥
ब्रह्मादि - नरपर्यन्त - पुण्यकर्मा - ऽनुरूपतः।
उपजीवति लोकोऽयं यस्यानन्दस्य विप्रुषम्॥
उत्तरोत्तर - वृद्ध्यैवं मनुष्यादधि तं वयम्।
प्रतिपद्यामहे साक्षादानन्दं स्वात्मनि स्थितम्॥
तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनः।
सम्पन्निमित्तो यो दृष्टः सैषेति स इहोच्यते॥ इति।

सर्वसाधनसम्पन्न-मनुष्यादि-ब्रह्मपर्यन्तभोग्याः सर्वेऽप्यानन्दा यत्रैक्यं गच्छन्ति, तथाऽकामहतत्वं च यत्र निष्ठां प्रपद्यते, स एव आनन्दो मुख्यो रसः।

यद्वैतत् सुकृतं प्रोक्तं सत्पदादिस्वभावकम् ।
नीरसस्यात्मकार्यस्य रसोऽसौ परमः स्मृतः ॥
रसः सारोऽमृतं ब्रह्म आनन्दो ह्लाद उच्यते ।
निस्सारं तेन सारेण सारवल्लक्ष्यते जगत् ॥
रसस्यातीन्द्रियस्यास्य स्वानन्दत्वं कुतो न्विति ।
अतस्तत्प्रतिपत्त्यर्थं रसं ह्येवेत्युत्तरं वचः ॥
इतश्चास्ति परं ब्रह्म रसत्वस्य प्रसिद्धितः ।
तृप्तिहेतू रसो नाम मधुराम्लादि-लक्षणम् ॥
अन्नादि-रसलाभेन यथा तृप्ताः समासते ।
आनन्दिनः कामहीना निरीहाः साध्यसिद्धये ॥
अपविद्धैषणाः तद्वद् बाह्योपादान-वर्जिताः ।
निःसम्बोधं परानन्दं प्राप्ताः संन्यासिनोऽमलाः ॥
नूनं तेषां परं स्वास्थ्यं चेतांस्याह्लादयन्त्यलम् ।
प्रह्लादचेतसां यानि तानि लिङ्गानि तेषु हि ॥
उपाग्नि यामनस्येव सुखसंसक्तचेतसः ।
लिङ्गं कण्डूयमानस्य लक्ष्यताम्यात्मवेदिषु ॥
अज्ञातानन्द - तत्त्वाना - मनुमानमिदं भवेत् ।
साक्षात्कृतात्मतत्त्वानां प्रत्यक्षतममेव तत् ॥ इति ।

को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् ।
इत्यादिश्रुतेश्च ।

तदेव काव्यप्रकाशे सिद्धान्तभूत-रसप्रक्रियानिरूपणप्रसङ्गे स्पष्टीकृतम् ।

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्वाद् अलौकिक-विभावादिशब्दव्यवहार्यैः ममैवेते, शत्रोरेवैते, तटस्थस्यैवेते, न ममैवेते, न शत्रोरेवैते, न तटस्थस्यैवेते इति सम्बन्धविशेषस्वीकार-परिहारनियमानध्य-वसायात् साधारण्येन प्रतीतैः अभिव्यक्तः वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्काल-विगलित - प्रमातृभाववशोन्मिषित - वेद्यान्तरसम्पर्कशून्या - ऽपरिमितभावेन प्रमात्रा सकलहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतः चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवाऽऽलिङ्गन् अन्यत् सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः ।

इति ।

शृङ्गं हि मन्मथोद्भेदस्तथागमनहेतुकः।
पुरुषप्रमदाभूमिः शृङ्गार इति गीयते॥

तथा च स्थायिनां विभावादिभिः समं संयोगात् व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात् विभावादीनां वा परस्परमिलनात् रसस्य निष्पत्तिरभिव्यक्तिरिति विभावानुभावसञ्चारिसंयोगाद्रसनिष्पत्तिः इति सूत्रार्थः। अर्थात् रतिकारणादीनामनुभवाद् असकृदभिनिर्मिता रतिः संस्काररूपेण सहृदयहृदयमारोहति। सैव च सुनिपुणमनुष्ठितयोः व्यक्तिविशेषसम्बन्धि-रतिकारण-विभावादिप्रतिपादकयोरपि काव्य-नाटकयोः पूर्वोक्तभावकत्वव्यापारेण व्यक्तिविशेषांशपरिहारेण रतिकारण-कामिनीत्वादिना प्रतीतैः विभावादिभिः व्यञ्जनया अभिव्यक्ता सामाजिकानामास्वाद्यतामायाति। एतादृशरसास्वाद एव रसनिष्पत्तिः।

तत्रापि स्थाय्युपहितं चैतन्यमेव रस इति मन्तव्यम्; तस्यैव वस्तुस्वरूपत्वात्, चित्तवृत्तितत्संस्कारादीनां जडत्वेनातथात्वाच्च। स च न कार्यः; विभावादिविनाशेऽपि तत्संभवप्रसङ्गात्। नापि ज्ञाप्यः; सिद्धस्य तत्त्वासंभवात्। किन्तु विभावादिभिर्व्यञ्जितश्चर्वणीयः विभावादव्यञ्जितचित्स्वरूपानावृतानन्दांश एव। ज्ञापकत्वातिरिक्तमेवात्र व्यञ्जकत्वमिष्टम्, तेन अलौकिकत्वमपि। चर्वणोत्पत्तिमादाय चर्वणाविशिष्टस्यैव रसत्वेन तदुत्पत्तिरपि उपचर्यते।

प्रत्यक्षादिप्रमाणगोचरत्वेन युञ्जानध्यानाजन्यत्वेन युक्तानुभाव्यनिर्विषयज्ञानभिन्नत्वेन च लौकिकप्रत्यक्षादिप्रमाण-युञ्जान-युक्तयोगिज्ञानविलक्षण-लोकातीत-विभावादिव्यक्तानन्दांशरूपतया स्वप्रकाशत्वेन ज्ञेयत्वमप्युपचर्यते।

तद्ग्राहकञ्च न निर्विकल्पकम्; विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकम्; चर्व्यमाणस्य अलौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात् उभयाभावरूपस्यापि उभयात्मकत्वमपि अलौकिकत्वमेव।

यच्च—"नियतिकृतनियमरहिताम् इत्यनेन काव्यप्रकाशकारैः काव्यरसस्य कृत्रिमत्वमुक्तमि"ति। तन्न; तद्वर्णनस्य कविभारत्याः प्रशंसापरत्वात्। नियम्यन्ते सौरभादयो धर्मा अनयेति नियतिः। यत्र पद्मत्वं तत्र सौरभविशेष इति नियतिकृतनियमरहिता कविभारती भवति, पद्मभिन्ने कान्तामुखेऽपि तादृक् सौरभविशेषादेः सत्त्वात्।

यद्वा—नियतिः अदृष्टम्, तत्कृतो नियमः 'स्वर्गीयशरीरोत्पादनद्वारैव स्वर्गोपधायकत्वम्'। तद्रहिता सा, अनेनैव शरीरेण स्वर्गसुखमापकत्वात्। तथैव व्याख्यातं ग्रन्थकृता—

नियतिशक्त्या नियतरूपा, सुखदुःखमोहस्वभावा, परमाण्वाद्युपादान-कर्मादि-

सहकारि-कारणपरतन्त्रा, षड्रसा, न च हृद्यैव तैः, तादृशी ब्रह्मणो निर्मितिः, तद्विलक्षणा कविवाङ्निर्मितिरिति।

अग्निपुराणे ३३९ अध्याये निर्विशेष-सविशेषभेदेन रसद्वैविध्यमुक्तम्। प्रथमस्य विवरणं यथा—

अक्षरं परमं ब्रह्म सनातनमजं विभुम्।
वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्॥
आनन्दः सहजस्तस्य व्यज्यते स कदाचन।
व्यक्तिः सा तस्य चैतन्यचमत्कारसमाह्वया॥

द्वितीयस्य विवरणमपि तत्रैव—

आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः।
ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्॥
अभिमानाद्रतिः सा च परिपोषमुपेयुषी।
व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते॥
तद्भेदाः काममितरे हास्याद्या अप्यनेकशः।
स्वस्वस्थायि - विशेषोत्थ - परिपोष - स्वलक्षणाः॥
सत्त्वादिगुणसन्ताना जायन्ते परमात्मनः।
रागाद्भवति शृङ्गारो रौद्रस्तैक्ष्ण्यात् प्रजायते॥
वीरोऽवष्टम्भजः सङ्कोचभूर्बीभत्स इष्यते।
शृङ्गाराज्जायते हासो रौद्रात्तु करुणो रसः॥
वीराच्चाद्भुतनिष्पत्तिः स्याद् बीभत्साद् भयानकः॥
शृङ्गार - हास्य - करुणाः रौद्र - वीर - भयानकाः।
बीभत्सा-ऽद्भुत शान्ताख्या स्वभावाच्चतुरो रसाः।
लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा॥
अपारे काव्यसंसारे कविरेव प्रजापतिः॥
यथाऽस्मै रोचते विश्वं तथैव परिवर्तते॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्।
स चेत् कविर्वीतरागो नीरसं व्यक्तमेव तत्॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति॥ इति।

एवमालम्बनविभावाः, तद्भेदा उद्दीपनभेदाश्च अनुभावाः, सञ्चारिणश्च तत्र सम्यङ् निरूपिताः।

इतिहास-पुराणादयो वेदस्य मुख्यं व्याख्यानम्, इतिहास-पुराणाभ्यां वेदार्थमुपबृंहयेत् इति वचनात्। तेन रसो वै सः इत्यादिश्रुतीनामग्निपुराणे निगद-व्याख्यानं दृश्यते। पूर्वं निर्विकार-ब्रह्मज्योतिरेव रसत्वेन निरूपितम्। उत्तरत्र तु काव्यादिप्रसिद्ध-सविशेष-रसनिरूपणम्, शृङ्गारादि-प्रभेदाश्च।

भरतमुनिरपि श्रुति-स्मृति-पुराणादिमूलकमेव रसशास्त्रं व्याचष्टे। पिङ्गलाद्यनुसारेण छन्दांसि काव्यं नाटकञ्चोक्त्वा रसरीतयश्च अग्निपुराणे विस्पष्टमुपदिष्टाः। विविधानि नृत्यादिगताङ्गकर्माणि नानाविधा अभिनया शब्दालङ्कारा अर्थालङ्काराः शब्दार्थालङ्काराः काव्यगुणाः तद्दोषाश्च तत्रैवोक्ताः।

गुडजिह्विका-न्यायेन अप्राकृत-सविशेष-निर्विशेषरसे चेतोऽवतारायैव प्राकृतरसनिरूपणमपि नासङ्गतम्, असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इत्युक्तेः। यथा प्राकृतवद्भासमानोऽपि भगवान् अप्राकृत एव, तथैव भगवन्निष्ठाः सर्वे भावाः प्राकृतवत् प्रतीयमाना अपि अप्राकृता एव, ववन्ध प्राकृतं यथा इति भागवतोक्तेः।

भगवतोऽपि काव्यरसभोक्तृत्वं भागवते प्रसिद्धम्—

एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः।
सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः॥ इति।

अत्र शरदि प्रसिद्धाः काव्येषु कथ्यमाना रसास्तेषामाश्रया निशाः। यद्वा—शृङ्गाररसाश्रयाः शरदि प्रसिद्धाः काव्येषु याः कथास्ताः। 'सविशेषणे विधि-प्रतिषेधौ विशेष्यमुपसंक्रामतः' इति न्यायेन 'शिखी ध्वस्तः, कुण्डली जातः' इतिवत् विशेषणभूत-काव्यरससेवितृत्वमेव विवक्षितम्।

न चाप्राकृतस्य तस्य कथं प्राकृतकाव्यरसभोक्तृत्वं संभवति, तत्सम्बन्धेन काव्यरसस्यापि अप्राकृतत्वोपपत्तेः। मन्निकेतं तु निर्गुणम्, मत्प्रसादस्तु निर्गुणः इतिवद् भगवत्सम्बन्धि-निकेतादीनामिव भगवदुपसेवित काव्यरसस्यापि निर्गुणत्वमेव। तेन रसशास्त्रप्रसिद्धा एव शृङ्गार-हास्यादयो रसशास्त्ररीत्यैव भुज्यन्ते, नृत्य-वादित्र-गीतादयो रासविलास-बन्धादयश्च तत्तच्छास्त्ररीत्यैव उपयुज्यन्ते यथा तद्वत्।

किं बहुना, ग्राम्यैः समं ग्राम्यवदीशचेष्टितम् इति रीत्या तल्लोकप्रसिद्धाः सर्वा अपि चेष्टाः लोकानुसारिण्य एव। द्वारका-लीलायां गृहाश्रमानुसारिण्यो लौकिक्यो वैदिक्यश्च सर्वा अपि चेष्टास्तत्तदनुरूपा एव। तथात्वेऽपि भगवल्लीलात्वेन न तासां क्षणिकत्वम्, किन्तु नित्यत्वमेव।

अनित्यत्वप्रतीतिस्तु लोकवदत्रापि समानैव। अन्यथा कूटस्थैकरसत्वप्रतीतौ नित्यनवनवायमानत्वमपि नोपपद्येत। अत एव शृङ्गारलीलायां सर्वाऽपि क्रिया लोकवदेव, क्रिया सर्वापि सैवात्र परं कामो न विद्यते इत्युक्तेः।

यथा लीला-हाव-भाव-कटाक्षादिविलासानां क्षणिकतायामेव रसाभिव्यञ्जकत्वं तथैव तत्तद्रसाभिव्यक्तीनामपि क्षणिकत्वं न दूषणम्, किन्तु भूषणमेव। प्रवाहरूपेण यथायोग्यावस्थानं तत्रापि सङ्गतमेव। अत एव क्षणिकक्रियाणामेव अप्राकृतलीलास्वपि रसनिर्वर्तकत्वम्। तेन रसशास्त्रपरिपाट्यैव भगवतोऽपि प्रेमात्मको रसो भावुकैर्व्याख्यायते।

श्री जयदेवेनापि शास्त्ररीत्यैव भगवद्रसो वर्णितः। यथा—

प्रथम-समागम-लज्जितया पटु-चाटुशतैरनुकूलम्।
मृदुमधुर-स्मितभाषितया शिथिलीकृत-जघनदुकूलम्॥
किसलयशयन-निवेशितया चिरमुरसि ममैव शयानम्।
कृतपरिरम्भण-चुम्बनया परिरभ्य कृताऽधरपानम्॥
अलसनिमीलित-लोचनया पुलकावलिललितकपोलम्।
श्रमजलसिक्त-कलेवरया वरमदनमदादति-लोलम्॥
कोकिल-कलरव-कूजितया जितमनसिज-तन्त्रविचारम्।
श्लथ-कुसुमाकुल-कुन्तलया नखलिखित-घनस्तनभारम्॥
चरण-रणित-मणिनूपुरया परिपूरित-सुरत वितानम्॥
मुखरविशृङ्खल-मेखलया सकचग्रह चुम्बनदानम्।
रतिसुखसमय-रसालसया दरमुकुलित-नयनसरोजम्।
निस्सहनिपतित-तनुलतया मधुसूदन-मुदितमनोजम्॥

विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवर-
श्रेणी - श्यामल - कोमलैरुपनयन्नङ्गै - रनङ्गोत्सवम्।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति॥

सम्भोग-विप्रलम्भ-नायक-नायिकादिभेदा अपि बहुधा भक्तैरुपवर्णिताः। प्रेमरसिकैरपि सूक्ष्माः संभोग-विप्रलम्भादयो वर्णिता एव। किं बहुना, नित्य-निकुञ्जलीलोपासकैः प्रेमरसिकैरपि रसवद्वचोभिः संस्कृतैः प्राकृतैश्च रस-रीति-गुणालङ्कारादियुतैः काव्यैरेव तत्तल्लीला वर्ण्यन्ते। तेन तत्रापि विभावत्वादि-सम्पत्तिरपरिहार्यैव। गोपीजना अपि वर्णयन्त्योऽभिरेमिरे इत्यादिभिः काव्यमय-वर्णनेन तत्र विभावत्वमापादयन्त्येव। यदा प्राकृतस्यापि नायकस्य सत्कवि-

प्रतिभाजनितैः काव्यैरलौकिकत्वं लोकोत्तररसव्यञ्जकत्वं सम्पद्यते, तदा किमु वक्तव्यं निखिलरसामृतमूर्तेः भगवतः शुक-शौनक-व्यासादीनामलौकिक-कवीनां दिव्यप्रतिभास्फुरितैरलौकिकैः काव्यैरलौकिकत्व-दिव्याप्राकृत-रसव्यञ्जकत्वे ।

यथा रसस्य रसभोक्तृत्वं तथैव रसस्य रसाक्रान्तत्वमपि सुवचमेव । तेन समुद्बुद्धसमुद्वेलित-संभोग-विप्रलम्भात्मकोभयविध-शृङ्गाररस-सुधासारसर्वस्वेऽपि भगवति शृङ्गाररसाश्रयत्वं युज्यते । तत्सूचनायैव 'चूतप्रवालबर्हस्तबकोत्पलाब्ज-मालानुपृक्त-परिधानविचित्रवेषत्वं' भगवत उपवर्णितम् । चूतप्रवालेन रागो रसाङ्कुरो बोध्यते, उत्पलाब्जैः तद्विकासासक्तिः । बर्हस्तबकेन तत्र व्यसनं मोहः । स्वात्मारामस्य भगवतः स्वात्मन्येव रमणं भवति, नान्यत्रेति तदात्मक-रससारसर्वस्वरूपाण्येव तद्रतिकारणादीनि ।

एतेन रसरूपो भगवान् रसरूपैरेव स्वाभाविकैरपि रति-कारण-कार्य-सह-कारिभिः रसमास्वादयति । सखीभिर्वर्णितै रसात्मकैः काव्यैस्तैरेव विभावादि-भावापन्नैः काव्यरसमप्यास्वादयति । यथा वीररसे वीररसोद्रेके, करुणरसे वा करुणोद्रेके तदतिशयो बोद्ध्यते तथैव शृङ्गाररस-सारसर्वस्वरूपे तदुद्रेके चमत्कृत्यतिशयः स्वाभाविकः ।

किञ्च--लोकेऽपि प्रत्यक्षै रतिकारणदिभिस्तादृशो रसो न व्यज्यते यादृग दूत्यादिवर्णितैः स्वनिर्वर्णितैर्वा तैरभिव्यज्यते । लोकवदेव भगवल्लीला चेदङ्गी-क्रियते तदा तत्रापि तैस्तैः रसवद्वाक्यात्मकैः काव्यैर्विभावादिभावापन्नैस्तैः विशिष्य रसाभिव्यक्तिः सुतरां सम्पद्यते ।

अत एव लौकिकरसापेक्षया काव्यरसस्य महद्वैलक्षण्यम् । कृत्रिमत्वं तु कार्यमात्रसाधारणम् । इहालौकिकत्वं विशेषः । भगवद्रसस्य स्वतो नित्यत्वेऽपि संभोगेऽभिनवनवायमानत्वे तत्रापि कार्यत्वारब्धत्वादिकमपरिहार्यमेव । प्रवाह-पारम्पर्य्येण तत्र नित्यत्वादिव्यवहारः । असाधारणैः काव्यैस्तत्रापि अलौकि-कत्वेन विशिष्य रसानुभूतिः । यथा रसे रसोद्रेकस्तथैव अलौकिकेऽप्य-लौकिकत्वं युज्यत एव ।

यद्यपि भगवद्रसोऽलौकिकोऽपरिमितोऽन्तरायशून्यः शाश्वतश्च; तथापि लीलायां रसव्यञ्जकत्वेन अन्तरामोऽपीष्यत एव । तेनैव वैचित्यादिना निमेषा-दिना वा विप्रलम्भादिप्रवीतिर्भवत्येव । यथा रसस्य रसकारणत्वं न विरुद्ध्यते तथैव रसस्य विभावत्वादिकमपि न विरुद्ध्यते । कारणपेक्षया विभावत्वं कार्या-पेक्षया काव्यरसत्वमपि तत्रोपपद्यत एव ।

अत एव सहृदयभक्त-सरसहृदयानुभूतिरपि तादृग्विधैव। न सहृदयानुभूतिः प्रमाणम्, किन्तु अविसंवादिसहृदयहृदयानुभूतिरेव प्रमाणम्। श्रुतिसहकृत-सहृदयहृदयविसंवादि-सहृदयहृदयानुभूतिस्तु न तथा। समेषां जीवानां भगव-त्सम्बन्धेऽपि न भगवद्रसस्तेषु व्यज्यते। वेद-रामायण-भागवतादिश्रवणादिना तु भगवद्रसानुभूतिः प्रत्यक्षसिद्धा, शास्त्रसिद्धा च। अत एव श्रोतव्यो इति श्रुतिः श्रवणं विदधाति। श्रोतव्यः कीर्तितव्यश्च'

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ।

—इत्यादि पुराणमपि तदुपबृंहयति।

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥

इति लक्षयति चाचार्यः। तदैव भगवता सह भक्तानां माधुर्यमय आत्मीय-सम्बन्धो व्यज्यते, नान्यथा।

लोकवदेव नायकादि-व्यवहारोऽपि नासङ्गतः, किन्तु रसपोषक एव, दिव्य-दम्पत्यो राधाकृष्णयोरेव सर्वोत्कृष्टनायकत्वस्य सर्वसम्मतत्वात्। जलतरङ्ग-वत् चन्द्रचन्द्रिकावत् भानुप्रभावत् रवधुनीपावित्र्यवत् रसनिधिमाधुर्यवच्च तयोरभेदेऽपि यथा लीलया एकात्मप्राणाधिष्ठित-श्रीविग्रहयुगल-तत्तल्लीलारूपेण व्यक्तिः, तथैव रसशास्त्रीय-नायिकादिरूपेणापि तदभिव्यक्तिः सुवचैव।

अथवा काव्यश्रवणवत् तन्निवर्णनानुसन्धानादिना परस्परं प्रातिस्विकं वा वा रस्यमानत्वेन प्रतिक्षणं कारणादिषु श्रीकृष्णादिषु विभावादित्वेन तदा-लम्बनके रसे सर्वथाऽलौकिकत्वमेव। विप्रलम्भे तु—

काश्चित् परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयत्।

इति स्पष्टमनुवर्णनादिना तद्रसास्वादनम्। सम्भोगेऽपि मानसिक-तन्निवर्णन-मस्त्येव।

नन्वेवम्—अत्रालम्बनविभावरूपस्य श्रीकृष्णस्य स्थायिभाव-रसरूपत्वे स्थायिभावस्य च विभावादिसापेक्षत्वे भेदेऽन्योऽन्याश्रयत्वम्, अभेदे स्वात्मा-श्रयत्वमिति। न च धर्मिरूपस्य आलम्बनविभावत्वधर्मरूपस्य स्थायिभावत्व-मित्युक्तमिति वाच्यम्; विप्रलम्भस्थायिभावस्यैव केवलत्वेन धर्मिरूपत्वोक्त्या तद्विरोधापरिहाराद् श्रीवल्लभाचार्यरीत्या विप्रलम्भस्य धर्मिरूपत्वं संभोगस्य च धर्मरूपत्वमुक्तम्। तेनैव केवलस्य श्रीकृष्णस्य विप्रलम्भात्मकत्वेन धर्मिरूपत्वम्, राधासहितस्य कृष्णस्य संभोगरसात्मकत्वेन धर्मरूपत्वमुक्तमिति चेन्न। पूर्वपूर्व-

सिद्ध-स्थायिभावस्य तदुत्तरोत्तरस्थायिभावं प्रति आलम्बनविभावत्वोपपत्तेः। एवमेव पूर्वपूर्वसिद्ध-स्थायिभावरूप-कृष्णनिष्ठा-ऽनुभावादीनामुत्तरोत्तरस्थायिनं प्रत्यनुभावत्वादिकमपि।

न च पूर्वोत्तर-स्थायिभावव्यक्तीनां भेदोऽसिद्ध इति वाच्यम्; प्रतिक्षणं तन्माधुर्य-नवनवायमानत्वोपाधिना स्थायिभावव्यक्तीनां भेदेऽपि प्रवाहाभ्युपगमेन दोषाभावात्। न चैवं साकारस्य सविग्रहस्य सविशेषस्य रसस्य अनित्यत्वमेवेति वाच्यम्; विद्वन्मण्डनादौ भगवद्विग्रहस्य नित्यत्वसाधनात्।

अद्वैतिरीत्या तु—अघटितघटनापटीयसा अनिर्वाच्येन भगवत्स्वात्मवैभवरूपेण शक्तिविशेषेण कूटस्थनित्यत्वेऽपि तदुपपत्तेः। तत्र—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
देवानां गुणलिङ्गानामानुश्रविककर्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या।
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्॥

इत्यादिरीत्या भगवद्गुणश्रवणादिना द्रुतस्य स्निग्धस्य मनसो धारावाहिकतां गतायां भगवदाकाराकारितायां वृत्तौ तदभिव्यक्ते निरुपमसुखसंविद्रूपे भगवत्येव वा भक्तिशब्दप्रयोगः।

तथा च विभावादीनां साधारणीकरणरूपेण व्यापारेण, फलबलकल्पनेन विशेषांशस्य सर्वथा प्रमोषात् सामाजिकेषु स्थायिव्यज्यमानस्य रसस्य अपरोक्षता जायते। 'दशमस्त्वमसि' इतिरीत्या तत्र शाब्दापरोक्षज्ञानाभ्युपगमेन नापरोक्ष्यानुपपत्तिरपि। ईदृशालौकिकव्यापारमाहात्म्यादेव करुणरसे दुःखजनकतया क्लृप्तेभ्योऽपि सुखोत्पत्तेः, सुरते अधरदशनादाविव अनुभवसिद्धिकत्वाद् अन्तःकरणवृत्तित्वाच्च कार्यत्व-ज्ञाप्यत्वाभावात् भूत-वर्तमान-भविष्यत्त्वराहित्यात् सविकल्प-निर्विकल्पवेद्यत्वाभावाच्च अलौकिकत्व-नित्यत्वा-ऽऽनन्दरूपत्व-स्वप्रकाशत्वादिकमात्मत्वादेव सिद्धम्। चर्वणानिबन्धनश्च उत्पाद-विनाशकादाचित्कत्वादिव्यवहारोऽपि तत्र सङ्गच्छते। एवं प्राकृतरसवर्णनेन भगवदालम्बनके अप्राकृतरसे तु अवतार एव मुख्यं रसशास्त्रतात्पर्यम्, तस्यैव सर्वशेषत्वप्रसिद्धेः।

इष्टसाधनता-वासनैव भक्तिः। तथा चोक्तम्—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥ इति।

तन्मूलकमेव च—

द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥

इति वचनमपि। तेन भगवन्निष्टेष्टसाधनताविषयकत्वमेव भक्तेः प्राणाः। तस्यैव भगवद्गुणगणश्रवणनिबन्धनत्वसम्भवात्। अत एव भगवदालम्बनस्य रोमाञ्चाऽश्रुपातादिभिः अनुभावितस्य हर्षादिभिः परिपोषितस्य श्रीमद्भागवतादिश्रवणसमये भक्तैरनुभूयमानस्य भक्तिरसस्य न रसान्तरेऽन्तर्भावः सम्भवति। भगवदनुसङ्गरूपा भक्तिश्चात्र स्थायिभाव इति तत्त्वम्।

न च भक्तिरसस्य शान्तरसेऽन्तर्भावः; अनुरागस्य निर्वेदविरुद्धत्वात्। यमालम्ब्य समेषां भावानामुद्भवः, स एव स्थायिभावः; स एव गूढभावः। रतिरूपोऽङ्कुरस्तु प्राथमिको भावः। स एव अधिदैवतं कामः, तद्गतो रसः। तदेतत्त्रितयं मिलितं कृष्णपदार्थः। स भावात्मा मन्मथो रसः साकारः शृङ्गारः श्रीकृष्णरूपेण वर्णितः। अन्तःस्थितः संयोगविप्रयोगात्मकः स्थायिभावरूपो भावेनैव पोष्यते। तेन स्वामिनीनां भावे रसात्मपोषणं भवति। अन्तःस्थितरूपेण तासां हृदि भावैं विक्रीडनं भवति। तद्विशिष्टः स्थायिभावः कृष्ण-पदार्थ इति।

अलङ्कार-कौस्तुभे चित्तद्रवस्थायिभावः प्रेमाख्यः प्रथमो रसः। चित्तद्रवस्थायिभावो रतिस्थायीत्यर्थः।

तत्रालम्बनमन्योऽन्यं गुणाश्चोद्दीपनं मतम्।
विशिष्य कथनाभावोऽनुभाव परिकीर्तितः॥
मत्यौत्सुक्यादयोऽप्यत्र योग्याः सञ्चारिणो मताः। इति।

स चायं राधामाधवयोरेव। यथा तत्रैव श्रीकृष्णप्रेमा—

प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवादः
त्वं मे प्राणा अहमपि च तवास्मीति हन्त प्रलापः।
त्वं मे ते स्यामहमपि च यत् तच्च नो साधु राधे
व्याहारे नो नहि समुचितो युष्मदस्मत्प्रयोगः॥ इति।

राधासुधानिधौ च—

सा लावण्यचमत्कृतिर्नववयो रूपञ्च तन्मोहनं
तत्तत्केलिकला - विलासलहरी - चातुर्यमाश्चर्यभूः।
नो किञ्चित्कृतमेव यत्र न नुतिर्नागोऽथवा संभ्रमो
राधामाधवयोः स कोऽपि सहजः प्रेमोत्सवः पातु वः॥ इति।

अलङ्कार-कौस्तुभे—

राधामाधवयोरेव शृङ्गारः श्रुतिरोचकः।
वैदग्ध्यं यत्र पर्याप्तं कृतार्थश्च मनोभवः॥ इति।

अन्योऽन्यस्वान्तनिष्ठ-पूर्णानुरागरससिन्धुसमुद्भूत-चन्द्ररूपत्वेऽपि अन्यो-ऽन्यप्रेम-स्मरनिधिनिमग्नत्वमेव । प्रेमसिन्धोरुद्वेलितत्वे वैवश्यमयमोहोद्भवः, स्मरसिन्धोरुद्रेके संज्ञानं तन्मूलिका क्रीडा च ।

यथा गतेर्गतिमदधीनत्वेऽपि गतिवेगेन गतिमतो गत्यधीनता दृश्यते तथैव लीलाया लीलानायकपराधीनत्वेऽपि लीलारसोद्रेके लीलानायकस्य तदधीनता ।

प्रेमस्मराख्यौ द्वौ सिन्धू समुद्रिक्तौ द्वयोर्हृदि ।
एकोद्रेके भवेन्मोहो संज्ञानमपरोद्गतौ ॥
ताभ्यां द्वयो रसिकयोर्विवशीकृतचेतसोः ।
मोहसंज्ञानसातत्यं नित्यमेव प्रदृश्यते ॥ इति ।

यथा शीतल-मानससरोवरगताया अपि हिमकणिकायाः पिपासोद्रेकः तथैव प्रेमरस-निमग्नयोरपि प्रेमार्तिवैवश्यादिकम् । यथा—

मानसान्तर्गता यद्वत् तृषार्ता हिमपुत्रिका ।
हार्दतृष्णाकुलौ तद्वद् हार्दस्थौ हार्दरूपिणौ ॥ इति ।

सविशेषप्रेमस्वरूपमनाद्यनन्तमेकरसं नित्यनूतनमुज्ज्वलम्, मादकं स्निग्धं स्वच्छन्दञ्च । तत्परिणामभूतास्तत्तदवस्थारूपास्तु स्मरादिलीलास्तदभिन्ना अपि भिन्ना इव भासन्ते, कनकात्मान इव कुण्डलादयः । तेन तैस्तैः लीलाविलासैरेव तन्तुभिः पट इव स्वच्छन्दं दिव्यदम्पतीमयं प्रेमतत्त्वं राजते । तेन तद्विलासो-ल्लासितं प्रेमतत्त्वमेवात्र स्मर-केलि-मन्मथ-कामादि-शब्दव्यपदेश्यम् । तच्च प्राकृतमन्मथापेक्षया विलक्षणत्वात् साक्षान्मन्मथमन्मथाश्रितत्वात् तद्रूपमेव । तादृङ्मन्मथाविष्टः साक्षान्मन्मथमन्मथो भगवानेव कामबीजार्थः । यथा—

ककारः कृष्णरूपः स्याल्लकारश्चापि राधिका ।
ईकाराख्या कामकला तद्विलासस्तु चन्द्रदः ॥
प्रेमसारामृताम्भोधिः ककारार्थस्तु केशवः ।
तन्माधुर्यैक - साराब्धिर्लकारार्थस्तु राधिका ॥
ईकारार्थः स्मरोऽपूर्वः साक्षान्मन्मथमोहनः ।
तदुल्लासवशावेश - वशयोरुद्भटं मुदा ।
संश्लेषादि - विलासात्मा चन्द्रकार्थं प्रकीर्तितः ॥ इति ।

तेन भगवदाश्रयस्य कामस्य यथा प्रेमरूपत्वमेव, तथैव भगवदालम्बन-कत्वेनापि कामस्य प्रेमरूपत्वम् । प्राकृतालम्बनाश्रयस्यैव कामस्य काम-त्वोपपत्तेः । चिन्तामणौ दीपकबुद्ध्या प्रवृत्तावपि चिन्तामणिप्राप्तिवत् कान्त-

कामबुद्ध्या भगवति प्रवृत्तस्यापि भगवत्प्राप्तिरव्याहतेः। तथापि कामोचित-क्रियानिर्वर्तकत्वेन तु कामपदेन व्यपदेशः। तत्र भगवदालम्बनकस्य नित्य-नूतनत्वेनापि लोकवैलक्षण्यम्, लौकिकस्य वैरस्यावसानत्वात्। इह तु प्रेमतृड्-वर्धकत्वेन नित्यनूतनत्वेन तस्याङ्गीकारः। यथा—

प्रीतिकल्पलतायास्तु रसदो मदनाम्बुदः।
रसं हि रसिकोत्तंसो तमाजीव्यैव पुष्यति ॥ इति।

यथैव तयोः प्रीतिलता मदनाम्बुदसिक्ता सती पुष्यति आस्वाद्यते च, तथैव प्रेमकाममयीं लीलामुपजीव्य तत्सखीनां प्रेमलता पोपुष्यते। यथा घ्राणोपभोगेन इन्द्रियाणि तृप्यन्ति यथा वा कल्पलतामूलसेचनेन पल्लवपत्राणि मोदन्ते, तथैव दिव्यदम्पत्योः श्यामाश्यामयोः कामक्रीडयैव ता अपि तृप्यन्ति। तदुक्तम्—

'प्रेष्ठयोः सङ्गमोद्भूत - सुरताम्बुजसौरभात्।
आस्वाद्यास्वाद्य तृप्यन्ति सुसख्यस्तन्मदोन्मदाः ॥
सख्यस्तु तन्मध्वमृतासवोन्मदास्तदीयलीला-सुनिमग्नमानसाः।
तावेव जानन्ति वदन्ति शश्वत् तावेव पश्यन्ति समाहितात्मना ॥

राधामाधवयोर्लोकोत्तरं प्रेमैव वृन्दावनरूपेण अवस्थितम्, तेन तदेव रसस्य स्थायिभावः। यथा—

वनेरसात्मसौभाग्ये प्रीतिः कल्पलतायते।
श्यामगौरमयं तेजस्तत्र पुष्पायते भृशम् ॥ इति।

विशुद्धं प्रेमतत्त्वमेव श्यामाश्यामरूपेण व्यज्यते। तत्पदाम्बुजप्रसाद-लेशानुगृहीत एव तदवाप्तुं शक्नोति। वृन्दावनं तत्रत्याः सहचर्यश्च प्रेमरसा-त्मकाः तदनुग्रहैकजीवातवस्तदनुसारिणो भक्ता इति।

कैश्चिदुच्यते—'शृङ्गारकल्पतरोर्द्विदलत्वेन संभोगविप्रलम्भाभ्यामेव तस्य पुष्टिः प्रभावश्च, नैकेन केनापि। तेनैव सारसौ नित्यसंयोगप्रतीकभूतौ चक्र-वाकौ च विप्रलम्भप्रतीकभूतौ। सारसौ वियोगे क्षणमपि प्राणधारणाक्षमौ म्रियेते। तदुक्तम्—

कैतवरहितं प्रेम न तिष्ठति मानुषे लोके।
यदि भवति कस्य विरहः सति विरहे को जीवति ॥ इति।

चक्रवाकौ तु सदैव विरहज्वालाजटिलसंतापानलं पिबन्तावपि प्राणान् धारयत इति तेनैव तत्प्रेमरसत्वे संदिहाना सारसपत्नी लक्ष्मणा चाह—

चक्रवाकि सखि प्राणा हृदयञ्च कथन्न ते।
निःसरन्ति स्फुटत्याशु विप्रलम्भेऽपि प्राणदे ॥

तमिस्रायाञ्च शर्वर्य्यां घोरेऽपि घनगर्जने।
द्योतयन्त्याञ्च दामिन्यां दर्दुराणाञ्च निःस्वने॥
न स्फुटत्यपि वज्राभहृदयं विरहे सखि।
कथं निर्मृष्टनेत्रा वा अनार्द्रेणापि चक्षुषा।
प्रियं पश्यसि निर्ह्रीका कीदृग्भावं वदस्यजम्॥ इति।

चक्रवाकी चाह—

सत्यं वदसि सख्येवं मामकं हृदयं पविः।
यदीदृग् विषमज्वालाजटिलं विरहानलम्॥
पीत्वाऽपि धारयाम्येव हृत्प्राणान्निर्घृणा ह्यहम्।

तथापि—

प्राणेशविप्रयुक्तायाः प्रेयस्या विरहे सति।
चित्रं सोढ्वापि विषमां विरहानलजां व्यथाम्॥
हृत्प्राणधारणञ्चापि ततश्चित्रतरं तु तत्॥
कल्पकोटिसमायास्तु शर्वर्य्या यापनं किल।
चित्राच्चित्रतरं तत्तु प्रियसंश्लेषजं सुखम्॥
तीव्रतापप्लुताया यत्प्रेयस्या भवति स्फुटम्।
चक्रवाकिसुखं तत्तु तच्च दुःखमपि स्फुटम्॥
भवती न विजानाति नित्यश्लेषरता ध्रुवम्॥ इति।

दिव्यदम्पत्यो राधामाधवयोस्तु प्रतिक्षणमात्ममनोवाक्कायेन्द्रियैः सर्वाङ्गीणसंश्लेषसम्पत्तावपि चक्रवाककोटिकोट्यपेक्षयापि कोटिकोटि-गुणित-प्रियविश्लेषजनित तीव्रतापानुभूतिः। तत एव तदपेक्षयाऽपि विरहजन्य-तीव्रतापान्तरित प्रियसंश्लेषरसास्वादः। तस्मात् क्षणे क्षणे सारसापेक्षयाऽपि कोटिकोटिगुण-सान्द्रसंश्लेषानुभूतिः, चक्रवाकापेक्षयापि कोटिकोटिगुणित-विश्लेषानुभूतिः।

सखि लक्ष्मणे यया विश्लेषे तु सहप्रेष्ठविरहतीव्रतापो नानुभूयते, तया परपीडैव किं ज्ञायते? यया तु तद्विज्ञायते, तयैव वज्रविषमेणापि चेतसा तदनुभूयते। यथा—

यद्विश्लेषाग्निजं तापं वाडवाग्नेरपि स्फुटम्।
विषमं विषमत्तीह सैव वेत्ति परां व्यथाम्॥
वज्रादपि कठोरैस्तैस्तनुचेतोभिराहता।
वेत्ति चातनुसन्तापं रसं तन्नान्तरीयकम्॥

त्वं तु प्रेष्ठवियोगेन तनुं त्यजसि तत्क्षणम्।
न चेत्स्याश्लेषजं तापं रसं तत्रान्तरीयकम्॥ इति।

संभोगविप्रलम्भौ शृङ्गारस्यांशावेव। लोके तु परस्परविरुद्धत्वान्नैकत्र युगपदवस्थितिः। भगवतस्तु सकलविरुद्धधर्माश्रयत्वात् अणोरणीयस्त्व-महतो महीयस्त्वादिवत् तत्र युगपदेव उभयोः स्थितिः। अत एव समुद्बुद्धसमुद्वेलित-बद्विविध-शृङ्गाररससारसर्वस्व-रूपत्वादुभयोः सामञ्जस्यम्। यथा—

आत्मना मनसा बुद्ध्या तथैवेन्द्रियप्राणकैः।
विग्रहेणापि वा सर्वैं रोमकैश्च समुद्गतैः॥
रसोद्रेकेण सम्पृक्तौ रसाविष्टावुभौ मुदा।
सदा विरहदुःखाब्धि-निमग्नौ दिव्यदम्पती॥
सदासम्पृक्तयोश्चापि विरहोच्चयोः सदा।
संभोगविप्रलम्भाभ्यां सदा पूजितयोस्तयोः॥
सदा संमिलितौ चापि रसावेशवशादुभौ।
तथाप्युत्कण्ठितौ नित्यं संश्लेष्टुं व्याकुलौ शुभौ॥
संभोगो विप्रलम्भाभः विप्रलम्भश्च तन्निभः।
यत्र संदृश्यते नित्यं तत्रैव परमो रसः॥
सदा सम्पृक्तयोर्योगो वियोगश्च कथं भवेत्।
चन्द्रचन्द्रिकयोर्वाऽपि तथा जलतरङ्गयोः॥ इति।

तेन विप्रलम्भाम्भोधौ संभोगास्तरङ्गायन्ते। संभोगसिन्धौ विप्रलम्भास्तरङ्गायन्ते। भावोद्रेकेण चान्योन्यपरिवृत्तिर्भवत्यलम्।

यथा रसोद्रेके माधवो राधिकाभावं राधिका च माधवात्मतां याति, तथैव संभोगो विप्रलम्भतां विप्रलम्भश्च संभोगभावमुपयाति।

एकात्मनोर्विग्रहयोस्तयोर्द्वयोः, यथैव रूपं परिवर्ततेऽनिशम्।
तथैव संयोगवियोगयोरपि स्वरूपभेदः परिवर्तते सदा॥
विरहः श्यामजः प्रोक्तः संयोगो राधिका तथा।
परस्परात्मताऽजस्रं दम्पत्योः परिवर्तते॥
राधिका भास्वरा दृष्टिर्दृष्टिः श्यामलं महः।
ऐकात्म्यमुभयोर्यद्वदन्योन्य - मिथुनात्मता।
तथाऽभ्युपगता नित्यं संभोग - विप्रलम्भयोः॥ इति।

सकलगुणवृन्दावनं वृन्दावनमेव उज्ज्वलरसः। तद्विहारिणौ राधामाधवावेव संभोग-विप्रलम्भकौ। यथा—

गौरश्याममयं तेजो युग्मकं क्रीडते मुदा।
दलद्वयात्मकं नित्यं वनेऽङ्गित्युज्ज्वले रसे॥ इति।

देश-काल-वस्तुव्यवधानेन स्थूलविप्रयोगो लोकवदिहापि। अत एव हारादि-व्यवधानमपसार्यते। अन्ते रोमाञ्च-कञ्चुकीव्यवधानमपि नोनुद्यते। उत्तस्थुः राराद् सहसाऽऽसनाशनात् इति भागवतीये पद्ये महिष्यः देशव्यवधानापनिनीषया यथासनादुत्तस्थुस्तथैव वस्तुकृतव्यवधानापनयनाय आशयात् आशयोपलक्षितात् कोशपञ्चकात् उत्तस्थुः। तत्तादात्म्यमवाप्य सर्वावरणराहित्येन प्रियतमं प्रापुः। प्रियतमवीक्षण-रसास्वादवेलायां निमेषादिभिः पक्ष्मव्यवहृतिरपि सोढुमशक्या। जड उदीक्षतां पक्ष्मकृद् दृशाम्, पक्ष्मकृतं शपन्ति इति पक्ष्मकृतो ब्रह्मणः जाड्यमुपालभ्यते। अन्ते वैचित्यकृतमपि विप्रलम्भं सूक्ष्मतमं परिपश्यन्ति। यथा वा प्रकाशातिशयेन दृष्टिशक्तिर्मूर्छ्यते, तथैव प्रेमातिशये-तत्सौक्ष्म्यवशाद्वा प्रेमैव विप्रलम्भरूपतां प्रतिपद्यते।

भानुजा-माधवौ दिव्यदम्पती रसरूपिणौ।
विश्लेषकल्पनामात्रात् कोटिकल्पाग्नितापिनौ॥
यथा चकोरः सस्नेहं नेत्राभ्यामापिबन्निव।
शशाङ्कमीक्षते प्रेम्णा रसिकौ रसयन्त्रितौ॥
सर्वदा निमिषद्दृग्भ्यां जुषाणौ मुखपङ्कजौ।
न तृप्येते परां प्रीतिं गतौ परमया मुदा॥
पक्ष्मपातासहिष्णुत्व-स्वभावौ रसलम्पटौ।
प्रेमार्तिभरसङ्क्रान्तौ परमार्तौ सुदीनकौ॥
प्रेयस्या मुखपद्मस्थ - सौन्दर्यमधुलुब्धकः।
मिलिन्दो माधवो नूनं रसाविष्टो रसाकरः॥
न याति क्षणमप्यत्र रसनिष्ठो मधुव्रतः।
पक्ष्मसंपुट - संरुद्ध - नेत्रयुग्मालिकः सदा॥
परार्तिव्याकुलः पातुं मकरन्दामृतं शुचि।
श्रवसो कुण्डले भूत्वा चक्षुषो रञ्जनं तथा॥
रत्नकोरकयोश्चैव दिव्यकस्तूरिका तथा।
न तृप्यति तथाप्यन्तः प्रविविक्षुरिवात्मना॥
तनुं तन्वात्मनात्मानं मनसा मानसं मुदा।
प्राणैः प्राणं समालिङ्ग्य नेत्राभ्यां नेत्रयुग्मकम्।
संस्पृशन्नापि नातृप्यत् परमैक्य-पिपासया॥ इति।

मानमपि विप्रलम्भहेतुत्वेन प्रसिद्धम्। तच्च सहेतुकमहेतुकञ्च। अत्र तु

योगमाया-प्रत्युपस्थापितानि तानि तानि निकुञ्जभवनान्येव तादृशानि सन्ति यत्र प्रवेशमात्रेण मानोदयः। यथा—

मानकुञ्जप्रवेशेन प्रेयस्या भृकुटीतटम्।
कौटिल्यमुपसङ्गम्य प्रेयांसं मार्दयद् भृशम्॥
अकस्माद् भृकुटीभङ्गं विलोक्य रसिकेश्वरः।
मानापनोदनविधौ साध्वसेन भयेन च॥
परमं दैन्यमायातः पादस्पर्शपरायणः।
येन सर्वस्वमप्येवं भवत्याः पादपङ्कजे॥
समर्पितं कथं तत्र कोपो भामिनि युज्यते।
तस्मात् प्रियतमे भद्रे मम प्राणेश्वरि स्फुटम्॥
कारुण्यं कुरु कामेशि करुणार्णवमानसे।
श्रुत्वैवं प्रियवाक्यानि रसवन्ति रसार्णवा॥
रसोल्लासवशात् सद्यः प्रियबाहूवन्तरं गता।
स्निग्धापाङ्ग-तरङ्गाक्षी प्रियस्य वशमागता॥
मानोद्रेकदशायाञ्च मानवत्यामपि स्फुटम्।
परानुराग - कल्लोल - रससिन्धुस्तिरोहितः॥
वैदग्ध्य - माधुर्यमयैर्वचनैस्तैः सुधोपमैः।
सख्यस्तस्य परं भावं व्यञ्जयन्ति सुखावहम्॥
परस्पर-स्वान्तसमाहितौ सदा
लोकोत्तर - प्रेमसुधा - महार्णवौ।
सखीवचः - पाटव प्रोद्भट स्फुटत् -
प्रोद्वेलितौ संमिलितौ लतागृहे॥ इति।

कदाचित् प्रेयान् प्रेयस्याः परमाद्भुतं सौन्दर्यं निरुपमं लावण्यमसम-माधुर्यं निःसीमसौभाग्यं विलोक्य लोकोत्तर-प्रेमसिन्धु-निमग्नः सवेपथु-र्मुमोह। तादृशीमनुपमां प्रेयसोऽवस्थां विलोक्य सदयहृदया रासेश्वरी स्वाधरसुधां पाययित्वा प्रकृतिस्थञ्चकार। स च—

पक्वबिम्बाधरं दिव्यं रसाले नित्यनूतनम्।
समास्वाद्यापि नातृप्यत् प्रियाया रसिकोत्तमः॥
पुनर्दैन्यमुपागम्य रसावेशवशं गतः।
ययाचे परया प्रीत्या दुर्लभं परमं रसम्॥
ततः सा नागरी रम्या रसासक्ता रसालया।
रसावेश - वशादेव पुनर्मानमुपेयुषी॥

तां तथाभावमापन्नां स्नेहक्लिन्नात्ममानसः ।
विरहव्याधि-संभूत - दुःखार्णव - परिप्लुतः ॥
कातर्य्यंहृतधैर्यञ्च प्रियमालोक्य विस्मिता ।
स्नेहव्याकुलिताभ्यां वै भुजाभ्यां परिषस्वजे ॥
प्रेष्ठयोः परमानन्द - रसनिर्भर-चेतसोः ।
रसोद्रेकवशाद्रात्रीकालः क्षणमिवात्यगात् ॥ इति ।

वैचित्त्यदशायां विप्रलम्भानुभूतिप्राखर्यात् संभोगसुखानुभूतिर्विलुप्यत एव । तेन युगपदुभयोर्नानुभवः । यत्र संभोगो विप्रलम्भश्च सममनुभूयेते, तदैव उभयात्मकत्वं भवति ।

अङ्कालिङ्गनशालिनि प्रियतमे हा प्रेष्ठ हा मोहने-
त्याक्रोशत्यतिकातरातिमधुरं श्यामानुरागोज्ज्वला ।
व्यामोहादतिविह्वलं निजजनं कुर्वं त्यकस्मादहो
काचित् कुञ्जविहारिणी विजयते श्यामामणिर्मोहिनी ॥

इति वैचित्त्यदशा महानुभावैरुपवर्णिता ।

प्रेष्ठयोरन्यतरः प्रीत्याश्रयोऽपरश्च तद्गोचरः । किन्तु अत्र तु उभौ तदाश्रय-गोचरौ । यथा—

प्रेमराशिमयौ तौ द्वौ रसिकौ रसविग्रहौ ।
समौ समवयस्कौ च सदाश्लिष्टौ शुभाङ्गकौ ॥
रिष्वङ्गरसावेशवशौ श्लेष - परायणौ ।
परिष्वङ्गरसोल्लास - लोलौ सुमधुरौ सदा ॥
यथैवैकरसाविष्टे रसमय्यौ रसाप्लुते ।
रसपूर्णे सुमधुरे दृश्येते काचकूपिके ॥
तथैव रससन्दोहपूरपूर्णौ रसात्मकौ ।
रसाविष्टौ रसाकाङ्क्षौ रसतृष्णापरिप्लुतौ ॥
एकप्राणैकमनसौ चैकदेहौ द्विनामकौ ।
समौ समरुची प्रेमरसिकौ समविग्रहौ ॥
सहजौ समसंश्लिष्टौ समप्रेमपरायणौ ।
श्यामरङ्गानुरक्तैका गौररङ्गान्वितोऽपरः ॥
एकं ज्योतिरभूद्द्वेधा राधा-माधवरूपकम् ।
माधवो राधिकाभावं राधिका माधवत्मताम् ॥
प्रतिक्षणं प्रयान्त्येव प्रेमतन्मयतावशात् । इति ।

समानाश्रयत्व विषयत्वाभ्यामेव प्रमतत्त्व-पूर्णताभिव्यक्तिः। यथा सन्निपात-ज्वरग्रस्तस्य मधुर-शीतलजलप्राप्त्याऽप्युत्तरोत्तरं पिपासातिशयो वर्धते, तथैव प्रियरूप-स्पर्श-रसादिप्राप्त्यापि उत्तरोत्तरं तत्तृष्णाविशेषो बर्धते। यथा—

चकोरो दूरदेशस्थं प्रियं चन्द्रं सतृष्णया।
निर्निमेषदृशा नित्यं पिबतीव रसातुरः।
शिरश्छेदेऽपि तद्दृष्टिर्नैवापैति ततः क्षणम्॥ इति।

तदुक्तमुत्तररामचरिते—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः,
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥ इति।

दूरत्वादिदोषे सत्यपि देशविप्रकर्षादि-व्यवधानस्य प्रीतिव्यवच्छेदकत्वे सत्यपि यथा प्रीतिर्न व्यवच्छिद्यते इति तद्वैशेष्यम्। श्रूयते किल चकोरोऽङ्गारकं भुङ्क्ते। तत्कस्य हेतोः? चिताभस्मालेपस्य भगवतो भवस्य फालचन्द्रस्य फाले चन्द्रमा विद्यते। यद्यङ्गारभक्षणेन प्रज्वलितं भस्मीभूतं मदङ्गं चिताभस्मत्वाद्भाललग्नं भवेत्तदा तत्रत्यस्य मत्प्रियस्य चन्द्रस्य संस्पर्शः संभाव्यते।

तस्माङ्गारकं जग्ध्वा वै प्रियप्रेम - पिपासया।
भस्म तद्धारयेत् फाले फालचन्द्रो यदि स्वयम्॥
तदा प्रियपरिष्वङ्गप्राप्तिः स्यादतिदुर्लभा।
प्रियसंस्पर्शकामस्तु चकोरः परया मुदा।
तत्संभावनया चापि स्वात्मानं भस्मयत्यलम्॥

यदि च वैजात्यमपहाय चन्द्रात्मतां गतश्चन्द्रः सन् प्रेमातुरः पिबेत्तदा कैव कथा—

यदि वैजात्यसंत्यागाच् चन्द्रभावमुपागतः।
चकोरः परया प्रीत्या पिबेच्चन्द्रामृतं मुदा॥
तत्प्रीतेः परमा काष्ठा प्राप्ता स्यात् किन्तु साप्यलम्।
न्यूनैव परमां प्रीतिमपेक्ष्य स्यात् शुभावहाम्॥
राधामाधवयो - र्नित्यामनन्यां ब्रह्मरूपिणीम्।
यतस्तु विषमौ नित्यं प्रेमसंश्रयगोचरौ।
प्रकृते तु समौ नित्य - मनन्यौ प्रेमरूपिणौ।
यदि चन्द्रोऽपि परया प्रीत्या प्रस्वपेत् मुदा॥

चकोरतामुपायातो भवेत्तल्लालसः सदा ।
तदा समौ तौ स्यातां हि नान्यथा प्रेमपूर्णता ॥
क्षणे क्षणे नवः प्रेमा नवा च तनुरुत्तमा ।
परस्परस्य हार्देन स्यात् परस्परता सदा ।
परस्पर - प्रेमपाश - पाशितौ दिव्यदम्पती ॥

क्षणे क्षणे प्रेमपयोनिधी प्रियौ
सङ्गम्य सङ्गम्य ह्यवीवृधेतां काम् ॥
एकोऽप्यनेकत्वमुपागतो रसो
यथाऽप्सु बिम्बः प्रतिबिम्बतां गतः ॥ इति ।

यथा वीचिषु प्रतिकणं जलव्याप्तिस्तथैव राधायां माधवव्याप्तिः, माधवे च तद्व्याप्तिः । अत्र उभयोरेव तरङ्गत्वम् । उभयोश्च जलत्वम् । उभयोः परमानन्द-सुधासिन्धुत्वम् । उभयोश्च तन्माधुर्य-सारसर्वस्वरूपत्वम् । तदुक्तम्—

यथा वीच्यां जलव्याप्तिर्जले वीचय आश्रिताः ।
यथानन्द-सुधासिन्धौ माधुर्यं व्याप्य संश्रितम् ॥
तथैव परमेशाने श्रीकृष्णे राधिकाऽऽश्रिता ।
राधिकायां तथा कृष्णोऽप्येवमेवमुपाश्रितः ॥
न तारतम्यमुभयोः कर्तव्यं कुत्रचित् क्वचित् ।
तथा चोज्ज्वलता प्रेम्णो हीयेतैव न संशयः ॥
एको रङ्गो रुचिश्चैका हार्दमेकं वयस्तथा ।
एकः शीलस्तथैवेकाः स्वभावो मधुरो द्वयोः ॥
एक एव रसो व्यक्तो दिव्यदेह - द्वयात्मना ॥ इति ।

दिव्यदम्पत्योः सानुपमा प्रीतिस्तदीयस्वरूपभूतम् । ते विपिने प्रतिगुल्मं प्रतिलतं प्रतिबिम्बिता ।

क्वचित् मरकतश्यामलं श्यामल-तरुण-तमालम् आश्लिष्टा स्वर्णमणिभास्वरा दिव्यलता । क्वचिच्च काञ्चनमयभास्वरेण तरुणा परिष्वक्ता मरकत-श्यामला श्यामलता । मरकतश्यामलं चापि तमालं व्याप्य संश्रिता काञ्चनीभास्वरा दिव्यलता काचिदिहान्यतः ।

काञ्चनं भास्वरं दिव्यं तरुं व्याप्य व्यवस्थिता ।
गरुत्मच्छ्यामला दिव्या लता त्रिभुवनोत्तरा ॥
गौरतेजः समाश्रित्य श्यामतेज उपाश्रितम् ।
काञ्चनं श्यामलं तेजो गौरं सह उपाश्रितम् ॥

रसदातृत्व - स्वाभाव्याद्राधायां गौरतेजसि ।
गाम्भीर्यौदार्य - माधुर्य - गुणोद्रेकस्तथाऽन्यतः ॥
रसभोक्तृत्व - प्राधान्याच्चापल्याद्या गुणास्तथा ।
श्यामले महसि स्थैर्य लालित्याद्या गता: सदा ॥ इति ।

अन्यैस्तु– सर्वप्राणिनां निरुपाधिक-निरतिशय-परप्रेमास्पद-माधवापेक्षयापि राधायां प्रेमातिशयप्राकट्यं याति । तदुक्तम्—

न मूढधीरस्मि न वा दुराग्रहा शरीरभोगेऽपि न चातिलालसा ।
किन्तु व्रजाधीशसुतस्य ते गुणा बलादपस्मारदशां नयन्ति माम् ॥ इति ।

श्रीमाधवेनाप्युक्तम्—

पूर्वानुरागगलितां मम लम्भनेऽपि लोकापवाददलितामथ मद्वियुक्तौ ।
दावानलज्वलित-जातिवनीसदृक्षामेतां कथं कथमहो बत सान्त्वयामि ॥

यद्दुःखेन समं नास्ति सुखं त्रिभुवनेऽपि हि ।
कथं तत्सौख्यतुलनां किञ्चिदर्हति वैभवम् ॥
तस्मादनन्त - ब्रह्माण्ड - राज्यसौख्य - मनामयम् ।
निर्मञ्छ्यतेऽनुरागाब्धि-कणोपरि सुभक्तकैः ॥
प्रेमसौख्य - सुधासिन्धु - सीकरोपरि भावुकैः ।
निर्मञ्छ्यन्ते हि सौख्यानां ब्राह्माणां कोटिकोटयः ॥
प्रेमतत्त्व - मनिर्वाच्यमद्भुतं सर्वदोषनुत् ।
सदोदितं महाभाग्यं सर्वबाधक - बाधकम् ॥
प्रतिक्षणं प्रतिपलं विचित्रं बहुवर्णकम् ।
शुद्धाग्निरूपं स्वाङ्गेषु स्वप्रभाव - प्रसारकृत् ॥
उज्ज्वलं निर्मलं स्निग्धं सरसं मृदु मादकम् ।
सर्वदिव्य - गुणाब्धीनां सीमभूत - मसीमकम् ॥
दुर्लभं दुर्गमं नित्यं नूत्नमेकरसं शुभम् ।
रुचिरं रुचिरोचिष्णु सहजं सर्वकामदम् ॥
यस्याप्युदयमात्रेण व्यसनान्यखिलान्यपि ।
विलीयन्ते तमस्तोमा इवादित्योदये किल ॥
यद्विप्रलम्भ - तापाग्नि - तीव्रदुःखौघकोऽपि हि ।
सर्वसंसार - सौख्यानि तिरस्कृत्य विराजते ॥
तस्यामृताब्धिरूपस्य सौख्यं को नाम वर्णयेत् ॥
स्वच्छन्दं निर्मलं कान्तं तथा निरुपमञ्च तत् ।

सुखं संविन्मयं स्वच्छं ब्रह्मैव रसतां गतम् ।
निर्विकल्प - समाधान - संभवं यत्परं सुखम् ।
तत्प्रीतिकण - संस्फूर्त्या विनाप्यांसेन जायते ॥
प्रेमचिन्तामणेस्तस्य प्रकाशे हृदि निर्मले ।
स्वसौख्य - कल्पनाः सर्वाः प्रलीयन्ते स्वभावतः ।
प्रियसौख्य - सुखित्वञ्च व्यज्यते परमं स्फुटम् ॥
अत एव व्रजे नित्यं व्रजवासिजनेषु वै ।
पित्रोर्मित्रेषु बालेषु तथा सीमन्तिनी-जने ।
तत्सौख्यसुखिता दिव्या निर्व्याजं दृश्यतेऽभितः ॥
यावत् स्वसौख्य - सुखिता वर्ततेऽविमले हृदि ।
तावत् प्रेमसुखस्याऽऽह्लुर्दर्शनं दुर्लभं . नृणाम् ॥
राधामाधवयोर्दिव्यं दम्पत्योस्तत्सखीगणे ।
एषैव परमा प्रीतिः सहजा व्यक्तिमागता ॥
श्रीकृष्णः कुरुते यद्यत् तद्राधायाः प्रियं किल ।
प्राणाधिकायास्तस्यास्तु यद्यद्रोचेत तत्खलु ।
प्रियोऽपि कुरुते तत्तदनुवृत्ति - परायणः ॥
प्रिया च परमस्यास्य दृशोस्तिष्ठति सर्वदा ।
तस्या दृशोस्तु परमः तारो भूत्वा विविक्षति ॥
तस्यास्तद्दर्शने सौख्यं तस्मात् तारायते प्रियः ।
राधाऽऽस्येन्दुचकोरस्य दृशोस्तारायते च सा ॥ इति ।

अत्र अन्योऽन्यसुखावाप्त्यै खलु अन्योऽन्यनेत्रयोः अन्योऽन्यस्य विविक्षा तत्सुखसौख्यस्य सूचिका । तदुक्तम्—

परस्पर - सुखित्वार्थं - परस्परदृशोः किल ।
रोचते दिव्यदम्पत्योरन्योऽन्यानुगतिः सदा ॥
राधाया माधवः प्रेयान् तनुप्राणात्मतोऽधिकः ।
माधवः स्वात्मप्राणादीन् निर्मोञ्छयति तामधि ॥
लोकोत्तरं प्रेमभावं दम्पत्योर्वीक्ष्य प्रोन्मदाः ।
सख्यस्तदनुगामिन्यस्तयोरैक्यं विदुर्मुदा ॥
यथा वीच्यां जलव्याप्तिर्जले तद्व्याप्तिरेव च ।
राधामाधवयोस्तद्वदन्योऽन्य - व्याप्तिरिष्यते ॥
उभौ जलोपमौ प्रोक्तावुभौ वीच्युपमौ तथा ।
अचिन्त्यानन्त-परमानन्दाम्भोधि - स्वरूपिणः ।

श्रीकृष्णाख्यपरस्यास्य धाम्नः श्रीराधिका मता ॥
अमृताब्धौ हि माधुर्यं यथा व्याप्य व्यवस्थितम् ।
परानन्द - सुधाम्भोधौ राधा माधुर्यरूपिणी ॥
परानन्द - सुधाम्भोधेः सारसर्वस्व-विग्रहा ।
श्रीकृष्णः प्रथितो यद्वद् तद्वदेव रसेश्वरी ।
माधुर्य - सारसर्वस्व - विग्रहा वृषभानुजा ॥
यथा कल्पतरोर्मूलसेचनेनैव साम्प्रतम् ।
तत्पत्र-पुष्प-शाखाद्यास्तृप्तिं यान्ति तथैव हि ।
दम्पत्योस्तर्पणेनैव सख्यस्तृप्यन्ति नित्यशः ॥
कायव्यूहं यथा योगी संविधाय भजत्यलम् ।
विषयान् विविधान्नित्यं प्रारब्धक्षयकाम्यया ।
तृप्यन्ति योगिनस्तृप्तौ कायव्यूहगता नराः ।
यतो सौख्यसुखित्वं हि तासां तेन सुसिद्ध्यति ॥
दिव्यप्रेमघनौ तौ द्वौ परस्पर-वशानुगौ ।
परस्पर - रसाविष्टौ वर्षतो रससुत्तमम् ॥
प्रेमवृष्टिभिरार्द्रौ तौ रसवृष्टि - परायणौ ।
तत्सुखेनैव संतृप्तास्तत्सख्यो रससागराः ॥
केचिच्छ्यामं भजन्त्यन्ये श्यामाञ्चैव समाहिताः ।
सख्यस्तु तद्रसाविष्टा अन्योऽन्यप्रेमबन्धनम् ॥
श्यामतेजो भजन्त्यन्ये गौरतेजस्तथाऽपरे ।
तत्सख्यस्तु रसाभिज्ञाः भजन्ति प्रेमबन्धनम् ॥ इति ।

अन्यच्च—

अहो चित्रमहो चित्रं वन्दे तत्प्रेमबन्धनम् ।
यद्बद्धं मुक्तिदं मुक्तं ब्रह्म क्रीडामृगीकृतम् ॥
तद्धिताहितचारिण्यः परानन्द - रसाप्लुताः ।
दृग्भ्यां तयोः समाश्लेषमालोक्याऽऽह्लादनिर्भराः ॥
रसमय्यस्तदीयां या रसलीला सुखावहा ।
ताः समास्वाद्य तृप्यन्ति तत्सुखासक्त-मानसाः ॥
एवं यत्र प्रियासक्तिः सुस्थिरा जायते भृशम् ।
स्वसुखासक्ति-कामाद्यास्तत्र नश्यन्त्यसंशयम् ॥
तयोः सौख्य-सुखित्वादि - प्रेमप्राखर्य - प्रोन्नतौ ।
संयोग - विप्रयोगाद्याः स्थवीयांसोऽपयान्ति हि ॥
संभोगो विप्रलम्भश्च शृङ्गाररस - शाखिनः ।

दलद्वयं प्रसिद्धं हि स्थूले स्थूलमणावपु ॥
शक्तिमद् यदधिष्ठानं शक्तिश्च तदधिष्ठिता ।
प्रधानत्वविवक्षायां तद् भेदेन विभिद्यते ॥
साधिष्ठाना सती शक्तिः राधिकेति प्रसिद्ध्यति ।
शक्तिमद् यदधिष्ठानं तत्कृष्णेति महो मतम् ॥
यच्चावरणनिर्मुक्तं तत्त्वं सच्चित्सुखात्मकम् ।
तदेव निर्मलं ज्योती राधा-माधवनामकम् ॥
राधिका माधवो नूनं माधवो ननु राधिका ।
उभयोरन्तरं त्यक्त्वा ध्यायेन्निर्मलया धिया ॥
परस्पर - प्रियतमौ परस्पर - रसात्मकौ ।
परस्परा-ऽऽसक्तचित्तौ परस्पर - रति प्रेप्सौ ॥
परस्परार्पितात्मानौ पाशितौ प्रेमपाशकैः ।
परस्पर - परिक्रीतमानसौ प्रेमसम्पदा ।
परस्पर - परिक्रीत - प्राणात्मानौ स्वभावतः ॥
यस्य यस्मिन् रतिः शुद्धा समुदेति हृदि स्फुटा ।
तस्य सर्वं प्रियं भाति ह्यपि स्याद्विपरीतकम् ॥
यस्मिन् देशे च यस्यां वा दिशि प्रेष्ठो विराजते ।
ततः समागतं तीक्ष्णमुष्णं रूक्षमपि स्फुटम् ।
वायुं वान्यं पदार्थं वा प्रियं मन्येत तेन वै ॥ इति ।

यदुक्तम्—"गोपीजनानां प्रीतिर्न तादृशी आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि इत्याद्युक्तेः" इति । तन्न ; मानस्य भगवत्सुखहेतुत्वेन तद्दोषात् ।

यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु ।
तेनाटवीमटसि तद्व्यथते न किंस्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥

इत्यादिवचनैस्तासां तत्सुखसुखित्वावगमात् । श्रीव्रजसीमन्तिनीजनानां प्रसादलेशानुगृहीतानामेव तत्प्रेमोपलब्धिसंभवात् बह्वीनां साधकचरीणामपि तत्रान्तर्भावेण कासाञ्चित् तादृगुत्कृष्टप्रेमरसार्थलाभेऽपि तदात्मिकानां तत्प्रेयसोदिव्याङ्गरश्मिभूतानां तादृक्परमोत्कृष्टप्रेमलाभे संशयलेशासंभवात् ।

यो हि यस्मिन् रज्यते, स तत्परवशो भवति । प्रेमप्राखर्यातिशय-तारतम्येन पारवश्य-तारतम्यमपि अतिशेते । तदतिशयस्य पराकाष्ठाप्राप्तौ पारवश्य-पराकाष्ठाप्राप्तिरपि । तदुक्तम्—

रसरूपं परं ब्रह्म दिव्यया निजरूपया ।
शक्त्या संवलितं नित्यं प्रेमतत्त्वं प्रचक्षते ॥
ब्रह्मादेस्तम्बपर्यन्त - सर्वप्राणिषु सर्वदा ।
राजते सुखसारस्यं जनयन् चित्सुखात्मकम् ॥
स्वप्रकाशं सदा यद्यप्यात्मनिष्ठं तथापि तत् ।
आश्रयं विषयं कञ्चित् स्वीकृत्यैव प्रकाशते ॥
यत्रैव विषये प्रेम कान्तादौ व्यज्यते स्फुटम् ।
आश्रये तद्वशित्वं हि व्यञ्जयत्याश्वसंशयम् ॥
यथा यथा भवेद् वृद्धिः प्रेम्णि तत्र तथा तथा ।
पारवश्यातिरेकोऽपि तद्वदेव प्रजायते ॥

नित्यसिद्ध-रसविग्रहस्य वै मादकस्य मधुरस्य तेजसः ।
प्रेमनामक सुदैवतस्य वै स्वाश्रयत्व-विषयत्व-भागिता ॥
आश्रयत्व-विषयत्व-भागिनौ निर्विशेषमिह दिव्यदम्पती ।
गौरतत्त्वमिह गोचरो भवेदाश्रयो भवति नीलकं महः ॥
लीलया तु परमस्य तेजसो दिव्यरस्ययुगतामुपेयुषः ।
आश्रयत्व-विषयत्व भागिता जायते खलु विभिन्नवस्तुगा ॥
श्यामले भवति रागसान्द्रता वश्यता च नितरां समुज्ज्वला ।
गौरतेजसि सुदीप्तभावकेऽगाधता च विमला विराजते ॥

सर्वेश्वरः सर्वरूपः सर्वोत्कृष्ट- परात्परः ।
विविधैश्वर्य - माधुर्यसिन्धुरद्भुत - विक्रमः ॥
तथापि प्रेमवशगो दीनो राधाननेक्षणः ।
मानिन्या राधिकायास्तु मानभीतः परातुरः ॥
अनन्तानन्तरूपासु यौवनोद्दामकान्तिषु ।
सौष्ठवौदार्य - माधुर्य - लावण्योद्रेक - भूमिषु ॥
सुन्दरीषु प्रमत्तासु संश्लिष्टास्वपि नित्यदा ।
राधापाङ्ग - सुधासिन्धु - माधुर्याहृत - मानसः ॥
यथा मधुकर शश्वत् नित्यनूतन - सुगन्धिषु ।
मकरन्दरसं भुङ्क्ते पुष्पेषु चपलाशयः ॥
तथैव माधवो नूनं विविधासु सखीसु च ।
सुन्दरीषु रसं भुङ्क्ते भृङ्गवद् रसलम्पटः ॥
सर्वसौन्दर्य - माधुर्य - लावण्य - गुणशालिनीम् ।
प्रेमसिन्धु - सुधासार - रसनिर्यास - रूपिणीम् ॥
गुणागाधां निराबाधां सर्वाराध्यां विनोदिनीम् ।

सुसाधो माधवो राधां प्राप्य निश्चलमानसः ।
वृत्तिं माधुकरीं त्यक्त्वा राधानिष्ठो बभूव ह ॥ इति ।

अन्यत्र च— राधामाधाय हृदये तत्याज व्रजसुन्दरीः ।
रसिकत्वाद् रसज्ञत्वाद्रसरूपो हरिः सदा ।
भक्तमानस - फुल्लाब्ज - मकरन्द - मिलिन्दकः ॥ इति ।

नित्याभिनवाभिनव-रसान्वेषकत्वं रसास्वादयितृत्वञ्च मधुकरस्य वैशेष्यम्, जलैकनिष्ठत्वं मीनस्य वैशेष्यम्, जलव्यतिरेकेण अमृतादावप्यनपेक्षत्वात् । चातकस्य स्वातीविन्दुव्यतिरेकेण अमृतत्रह्मद्रवादावपि नैरपेक्ष्यम् । प्रेमैकनिष्ठताया निर्वाहे तस्मिन्नेव नित्य-नूतनरसानुभूतिरिति रसिकस्यापि तत्र तत्र परिधावनं मुधैव । तदुक्तम्—

चातकीं वृत्तिमाश्रित्य ध्येयनिष्ठो भवेद्यदि ।
तत्रैव परमानन्द - रसावाप्ति - विशिष्यते ॥
नीरदे चातकप्रीति - र्निरपेक्षैव दृश्यते ।
मोघायामपि याच्ञायां प्रीतिवृद्धिर्हि जायते ॥
चातको याचतेऽभीष्टं जीवनं नीरदः खलु ।
पापाणवृष्टिं कुरुते वज्रपातञ्च निष्ठुरः ।
वर्धते चातकप्रीतिर्न व्याहन्येत कर्हिचित् ॥
अग्निदाहमवाप्यैव यथा स्वर्णं प्रदीप्यते ।
स्पृहणीयत्वमायाति प्रीतिमांस्तद्वदेव हि ।
अधिक्षेप - तिरस्कार - शाप - ताडन - कर्मभिः ।
विकृतिं याति नो किञ्चित् प्रीतिमांश्च प्रसीदति ॥
तदैव परमां काष्ठां गता प्रीतिः प्रदीप्यते ।
स्पृहणीया हरेः सैव सर्वसिद्धिप्रदायिनी ॥
जडे जले तथा मेघे प्रीतिशून्येऽपि तादृशे ।
प्रीतिर्भवति दुष्प्रापा मीन - चातकयोरिह ॥
किन्तु वाच्यं तदा नित्यसान्द्र - सच्चित्सुखात्मने ।
भगवत्यखिलाधारे परप्रेम - सुखास्पदे ॥
रसरूपे रसागारे रसास्वाद - परायणे ।
दिव्यदाम्पत्य - सस्नेह - रसक्रीडामुपेयुषि ॥
भृङ्गनिष्ठा रसिकता मत्स्यनिष्ठा ह्यनन्यता ।
कोटिकोटि - गुणोपेता राजते माधवे खलु ॥
लोकोत्तरायाः प्रेयस्याः खञ्जनाक्ष्या मुखाम्बुजम् ।

हास्य - स्मित - सुधासिक्तं वक्रभ्रुकुटि - संयुतम् ॥
नेति नेति सुधासूक्ति - शोभितं वीक्ष्य विह्वलः ।
मूल्यं विनैव स्वात्मानं विक्रीय वशगोऽभवत् ॥ इति ।

मीनस्य अनन्यगतिकत्वं प्रसिद्धम्—

आपेदिरेऽम्बरपथं परितः पतङ्गा भृङ्गा रसालमुकुलानि समाश्रयन्ते ।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ इति ।

पूर्णानुरागैकसरोवराद्भुत-प्रजात - पङ्केरुहरूप - राधिका ।
कृष्णस्तु तत्पद्मपरागमञ्जुलप्रभूत - दिव्यासवमत्त - षट्पदः ॥ इति ।

दिव्यानुराग-रससारसुधा हि राधिका, श्रीमाधवस्तद्गतजीवनो झषः, अनन्यता तेन । स्वतो हि माधवे लोकोत्तरा कोटिगुणा विराजन्ते । मधुपस्य अरविन्दमकरन्दे महती संसक्तिः प्रसिद्धा—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥ इति ।

आसक्तिविशेषादेव दारुभेदनिपुणोऽपि षडङ्घ्रिः सुकोमलान्यपि पद्मदलानि भेत्तुमशक्तः सन्नन्तःपङ्कजकोशबद्धो म्रियते । तदप्युक्तम्—

बन्धनानि किल सन्ति बहूनि प्रेमरज्जुकृत-बन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोशे ॥ इति ।

एवं सत्यपि न तस्य तदनन्यता तदधीनता वा, ततोऽन्यत्रापि तद्रति-दर्शनात् । मीने तु तदनन्यता दृश्यते, जलमन्तरा दुग्धसरोनिक्षेपेऽपि तन्मरणदर्शनात् । परन्तु माधवे तु मधुव्रतव्रातेभ्यः कोटिकोटिगुणिता संसक्तिर्भवति, कोटिकोटि-मीन-चातकेभ्योऽपि अनन्तगुणा अनन्यता च विद्यते ।

श्रीराधा दिव्यगन्ध-वर्णोपेतमद्भुतं पुष्पम्, श्रीकृष्णस्तदासक्तोऽद्भुतो मिलिन्दः, यश्च सर्वदा तदासक्तस्तदनन्यश्च तेनैव स्वसर्वस्वार्पणेन निर्मूल्यविक्रयेण सहजदैन्येनैव तृप्यति । सा च तादृशं प्रेयांसं सदा पश्यन्त्यपि न तृप्यति । तदुक्तम्—

अपरा निमिषदृग्भ्यां जुषाणा तन्मुखाम्बुजम् ।
आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा ॥ इति ।

चन्द्र-चन्द्रिकयोरिव प्रभा-भास्करयोरिव शब्दाऽर्थयोरिव जलवीच्यो-रिव गोपी-कृष्णयोरसाधारणः सम्बन्धः । तदुक्तम्—

चन्द्रचन्द्रिकयोर्यद्वत् प्रभाभास्करयोस्तथा ।
शब्दार्थयोर्यथा वा स्याद् यथा जलतरङ्गयोः ।
तथैव दिव्यदम्पत्योः सम्बन्धः सुमनोहरः ॥ इति ।

यथा तरङ्गेषु जलस्य सर्वाङ्गीणः संश्लेषः, तरङ्गाणां बहिरन्तः प्रतिकणं जलव्याप्तिर्भवति, कश्चिदप्यंशो न तरङ्गस्य तादृगवशिष्यते येन जलविश्लेषो भवेत्, तथैव गोपाङ्गनानामपि अन्तःकरण-प्राणेन्द्रिय-देहेषु सर्वत्रैव कृष्णव्याप्तिः ।

'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ।'
'तद्दूरे तदु अन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ।'

इतिरीत्या भगवतः बहिरन्तर्व्याप्तिरस्त्येव; तथाप्यत्र विशिष्य निखिलरसामृतमूर्तेः भगवतो रसात्मना तासु संव्याप्तिरुच्यते । जीवरूपासु परासु प्रकृतिषु च भगवतस्तादृश्येव व्याप्तिः । घटाकाश-महाकाशयोरिव बिम्ब-प्रतिबिम्बयोरिव जल-वीच्योरिव कनक-कुण्डलयोरिव च अंशांशिभावाख्यः सम्बन्धोऽत्र विद्यते । तत्तदुपाध्यपगमे तु पररूपतैव सम्पद्यते तस्यापि ।

पारतन्त्र्य स्त्रीत्वं स्वातन्त्र्यं पुंस्त्वमितिरीत्या पूर्णस्वतन्त्रस्य भगवत एवैकस्य पुंस्त्वम्, तदन्येषां तु पारतन्त्र्येण स्त्रीत्वमेव । तेन समेषामेव परप्रकृतिरूपाणां जीवानां गोपाङ्गनाभाव एव स्वाभाविकः । तदनुभवेन छायावतश्छायाया इव तदनुसरणं तद्भजनम् ।

यथा छाया तदधीनस्थिति-प्रवृत्तिमत्त्वेन तदधीनैव, तथैव तदधीनस्थितिप्रवृत्तिमत्त्वेन जीवोऽपि तदानुकूल्येन तदधीनः स्यात् । शृङ्गाररसरीत्या रसोद्रेके नायिका नायकभावं नायकश्च नायिकाभावमवाप्नोति । भक्तिरसोद्रेके तथैव भगवतः स्वातन्त्र्यमपि तिरोहितं भवति, भक्तस्य च पारतन्त्र्यमपगच्छति । तदुक्तम्—

वशीकुर्वन्ति मां नित्यं सत्स्त्रियः सत्पतिं यथा ।

प्रम्णः प्राबल्यं भगवतो भक्तस्य च तदेकतानत्वेन स्व-स्व-स्वभावपरिवर्तनञ्च सम्पद्यते ।

साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि ॥

इति सर्वज्ञोऽपि भगवान् तदेकतानत्वे भक्तातिरिक्तं किञ्चिन्न जानातीति तत्सार्वज्ञ्यस्वभाव-तिरोधानम् ।

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥

इतिरीत्या श्रीशङ्कराचार्याः परमेश्वरस्य समुद्रस्थानीयत्वं जीवानाञ्च तरङ्गस्थानीयत्वमूरीकुर्वन्ति। तरङ्गाणां यथा समुद्रेण स्वाभाविको नित्यश्च सम्बन्धः, परस्परं तु कृत्रिमोऽनित्यश्च सम्बन्धस्तथैव जीवानां भगवतैव स्वाभाविको नित्यश्च सम्बन्धः।

जीवानां स्त्री-पुरुषाणां परस्परसम्बन्धस्तु तरङ्गाणामिव अनित्यो व्यभिचारी च। तत एव सर्वासां स्त्रीणां तत्पतीनाञ्च भगवतैव मुख्यः सम्बन्धः। अत एव जीवानां भगवतैव सर्वसीमन्तिनीनामखण्डसौभाग्यम्। तत्सम्बन्ध एव शुद्धं पातिव्रत्यम्, अन्यसम्बन्ध एव तद्भङ्गः। तदुक्तम्—

गोपीनां तत्पतीनाञ्च सर्वेषामपि देहिनाम्।
योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक्॥ इति।

शब्दार्थयोरपि तादात्म्यमभ्युपगच्छन्ति तैर्थिकाः। तत्र सच्चिदानन्दसमुद्रस्यैव तरङ्गविशेषाः शब्दा अर्थाश्च। अभिधानात्मकप्रपञ्चोत्पत्त्यनुकूल-शक्त्यवच्छिन्न-चित्परिणामो विवर्तो वा शब्दः। अभिधेयात्मकप्रपञ्चोत्पत्त्यनुकूल-शक्त्यवच्छिन्न-सत्परिणामो विवर्तो वाऽर्थः। तदेवमेकप्रकृतिकत्वेन तरङ्गयोस्तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन यथा तरङ्गाभिन्नसमुद्राभिन्नत्वेन उभयोरभेदस्तथैव अर्थात्मकतरङ्गाभिन्न सच्चिदानन्दात्मक-समुद्राभिन्नत्वेन शब्दात्मकतरङ्गस्योभयोः शब्दार्थयोरभेदः।

एवं तरङ्गयोः सम्बन्धो यद्यप्युपपद्यते; तथापि तरङ्गजलयोरिव साक्षात्तादात्म्यसम्बन्धो नास्त्येवोभयोः।

तेन शब्दानां मुख्योऽर्थो जातिरेव। जातिश्च त्वतलभावार्थकप्रत्ययेनैव वेद्या। भावश्च सत्तैव। अत एव सत्ता परसामान्यम्, द्रव्यत्वादयस्तु तद्व्याप्यावान्तरसामान्यान्येव। कार्याणां कारणव्याप्यत्वं युक्तमेव। वस्तुयाथात्म्यं भावपर्यवसाय्येव भवति। भावश्च अन्वयव्यतिरेकाभ्यां कारणमेव। तेन घटस्य याथात्म्यं घटाकारे परिणतायां मृद्येव पर्यवस्यति। तथैव घटपदवाच्यं घटत्वम्, तच्च घटाकारेण परिणता मृत्तिकैव। एवं मृत्तिकात्व तदाकारपरिणतं जलमेव। जलत्वं तेजः। तेजस्त्वं वायुः। वायुत्वमाकाशः। तत्त्वञ्च अहत्त्वम्। तत् महत्तत्त्वम्। तच्च अव्यक्तम्। यद्यपि आकाशादीनामेकत्वात् जातिर्नास्ति; तथापि सृष्टिभेदेन भिन्नत्वात् तत्रापि जातिव्यवहारः। सर्वकारणं परमेश्वरः, तत्रैव सर्वस्य याथात्म्यं पर्यवस्यति। सर्वाधिष्ठाने स्वप्रकाशे परमात्मन्येव कारणत्वस्यापि पर्यवसानम्। तेन स

एव सर्वशब्दार्थः । तद्व्यवहारे ततच्छब्दानां तत्तत्प्रसिद्धार्थकत्वेऽपि पर्यवसानतः—

सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः ।
तस्यापि भगवान् कृष्णः किमतद्वस्तुरूप्यताम् ॥

इत्युक्तेः ब्रह्मैवार्थः । सच्चितोरभेदेन सच्चित्परिणामयोः शब्दार्थयोरप्यभेद एव सम्बन्धः ।

एवमेव श्रुतीनां प्रातिस्विकार्थानां भिन्नत्वेऽपि महातात्पर्यं ब्रह्मण्येव । यथा पादुकादिषु पादविन्यासेऽपि भुव्येव पादविन्यासः, पादुकादीनां तद्विकारत्वादेव, तथैव इन्द्रादिपदार्थानां ऐन्द्र्यादिश्रुतिवाच्यत्वेऽपि परमात्मवाच्यत्वं नापैति, इन्द्रादीनां परमात्मविकारत्वात् —'न ह्यपथा भवन्ति भुवि दत्तपदानि नृणाम् इत्युक्तेः ।

एवमेव कर्मोपासना तच्छेषाशेषवैदिकार्थप्रतिपादनमपि ततच्छ्रुतीनां भगवत्साक्षात्कारोपयोगि-चित्तमलविक्षेपनिवृत्त्यौपयिकत्वेन शुद्धब्रह्मण्येव पर्यवस्यति, सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः इति श्रुतिस्मृतिभ्याम् । तेन श्रुतीनामवान्तराणि तात्पर्याणि यद्यपि तत्तत्प्रातिस्विकेष्वर्थेषु संभवन्ति ; तथापि महातात्पर्यं तु शुद्धब्रह्मण्येव । तद्वदेव श्रुतिरूपाणां गोपसीमन्तिनीनां ते ते देव रूपा गोपा एव प्रातीतिकपतयः, वस्तुभूतः पतिस्तु सर्वासां भगवानेव ।

तत्रापि पाणिग्रहणसमये ब्रह्मकर्तृक-वत्सापहरणानन्तरं ब्रह्ममोहनिवृत्ति यावत् वर्षपर्यन्तं भगवानेव सर्ववत्स-वत्सपादिपेरूपेणापि व्यवहरन्नास्ते स्म । तदानीमेव सर्वासां पाणिग्रहण योगमायाविधानेन आनन्दवृन्दावनचम्पवादिरीत्या सम्पन्नम् । तत्र प्रातीतिक तत्तद् गोपकर्तृक-पाणिग्रहणमपि भगवत्कर्तृकमेव, तस्यैव तत्तद्रूपाभिव्यक्तिमत्त्वात् ।

यावद् वत्सपवत्सकाल्पकवपुर्यावत् कराङ्घ्र्यादिकं
यावद्-यष्टि-विषाण-वेणुदल-शिक् यावद्विभूषाम्बरम् ।
यावच्छीलगुणाभिधाकृतिवयो यावद् विहारादिकं
सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥

इत्युक्तेः । ब्रह्ममोह - निवृत्त्यनन्तरं तद्गोपानामागमनेऽपि योगमायामय्य एव तेषां व्यवहार्याः । भगवदीया भगवत्पाणिगृहीत्यस्तु न कदाचिदपि तान् प्रातीतिकान् पतीन् स्पृष्टवत्यः, यतो हि न जातु व्रजदेवीनां पतिभिः सह सङ्गमः, इति तन्त्रोक्तेः । यथा छायामय्याः सीताया एव लङ्कानिवासोऽ

श्रीराघवेन्द्र-रामस्वरूपभूतायास्तस्या असंभवादेव । न जातु भानुप्रभाया भानुविप्रयोगः । न वा चान्द्रमस्या ज्योत्स्नायाश्चन्द्रमसो वियोगः । यथा वा नामृतसिन्धोस्तन्माधुर्यविश्लेषः, तथैव परमानन्दसुधासिन्धोः भगवतस्तन्माधुर्यसारसर्वस्वाधिष्ठात्र्याः सीताया न संभवत्येव विप्रयोगकल्पनाऽपि । तथैव छायामयीनामेव गोपसीमन्तिनीनां प्रातिस्विक-पतिव्यवहृतिः । अत एव भागवतेऽप्युक्तम्—

नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान् स्वान्स्वान् दारान् व्रजौकसः ॥ इति ।

नन्वेवं किमर्थं तासां गोपिकानां स्वकीयानामपि परकीयात्वप्रख्यापनविडम्बनेनेति चेन्न । प्रीत्यतिशयप्रयोजक - दौर्लभ्यप्रतीतिप्रयोजकत्वेन अदोषात् । वैधप्रीत्यपेक्षया रागानुगायाः प्रीतेर्वैशिष्ट्यं प्रसिद्धमेव । विधिरत्यन्तमप्राप्तावेव भवति, रागप्राप्ते तदनपेक्षणात् । रागप्राप्ते भोजन-पानादौ विधिर्नैव भवति । पतपुत्रादिप्रीती रागप्राप्तत्वादेव न विधीयते । देवे परमेश्वरे चालौकिकत्वात् तत्र स्वारसिकी प्रीतिर्नास्त्येव, तत एव तत्र तद्विधानम् ।

तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥

इति भागवतोक्तेः ।

वैधी चेयं प्रीतिः सीमितैव भवति, न निरर्गला निरतिशया च । तत एव अलौकिकस्यापि भगवतो लौकिकत्वं सम्पद्यते । पति-सख्यादिभावेन तदभिव्यक्त्या वात्सल्य-कान्त-सख्यादि-रसालम्बनता । लौकिकेष्वपि वस्तुषु विधिस्पर्शे प्रीतिलाघवम्, निषेधस्पर्शे तु तद्गौरवम् ।

यद्यपि परमेश्वरापेक्षया गुरौ लौकिकत्वात् प्रीतेराधिक्यम्; तथापि पित्राद्यपेक्षया तत्र तल्लाघवमेव । तत्कस्य हेतोः? गुरुत्वस्य शास्त्रमूलत्वात्, पितृत्वस्य तदपेक्षया लौकिकत्वादेव । पित्राद्यपेक्षयाऽपि पत्न्यां प्रीत्यतिशयः, तदपेक्षया पित्रादौ तन्न्यूनतैव । तत्कस्य हेतोः? पितृभक्तिविधानादेव । मातृदेवो भव, पितृदेवो भव इत्यादि तद्विधानं भवति । धर्मपत्न्यपेक्षयापि लौकिकप्रेयस्यां प्रीत्यतिशयः सुप्रसिद्ध्यति । तत् कुत इति चेत्? स्वदारनिरतो भवेदिति पत्नीप्रीतिविधानात्, प्रेयसीप्रीतेश्च शास्त्रविरुद्धत्वेन निषेधाच्च । तेन यत्र निषेधविशेषः, यत्र च दौर्लभ्यातिशयस्तत्रैव प्रीत्यतिशयः सम्पद्यते ।

यथा नद्यादीनां स्वारसिकजलप्रवाहावरोधे प्रवाहप्राखर्यमेव भवति, तथैव स्वाभाविकप्रीतिप्रतिबन्धे प्रीतिप्राबल्यं वर्धते । मातुः पुत्रे कामिन्याश्च कामिनि प्रीतिर्न विधीयते, नापि शिष्यते; तथापि तत्रः यत्र स्वाभाविकी

प्रीतिर्भवति । निषेधे तु सा नितरां वर्धते । यद्यपि परकीयारतिः कविभिर्नेष्यते, तत्रापि भगवति निखिलरसामृतमूर्तौ प्रीत्यतिशयाय सापि इष्यत एव ।

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतो नाथ हृदयान्माऽपसर्पतु ॥

इति पुराणवचनात् ।

कामिहि नारि पियारि जिमि लोभिहिं के जिमि दाम ।
तिमि रघुनाथ निरन्तर, प्रिय लागहु मोहिं राम ॥

'यथाऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यन्निभृतं न वेद' इत्यादिवचनेभ्यः । अत एवोक्तम् उज्ज्वलनीलमण्यादौ —

नेष्टा यदङ्गिनि रसे कविभिः परोढा तद्गोकुलाम्बुजदृशां कुलमन्तरेण ।

यद्यपि श्रुतिरूपाणां नित्यसिद्धानामन्यासाञ्च स्वभावत एव निरतिशया प्रीतिः, तत्र निषेधदौर्लभ्यादिक्रमन्तरैव निरतिशयप्रीतिप्राखर्यम् ; तथापि साधनसिद्धानां कृते प्रीत्यतिशयाय तदपेक्षितमेव । रसशास्त्रमर्यादयैव रसो रसनीय इति नित्यसिद्धास्वपि यथा पूर्वरागादयो व्यज्यन्ते, तथैव अन्येऽपि प्रीत्यतिशयव्यञ्जका भावा व्यज्यन्ते । अत एव कैश्चित् नित्यसिद्धास्वपि प्रातीतिकं परकीयात्वमिष्यत एव ।

श्रुतिषु तु ब्रह्मभिन्नेन्द्राग्न्यादि-देवादिप्रतिपादिन्यः श्रुतय एव अन्यसम्बन्धित्वादन्यपूर्विकाः । यथा—कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे, अग्निः पूर्वेभिः''''इत्यादयः । साक्षाद् ब्रह्मप्रतिपादिन्यस्तु श्रुतयः प्रतीत्यापि अन्यसम्बन्धशून्या इति ता अनन्यपूर्विकाः । यथा—सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म इत्याद्याः । एवं समेषां जीवानां शब्दानाञ्च अन्यसम्बन्धः प्रातीतिको भवत्येव । यद्यपि मुख्योऽव्यभिचारी च भगवत्सम्बन्ध एव । भगवच्छक्तीनां तदन्तरङ्गाणाम् अनन्तानन्तगुणाधिष्ठात्रीणां शक्तीनां तु अन्यसम्बन्धाभावाद् अनन्यपूर्विकात्वमेव ।

परमानन्दसुधासिन्धोर्भगवतो माधुर्य-सारसर्वस्वाधिष्ठात्र्याः श्रीराधायाः तदङ्गरश्मिभूतानां तदङ्गकायव्यूहरूपाणाञ्चापि अनन्यपूर्विकात्वमेव । क्वचित् कासाञ्चिद् अन्यपूर्विकात्वप्रतीतिस्तु दौर्लभ्यप्रतीतित्वाय लीलैव ।

अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत् ।

इति न्यायेन मदीयतामयो वाम्यापरपर्यायः कौटल्याभासोऽधिकं रोचते, प्रियस्य तदभीष्टत्वात् ।

तदुक्तम्—

वामता दुर्लभत्वञ्च या च स्त्रीणां निवारणा।
तदेव पञ्चबाणस्य मन्ये परममायुधम्॥ इति।

अत एव तदीयताभावनामयत्वेन कान्तपराधीनता-दाक्षिण्यमयो, रत्याख्योऽन्यः, कान्ते मदीयताभिमानमयत्वेन पराधीनकान्तत्व-वामत्वादिमयोऽन्यो रत्याख्यो भावः। उभयत्र घृतस्नेहमधु-स्नेहघृत-स्नेहमिश्र-मधुस्नेहादयो भावा उल्लसन्ति। तत्रापि मदीयतामय-भावद्वयमिश्रतारतम्येन अन्येऽपि विविधा भावास्तत्र विभाव्यन्ते। सजातीयभावानां सख्यं विजातीयभावानां प्रतिपक्षता च। अतिमिश्रत्वेन अतिसूक्ष्मत्वेन वा नातिस्फुरज्जातीयादि-भेदभावानां ताटस्थ्यम्।

अन्यत्र तु—

गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका।
राधाऽनुराधा सोमाभा तारका-दशमी मता॥

इति। स्कान्दे प्रह्लादसंहितायां द्वारकामाहात्म्ये ललिता, श्यामला, धन्या, विशाखा, राधा, शैव्या, पद्मा, भद्रेत्यष्टौ। केचित्तु चन्द्रावली धन्यास्थाने मन्यन्ते। तथा च चन्द्रावली, श्यामा, शैव्या, पद्मा तदीयतामयभाववत्यः। राधा, ललिता, विशाखा, भद्रेति चतस्रो मदीयतामय-भाववत्यः। राधा तु त्रिंशत्कोटिसंख्याकासु व्रजसीमन्तिनीषु वरिष्ठा। अन्यत्र तु श्रीराधाया एव अष्टौ, सख्यो निर्दिष्टाः—ललिता, विशाखा, रङ्गदेवी, सुदेवी, चित्रा, तुङ्गविद्या, इन्द्रलेखा, चम्पकलता चेति।

अत्र परमानन्द-रसामृतसिन्धोः भगवतः श्रीकृष्णस्य माधुर्यसार-सर्वस्वरूपा श्रीराधा। काश्चित्तु तदङ्गरश्मिभूताः, अन्याश्च तदङ्गकाय-व्यूहप्रायाः। काश्चित्तु परमानन्दसुधासिन्धोः भगवतस्तरङ्गभूताः। काश्चित्तु तस्याचिन्त्यानन्त-कल्याणगुणाधिष्ठात्र्यो गोपाङ्गना - भावमुपगताः। काश्चित्तु विशिष्टाः तत्परप्रकृतिततयः गोपसीमन्तिनी-भावमुपजग्मुः। अन्यास्तु अनन्तानन्त - ब्रह्माण्डतत्त्युपादानभूताः। काश्चित्तु तदवान्तरानन्त-कार्योत्पादानुकूला अचिन्त्यज्ञानगोचरा अवान्तराः शक्तयः। काश्चित्तु विशिष्टभक्तानां बुद्धितद्वृत्तिरूपाः, अपराश्च अग्निकुमाररूपाः। काश्चन देवाङ्गनारूपाः, अन्याः श्रुतिरूपाः, मुनिरूपाः। अन्याश्च अयोध्यामिथिलादिषु रामस्वरूपानुरागिण्यः तद्वरदानप्रभावाद् गोपालीभावमुपागताः। काश्चित्तु तत्पदार्थात्मका भगवतोंऽशा एव स्वीयमेव सौन्दर्यमाधुर्यादिकमनुभवितुं व्रजवधूभावमुपगताः, तदेकलभ्यत्वात् तदनुभवस्य। मणिमयप्राङ्गणे दिव्य-

रत्नस्तम्भेषु चात्मनः प्रतिबिम्बमालोक्य प्रभुस्तन्माधुर्यलुब्धमानसस्तदनुभवितुं गोपाङ्गनात्वं गतः । तन्मोहो यथा—

रत्नस्थले जानुचरः कुमारः सङ्क्रान्तमात्मीयमुखारविन्दम् ।
आदातुकामस्तदलाभखेदात्निरीक्ष्य धात्रीवदनं रुरोद ॥

कोटि-कोटिकन्दर्पा अपि श्रीकृष्णस्य पादारविन्द-नखमणिचन्द्रिका कणमालोक्य तन्माधुर्यानुभवस्य गोपाङ्गनाभावमात्रैकलभ्यत्वात् तेऽपि तद्भावमापेदिरे ।

साधनसिद्धा गोप्यो जनकपुरायोध्यादिगता अग्निकुमार-देवाङ्गनारूपा अनेकविधा श्रुतिरूपा मुनिरूपाश्च । या पूर्वमुक्तास्ता अपि पुनर्द्विविधाः—अन्य-पूर्विकाः अनन्यपूर्विकाश्च । ऊढाः, अनूढाः, स्वकीयाश्च । परकीयात्वमपि समुत्कण्ठावर्धनाय अभिमानमात्रमेव, न तु वास्तवम् ।

मायाकल्पित - तादृक् - स्त्रीशीलनेनानुसूयुभिः ।
न जातु व्रजदेवीनां पतिभिः सह सङ्गमः ।
प्रच्छन्नकामिता ह्यासां गोकुलेन्द्रस्य सौख्यदा ॥

इति तन्त्रेषु प्रसिद्धेः ।

बृहद्वामनेऽप्युक्तम्—

अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । इति ।

कृष्णयामले—

ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः ।
तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरा ।
तुष्टोऽस्मि ब्रूत वः प्राज्ञा वरं यन्मनसेप्सितम् ॥

श्रुतय ऊचुः—

कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः ।
कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् ॥
यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः ।
भजन्ति रमणं मत्वा चिकीर्षाजनि नस्तथा ॥

श्रीभगवानुवाच—

आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते ।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ।
प्रेमैव गोपरामाणां काम इत्यगमत् प्रथाम् ॥

निकुञ्जे तु वृषभानुजैवैका नायिका; अन्यास्तु सख्य एव । तदुक्तं ब्रह्मयामले—

गोप्यैकया सुतस्तत्र परिक्रीडति नित्यदा।
अत्रैवाहं पुमानेकः केवलोऽगम्य ईश्वरः॥
स्त्री द्वितीया तु राधैव तस्याः सख्यः स्त्रियोऽपराः।
गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः।
देवकन्याश्च विप्रेन्द्र न मानुष्यः कथञ्चन॥ इति।

कृष्णयामले ऋषिचरीणां श्रुतिचरीणाञ्च कासाञ्चित् नामान्यपि वर्णितानि। व्रजगता नित्यसिद्धा गोप्यः कान्तभावाः सख्यभावश्च। निकुञ्जगतास्तु सख्यभावा एव। देवकन्यास्तु—

देवेष्वंशेन जातस्य कृष्णस्य दिवि तुष्टये।
नित्यप्रियाणामंशास्तु या जाता देवयोनयः॥
अत्र देवावतरणे जनित्वा गोपकन्यकाः।
ता अंशिनीनामेवासां प्राणसख्योऽभवन् व्रजे॥

पद्मोत्तरखण्डे—

पुरा महर्षयः सर्वे दण्डकारण्यवासिनः।
दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम्॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले।
हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्॥ इति।

कृष्णोपनिषदि—

श्रीमहाविष्णुं सच्चिदानन्दलक्षणं रामचन्द्रं दृष्ट्वा सर्वाङ्गसुन्दरं मुनयो वनवासिनो विस्मिता बभूवुः। तं होचुर्नोऽवद्यमवतारान् वै गण्यन्ते आलिङ्गामो भवन्तमिति। भवान्तरे कृष्णावतारे यूयं गोपिका भूत्वा मामालिङ्गथ। इति।

व्रजसीमन्तिनीनां परमोत्कर्षस्तु भगवतैव व्यञ्जितः।

यद्यपि भगवदङ्गसङ्गेन पूर्णतां मन्यमानानां कासाञ्चित् पुनरुत्कण्ठां संवर्धयितुं भगवदन्तर्धानं युक्तम्; तथापि श्रीगोपाङ्गनानां प्रेम्णो महत्परिमाणत्वेन परमाणु-महतोः ह्रास-वृद्ध्यसंभवाद् भगवदन्तर्धानादिकं न तदनुवृत्त्यतिशयप्रयोजकम्, किन्तु तासां वैप्रलम्भिक-प्रतापमहोत्कर्ष-विजिज्ञापयिषयैव भगवता स्वान्तर्धापनम्। अत एवोक्तम्—

न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः।
यामाभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना॥ इति।

'वः' इति सम्बन्धमात्रे षष्ठी, युष्मान् प्रति स्वसाधुकृत्यं स्वीयप्रत्युपकारकृत्यं न पारये ब्रह्मायुषाऽपि कर्तुं न शक्नोमीति भावः।

यद्वा—वः युष्माकं यद् असाधारणं साधुकृत्यं तदहं न पारये सर्वनैरपेक्ष्येण सर्वोपाधिराहित्येन निर्मलप्रेमविशेषेण निरवद्यसंयुजां निर्दोषप्रेममयसम्बन्धवतीनां निर्दोषचित्तैकाग्र्यवतीनां वा दुर्जरा गेहशृङ्खलाः संवृश्च्य मदर्थे युक्तायुक्ताप्रतीक्षणात् प्रोज्झितलोकाः, धर्माधर्माप्रतीक्षणात् त्यक्तवेदाः, सर्वनैरपेक्ष्येण संत्यक्त-स्वाः, निरस्तात्माऽऽत्मीयज्ञातिधनाः मामभजन्। नाहं तथाकर्तुं समर्थः, पित्रोः बन्धुषु तथाऽन्येषु चाहं स्निह्यामि।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।

इति प्रतिज्ञातोऽपि च्युतः। तस्माद्वः साधुत्वेनैव तत् युष्मत्-साधुकृत्यं प्रतियातु प्रतिकृतं भवतु। भवतीनां सौशील्येनेव ममानृण्यम्, वस्तुतस्तु ऋण्येव भवामीति भावः।

परमपूज्याभिस्ताभिस्तु विचारितं यत् परमेश्वरत्वादेवायं सर्वगुणपरिपूर्णः सर्वदोषगन्धरहितोऽपि अस्मत्प्रेमरसज्ञोऽपि अस्मान् प्रेमवत्त्वेन उत्कर्षयितुं स्वं चापकर्षयितुम् अस्मदृणीभवितुमेव अस्मान् त्यक्त्वाऽन्तर्हितः। तदिमं स्वयमेव पराबुभूषुं विजिगीषवो वयमेव अधन्या एवंभवितुमपारयन्त्योऽनेन फलतः प्रेम्णा जिता एवाऽभूम इति विश्वनाथचक्रवर्त्तिनामभिप्रायः।

"निकुञ्जोपासनायां यद्यपि श्रीकृष्णस्य रसिकत्ववद् अनन्यत्वमपि सम्पद्यते। श्रीकृष्णप्रेम्णोऽपि राधैकनिष्ठत्वं भवति। परमत्रापि विवेचनमर्हतीदं यच्छ्रीकृष्णस्य तत्र परमेश्वरत्वं सर्वसंभजनीयत्वं विद्यते न वा? प्रथमे—ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् इति प्रतिज्ञानुसारेण तस्य भक्तभजनानुविधायित्वमपि सेत्स्यति। अन्ते तदनीश्वरत्वापत्तिः। श्रीकृष्णस्य शक्तिविशेष ईश्वरः, भक्तभजनानुविधायी कृष्णस्तु न तथे"ति।

तदपि न मनोज्ञम्; स रूपान्तरेण अन्यत्रापि स्निह्यतीत्यस्य अनपायात्। गुरोः अनेकशिष्योपास्यत्ववद् भगवतः परमेश्वरस्य अनेकजीवोपास्यत्वोपासकानुग्राहकत्वादिकं युज्यत एव। सूर्यस्य प्रतिप्रतिबिम्बं बिम्बत्ववत् भगवतोऽपि प्रतिजीवमीश्वरत्वं भिन्नमेव। श्रीवाचस्पतिमिश्ररीत्या—यथा तत्तत्सभ्याज्ञातमायाविन एव मायिकपदार्थस्रष्टृत्वम्, तथैव जीवाज्ञातब्रह्मण एव मायिकविश्वस्रष्टृत्वम्। परमेश्वरत्वस्य जीवाविद्याहेतुकत्वेन प्रतिजीवं भिन्नत्वमेव। तेन तस्य तस्य जीवस्य भगवन्तं प्रति अनन्यत्वं सम्पद्यते, तद्वत्। अत एव प्रातिस्विकस्य इष्टदेवस्य स्वकर्तृकं स्नपन-भोजन-तर्पणाप्रेन्त्वरा स्नानादिराहित्यमेव मन्यते भक्ता इति सम्प्रदायः।

व्रजसीमन्तिन्यस्तु उरोजरागान्वितैः कुचकुङ्कुमाङ्कितैः स्वैरुत्तरीयैः आसनं चक्राय समर्प्य नेत्रयुगलाऽर्घ्यपात्रयोस्तत्पदसमर्थितैः प्रेमाश्रुभिः पाद्यमर्घ्यञ्च

समर्पयन्ति। स्वीयरूपमाधुर्यं ताभिः समर्पितमाचमनार्थम्। प्रभुणा च दृक्-पात्राभ्यां तदङ्गीकृतम्। ततोऽधरमधुसितसुस्मित-दधि-सुस्नेह-घृतान्वितं मधुपर्कं स्वर्णवर्णमुखपात्रस्थितं भगवते समर्पयन्ति। प्रमोदाब्धौ तं स्नपयित्वा सुरागस्वाङ्गार्पणेन तदङ्गेषु रागलापनेन चाङ्गरागमर्पयन्ति। पाद-संवाहनप्रसङ्गेन तत्पादयोः करकमलानि समर्पयन्ति। ततश्च भगवद्विषयक-प्रेममय-कामाग्नौ मद-मानदाहेन धूपं निरूप्य कुळस्नेह-लज्जा-रशनावर्तिका-दाहक-हृदयकापट्यादि-तमोनाशक-भगवत्स्वरूप-सुखप्रकर-प्रेमप्रकाशाख्यं दीपं दर्शयन्ति। मध्वधर-द्राक्षाफलनैवेद्यं निवेद्य चुम्बनेनैव स्वमुख-सुवासं मुखवासं दत्त्वा भ्रूयुगनर्तनं दर्शयित्वा गुणगानेन सभाजयन्ति।

किञ्च—त्वम्पदलक्ष्यार्थस्य प्रतीचः परमानन्दरूपत्वमभिप्रेतम्, तस्यैव संनिहितत्वाद् अवेद्यत्वे सति अपरोक्षत्वाच्च। तदभेदेनैव परात्मनोऽपि अपरोक्षत्वं परमानन्दरूपत्वञ्च। तस्यैव शरीरत्रयसाक्षित्वेन त्रिपुरात्वं सौन्दर्य-सारसर्वस्वं शिवभोग्यत्वञ्चोक्तम्। तेन जीवात्मनोऽपि भगवद्भोग्यत्वं संभवत्येव। अपरञ्च कृष्णस्य परमानन्दरसामृतसिन्धुरूपत्वं राधायाश्च तन्माधुर्य-सारसर्वस्वाधिष्ठात्रीत्वमुक्तम्। पूर्णानुराग-रससार-सरोवरसमुद्भूत-सरोजस्य वृन्दावनरूपत्वम्, सरोजस्थ-किञ्जल्कानां व्रजाङ्गनारूपत्वम्, तत्परागस्य च श्रीकृष्णत्वम्, पराग-मकरन्दस्य वृषभानुजात्वम्। तेन परमान्तरङ्गाया राधायाः श्रीकृष्णभोग्यत्वं युज्यत एव। श्रीकृष्णस्य आत्मारामत्वेन राधिका-यास्तु तदात्मत्वेन तद्रतित्वमुपपद्यत एव। तद्रश्मिभूतानां तत्सख्यभाववतो-नामपि तद्रूपत्वमेव। किञ्च—नित्य-निरतिशय-निरवद्य-दिव्यकल्याणगुण-गणास्पदे भगवति प्रेमाल्पत्वरा-ऽनन्यत्वराहित्यकल्पनमेव दुःसाहसम्।

जीवानां भगवदधीनस्थिति-गति-प्रवृत्तिमत्त्वं विशेषः। भगवतस्तु सर्व-व्यापकत्व-सर्वाश्रयत्व-सर्वसत्तास्फूर्तिप्रदत्वं विशेषः। पूर्वोक्तरीत्या रूपचक्षुषोः एकतेजःप्रकृतिकत्वे विषय-विषयिभावेऽपि प्रकृतिभावापत्तौ अभेद एव पर्यवस्यति। तत्र स्वप्रकाशत्वेन विषय-विषयिभावानपेक्ष्यैव प्रकाशः। तथैव अन्यत्र प्रेम्णो विषयसौन्दर्यज्ञानजनितवृत्तिविशेषरूपत्वेऽपि मूले प्रेम-सौन्दर्ययोरैक्यमेव। आत्मन एव निरतिशय-परमानन्दरूपत्वेन परमसौन्दर्य-रूपत्वात् तस्यैव प्रेमरूपत्वमपि। तस्यैव च परमानन्दरूपत्वेन सौन्दर्यमयत्वम्। तस्यैव प्रकाशरूपत्वेन सौन्दर्यज्ञानरूपत्वेन च परप्रेमास्पदत्वं प्रेमरूपत्वञ्च, जाड्यात्यन्ताभावाधिकरणत्वेन परमानन्दरूपत्वञ्च।

सौन्दर्यसारसर्वस्वस्य वृषभानुनन्दिनीरूपेण आविर्भावः। मूलतश्च उभयो-रपि ऐक्यमेव। जीवात्मनामनात्मत्वे तत्र भगवतस्तादृक्प्रेमासंभवेऽपि

तदात्मत्वेन तु तत्प्रेमास्पदत्वं सङ्गच्छत एव । अत एव उभयोर्व्यतिहारेण अभेदनिर्देशः श्रुतिषु दृश्यते—

त्वं वै भगवो देव ते अहमस्मि, अहं वै भगवो देव ते त्वमसि । इति ।

यथा रसिकैर्भगवतो द्वारकानाथ-मथुरानाथ-व्रजेन्द्रनन्दन-वृन्दावनचन्द्रादि-रूपान्तरेण सर्वेश्वरत्व - सर्वपालकत्व-भक्तेच्छानुविधायित्वाद्यङ्गीकारेऽपि निकुञ्जाधीश्वर-श्रीकृष्णरूपेण तस्य राधैकनिष्ठत्वमूरीक्रियते, तथैव रूपान्तरेण भगवतः सर्वज्ञत्व-सर्वपालकत्व-सर्वेश्वरत्वादिना अन्यनिष्ठत्वेऽपि स्वेष्टत्व-स्वपरप्रेमास्पदत्वादिरूपेण तस्य तदेकनिष्ठत्वमपि सङ्गच्छते ।

यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे इति वचनेन भक्तेच्छा-नुविधाय्येव भगवद्रूपं निर्धार्यते । तेन राधानिकुञ्जमन्दिरस्थ-श्रीकृष्णवत् तत्तद्भक्तहृदयनिकुञ्जस्थ-कृष्णोऽपि तद्भक्तनिष्ठ एव । तादृशभक्तानां तद्धृदय-कुञ्जस्थानां भगवत्स्वरूपाणाञ्च अनन्यत्वं रसिकत्वञ्च निर्विशेषमेव । अत एव—

साधको हृदयं मह्यं साधूनां हृदयं त्वहम् ।<br>
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥ इति ।

भक्ता भगवतो हृदयम्, तेन भगवदतिरिक्तं ते न किमपि जानन्ति, भगवांश्च तत्तद्धृदयस्थस्तत्तद्भक्तातिरिक्तं न किमपि जानाति, सार्वज्ञ्यमपि सङ्कुचति तस्य । यथा ज्ञानैश्वर्यादयोऽन्यत्र सातिशयाः भगवत्येव निरतिशयास्तथैव प्रेमापि भगवत्येव निरतिशयः, अन्यत्र तु सातिशय एव ।

एकस्मिन्नेव कृष्णे सर्वासां व्रजसीमन्तिनीनामनन्यप्रेमनिष्ठा । कृष्णस्य तु ईश्वरत्वात् सर्वासु प्रेमभावः, जीवानामनेकत्वादीश्वरस्य चैकत्वात् । तथापि तन्न्यूनतापरिहाराय कृष्णस्यापि रासलीलायामनेकरूपता भक्तानां हृत्स्थायि-भावरूपत्वाद् रसरूपत्वाच्च युक्ता । एकैकव्रजसीमन्तिनीं प्रति श्रीकृष्णाभि-व्यक्तिः, अङ्गनामङ्गनामन्तरे माधवो माधवो माधवं माधवञ्चान्तरेणाङ्गनाः इत्युक्तेः । प्रतिभक्तिभावनाभिव्यक्तिमत्त्वेन भक्तभेदेन भगवतोऽपि भेदाभ्युपगमात् ।

अत एव रूपान्तरेण बहुभिः पूज्यत्वेऽपि भक्तानां स्वभगवतः क्षुत्पिपासादि-भावनया भोगरागादिसम्पादने व्यग्रता दृश्यते । भगवतोऽपि तथा भावाभि-व्यञ्जना दृश्यते । केषाञ्चिदुपदेशेन कर्माख्याया देव्याः स्नानादिविलम्बेन कृसरानिर्माणविलम्बेन भगवतः क्षुत्क्षामत्वं जातमिति प्रसिद्धिः । एवं भक्तानां वात्सल्यानुरोधेन सर्वशक्तिमतोऽपि वानराद् भीतिमत्त्वं जातमित्यपि प्रसिद्धिः । तदनुरोधेनैव 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी'ति

भगवदुक्तिश्च। परमानन्दसुधासिन्धुर्भगवान् स्वीयमाधुर्यसारसर्वस्वरूपां राधां प्रति तु सर्वथैवानन्यो भवति। यथा—

दूरे सृष्ट्वा देवार्ता न कलयति मनाङ् नारदादीन् स्वभक्तान्
श्रीदामाद्यैः सुहृद्भिर्न मिलति हरति स्नेहवृद्धिं स्वपित्रोः।
किन्तु प्रेमैकसीमां परमरस-सुधासिन्धुसारै-रगाधां।
श्रीराधामेव जानन् मधुपतिरनिशं कुञ्जवीथीमुपास्ते॥
(श्रीराधासुधानिधौ, २३५) इति।

साक्षान्मन्मथमन्मथो भगवान् कृष्णः, तस्यापि मोहिनी श्रीराधा। केषाञ्चिद्रीत्या तास्तु परमस्वकीया अपि प्रकटलीलायां रसविशेषानुभवार्थं परकीयायमागाः। यत्र निषेधविशेषो, यत्र च मिथो दुर्लभता तत्र आसक्ति-विशेषस्य प्रसिद्धत्वात्। प्राकृतनायकालम्बनासु जुगुप्सितत्वात् परकीयात्वं निषिद्धम्। यथाऽऽह भरतः—

बहुवार्यते यतः खलु यत्र प्रच्छन्नकामुकत्वञ्च।
या च मिथो दुर्लभता सा परमा मन्मथस्य रतिः॥ इति।

रुद्रोऽपि—

वामता दुर्लभत्वञ्च या च स्त्रीणां निवारणा।
तदेव पञ्चबाणस्य मन्ये परममायुधम्॥ इति।

विष्णुगुप्तोऽपि—

यत्र निषेधविशेषः सुदुर्लभत्वञ्च यन्मृगाक्षीणाम्।
तत्रैव नागराणां निर्भरमासज्यते हृदयम्॥ इति।

तत्रैव क्षणे क्षणे नूतनत्वानुभूतिः। यथा—

कोऽयं कृष्ण इति व्युदस्यति धृतिं यस्तन्वि कर्णं विशन्,
रागान्धे किमिदं सदैव भवती तस्योरसि क्रीडति।
हास्यं मा कुरु मोहिते त्वमधुना न्यस्तास्य हस्ते मया
सत्यं सत्यमसौ दृगङ्गनमगादद्यैव विद्युन्निभः॥

यथैव आमाम्रफलं पक्वाम्रफलहेतुत्वं प्रतिपद्यते तथैव अपक्वभक्तिरेव पक्वभक्ति-हेतुत्वं प्रतिपद्यते। रसात्मकस्य भगवतो विश्वमूलत्वात् कटक-मुकुट-कुण्डला-दिषु कनकस्येव सर्वानुस्यूतत्वमेव। स एव रसो दशाभेदेन कार्य-कारण-परम्परामुपगतः सन् महाभावादिरूपेण व्यज्यते। स एव प्रेम-स्नेहादि-शब्दैरपि व्यवह्रियते। चेतोद्रवत्वातिशयात्मकोपाधिना प्रेमाख्यो रसः स्नेह आख्यायते। स एव स्नेहः प्रियत्वातिशयाभिमानेन कौटल्याभासपूर्वकं भाव-

वैचित्र्यं दधत् प्रणयो मानः। स एव च प्रियत्वातिशयाभिमानेन कौटल्यादि-वाम्यावभासात्मको मान इत्युच्यते। मान एव भाववैचित्र्यमुपगतः प्रणयः। प्रकर्षेण सामीप्यं नयतीति प्रणयः। तेनात्मनः प्रियतमसामीप्यातिशयोऽनुभूयते। अत एव विश्रम्भातिशयात्मकः प्रेमा प्रणय इति शिष्टैराख्यायते। यथा यथाऽन्तरं सामीप्यं व्यज्यते, तथा तथा विश्रम्भातिशयो भवत्येव। प्रत्यूहततिभिरपि अप्रतिहन्यमानोऽभिलाषातिशयात्मकः स्नेह एव रागः सम्पद्यते। रागास्पदेऽनुक्षणमभिनवं माधुर्यातिशयमनुभावयन् स्वयञ्च नव-नवीभवन् राग एवानुरागः।

शुद्धसत्त्वविशेषात्मा प्रेमसूर्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥
दुःखमप्यधिकं चित्ते सुखत्वेनैव व्यज्यते।
यतस्तु प्रणयोत्कर्षात् स राग इति कीर्त्यते॥ इति।

मध्याह्नसूर्योपरागेण भीषणज्वालाज्वलितमनलमुद्वमतः सूर्यकान्तपर्वतस्य शिखरमुपारूढा राधा कृष्णदर्शनेन परमानन्दमनुभवति। उदात्तमानो धृतस्नेह-परिणामो ललितश्च मधुस्नेहजः। यथा—

भावान्तरान्वितो गच्छन् स्वादोद्रेकं न तु स्वयम्।
गाढादरमयस्तेन स्नेहः स्याद् घृतवद् घृतम्॥
मदीयत्वातिशयभाक् प्रिये स्नेहो भवन्मधु।
स्वयं प्रकटमाधुर्यो नानारससमाहृतिः॥
मत्तत्तौष्मधरः स्नेहो मधुसाम्यान्मधूच्यते॥
सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते॥ इति।

तथाऽन्यत्र—

सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे।
यदेव बन्धनं यूनोः स प्रेमा परिकीर्तितः॥
आरुह्य परमां काष्ठां प्रेमा चिद्दीपदीपनः।
हृदयं द्रावयन्नेव स्नेह इत्यभिधीयते॥
क्षान्तिरव्यर्थकालत्वं विरक्तिर्मानशून्यता।
आशाबन्धः समुत्कण्ठा नामगाने सदा रुचिः॥
आसक्तिस्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले।
इत्यादयोऽनुभावास्यु - र्जातभावाङ्कुरे जने॥

ह्लादिनी संधिनी संवित् त्वय्येका सर्वसंस्थितौ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते॥ इति।

श्रद्धया साधुसङ्गः, तेन भजनक्रिया, तयाऽनर्थनिवृत्तिः, ततो निष्ठा, ततो रुचिः, तयाऽऽसक्तिः, ततो भावः, ततो महाभावः प्रेमा वा। यथा इक्षोः पाकभेदेनैव गुडादयो भवन्ति तथैव प्रेम्णोऽवस्थाभेदेनैव स्नेह-रागादयो जायन्ते। तथो चोक्तम्—

बीजमिक्षुः स च रसः स गुडः खण्ड एव सः।
शर्करा च सिता सा च सा यथा स्यात् सितोपला॥ इति।

रतिः साधारणी, समञ्जसा समर्था चेति भेदेन त्रिधाऽभिमता। मणिवत्, चिन्तामणिवत्, कौस्तुभमणिवच्च नातिसुलभा, सुदुर्लभा, अनन्यलभ्या च।

प्रीतिश्चेष्टा प्रियानुकूल्यतात्पर्या, तदनुगतमेव आत्मसुखम्। तेन तत्सुख-सुखित्वमेव कैतवप्रेम्णो महत्त्वम्। तन्न्यूनत्वादेव स्वसुखसंभोगपर्यवसायितया कुब्जाश्रयाया रतेरपकर्षः। पट्टमहिषीणामपि रतेस्तत्तत्सुखसुखित्वापकर्षस्यैव अपकर्षहेतुत्वम्। यथा—

पत्नीभावाभिमानात्मा गुणादिश्रवणादिजा।
क्वचित् भेदितसंभोगतृष्णा सान्द्रा समञ्जसा॥

अत एव श्रीकृष्णस्य न तत्र मोहः।

पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं कुहकैर्न विभ्व्यः।

तत्सुखसुखित्वसारत्वादेव ब्रह्मविद्वरिष्ठो मोहनोऽपि कृष्णो गोपाङ्गनाभिर्मोह्यते तत्प्रीत्यतिशयादेव इत्युक्तमेव। प्रेमातिशयेन सर्वविस्मरणम्—

तानाविदन्न् मय्यनुषङ्गबद्धधियः स्वमात्मनमदस्तथेदम्।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे॥

प्रियस्य सन्निकर्षेऽपि प्रेमोत्कर्षस्वभावतः।
या विश्लेषधियाऽऽर्तिस्तत्प्रेमवैचित्यमुच्यते॥

पूर्णानुरागरसास्वादने बुद्धौ निमग्नायामङ्कालिङ्गनशालिनोऽपि भगवतोऽस्फूर्तौ विशेषार्तिवैवश्यम्। यथा नेत्रसहकारिणोऽपि तेजसः प्राखर्ये दर्शनशक्तेर्मूर्च्छननं, तद्वत्। तथा चोक्तम्—

अङ्कालिङ्गनशालिनी प्रियतमे हा प्रेष्ठ हा मोहने-
त्याक्रोशन्त्यतिकातराऽतिमधुरं श्यामानुरागोज्ज्वला।
व्यामोहादतिविह्वलं निजजनं कुर्वन्त्यकस्मादहो
काचित् कुञ्जविहारिणी विजयते श्याममपिमोहिनी॥ इति।

विरहे प्रियतमस्फूर्त्या तदालिङ्गनप्रवृत्तौ तल्लोपे विरहार्तिसागरे निमज्जनमेव। तदुक्तं महानुभावैः परमाचार्यैः—

स्वेनैव संवेद्यदशामवाप्य यः स्वाश्रयाणां वृणुते प्रभावात्।
दिव्यप्रकाशो ह्यनुराग एव प्रोक्तो महाभावतया रसज्ञैः॥

कृष्णसुखे पीडाशङ्कया निमिषस्यापसहिष्णुतादिकं यत्र स रूढो महाभावः। प्रियतमसुखलेशेन तादृगनन्तं सुखं भवति। यस्य लेशेनापि कोटिकोटिब्रह्माण्डगतानि सुखानि तुलयितु नार्हन्ति, तत्पीडाशङ्कया तादृगनन्तं दुःखं भवति। यस्य लेशेनापि समस्तवृश्चिकादिदंशनादिजातं दुःखं तुलां नार्हति, तस्य संयोगवियोगभेदेन द्वौ भेदौ—मोदनो मादनश्च। मोदन एव मोहनः; मादनो दिव्यमधुविशेषवत् मत्तताकरः।

स्यान्नः सौख्यं यदपि बलवद्गोष्ठमाप्ते मुकुन्दे
यद्यल्पापि क्षतिरुदयते तस्य मा गात्कदापि।
अप्राप्तेऽस्मिन् यदपि नगरादार्तिरुग्रा भवेन्नः
सौख्यं तस्य स्फुरति हृदि चेत्तत्र वासं करोतु॥

मरणानन्तरमपि स्वशरीरस्थैर्भूतैरपि तत्सेवनाभिलाषः। यथा—

पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशे विशन्तु स्फुटम्,
धातारं प्रणिपत्य हन्त शिरसा तत्रापि याचे वरम्।
तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गन-
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः॥ इति।

श्यामप्रीतिः स्मरणे विषमा, विस्मरणे प्राणाः स्फुटन्ति। सख्यः प्रीतिः साधीयसीति को वक्ति? हासंहासं मोदंमोदं जनः प्रीतिं करोति, रोदंरोदं च जीवनं यापयति। या कुलमर्यादां रिरक्षती प्रीतिं करोति सा तु विलपन्त्येव तुषदाहेन म्रियते। राधा चैवं भावयति—जीवने मरणे जन्मजन्मान्तरेषु त्वमेव मम प्राणनाथो भूयाः। त्वच्चरणयोर्मम प्राणाः प्रेमबन्धनोपनिबद्धाः। त्वय्येव मम सर्वस्वमर्पितम्। भुवनत्रयेऽपि भवन्तमन्तरा न कोऽपि मदीयः। शीतलं भवच्चरणारविन्दयुगलमेव मम सर्वस्वम्। त्वमेव कुलशीलमर्यादाधिपतिः। त्वत्सम्बन्धेन कलङ्कोऽपि मम भूषणमेव। सतो असतो वेति भवान् सर्वमेव जानाति। पुण्यमपुण्यं वा यत्किञ्चिन्मम तत्सर्वं त्वय्येवार्पितम्। रङ्कोपलब्धमणिमिव प्रतिक्षणं मोहनं पश्यति। छायेव तमनुगच्छति। प्रियोऽपि तत्प्रेमवशीभूतस्तामनुसरति।

कदाचिच्च राधामनः संतप्यते—अहं कालिन्दीतटे किं न गतवती। कृष्णेन मन्मनः छद्मना हृतम्। तत्सौन्दर्यसमुद्रे नेत्रे निमग्ने। तदीययौवन-

धने मनो विलीनम्। गृहगमनमार्गो दीर्घायते। हृदयं विदीर्यते। ललाटपटले चन्दनचर्चितेन मृगमदेन मम नेत्रतारकं निबद्धम्। पीताम्बरोपसृष्टया काञ्च्या शोभमानेन वपुषा जातिकुलशीलादिकं सर्वं हृतम्।

श्रीराधाया मानमुद्रामालोक्य तन्माधुर्यापहृतमनस्का काचिद्भाग्यशालिनी वदति—सखि त्वय्येव मानं शोभते। त्वं तावन्मानवत्येव तिष्ठ, यावदहं माधवमानयामि। अन्यासां स्मित-हासादिमिश्रमपि मुखं न तथा शोभते, यथा मानमुद्राङ्कितरुषा वक्रभ्रूकुट्यादियुतं त्वन्मुखं शोभते। अत्र पूर्णचन्द्रबिम्बोऽपि निर्माञ्छ्यते। सा तन्माधुर्यमोहिता गन्तुमागन्तुमसमर्था दोलायितमनस्का शोचति—ईदृशी शोभा कदापि लप्स्यते न वेति तामेव रसयामि? नन्दनन्दनमानीय तस्मै दर्शयामि वा? किं करोमि, क्व गच्छामि तिष्ठामि वा?

सखि हे चरतु यथेष्टं वामो वा दक्षिणो वास्तु।
श्वास इव प्रेयान् मे गतागतैर्जीवयत्येव॥ इति।

प्रेयसा प्रहितं पत्रं प्रेप्सितमपि न काश्चित् पठितुं पारयन्ति। प्रेयसा प्रेषितं पत्रं समौत्सुक्येन प्राप्य च पठितुं न प्राभवत् कापि विरहार्ता गोपिका।

नयनं सजलं नित्यं पत्रञ्चापि सुकोमलम्
विरहाग्निजसंतापात् संतप्ताङ्गुलयस्तथा॥
दर्शने क्लिद्यते पत्रं स्पर्शनेन तु दह्यते।
किं करोमि क्व गच्छामि दुःखञ्चोभयतः स्थितम्॥

प्रेमोन्मदास्तैस्तैरुद्दीप्तरसा वितर्कयन्ति—

हरिर्वसति यद्देशे सख्यः किं तत्र गर्जनम्।
मेघानां न भवत्येव मघोना वा निवारितम्॥
दर्दुरा भक्षिताः सर्पैर्बिन्दवो नो विशन्ति किम्।
मयूराश्चातकाश्चापि कोकिला वा तपस्विनः।
वधिकैर्निहता नूनं ह्यतो न व्यथते हरिः॥
सखि त्वदीयभ्रूभङ्ग-प्रभावान् माधवो ननु।
जातस्त्रिभङ्गललितो जगन्मोहनमोहनः॥
अञ्जनाञ्चितदृग्भ्यां ते वीक्षणाच्छ्यामलोऽभवत्।
त्वदीयस्मितदामिन्या कामिन्यैव वशीकृतः॥
राधार्धनाममात्रेण दीनदीनो भवत्यथ।
त्वदिच्छया सदा बाले बाल्यो नृत्यत्यहर्निशम्॥ इति।

कृष्णनाम यदा रम्यं श्रोत्रयोः सखि सङ्गतम् ।
विस्मृतं देहगेहादि विमूढेव भवाम्यहम् ।
पुनः पुनश्चाश्रुपूर्णे नेत्रे चित्तञ्च चञ्चलम् ॥ इति ।

मुखे वचश्च नाभ्येति दशा काचिदिवाद्भुता ।
सर्वाङ्गैः सर्वभावैश्च श्रोत्रमय्येव सङ्गता ॥ इति ।

मानिन्याः कृष्णप्राणेश्वर्याः श्रीराधाया मानापनोदन-व्यापारश्रान्ताया मञ्जर्या मधुरवचन-रचना—अयि प्रियसखि ! त्वदीयमानं तु न क्षीयते, रजनी तु क्षीणतामुपैति । कोकिलालापे ! स्थानं स्थानं प्रतिपक्षिणस्तु निनदन्ति, त्वं तु न वदसि । सुस्मिते ! त्वं न हससि, कमलकुड्मलानि तु विकसन्ति । मृगशावकनयने ! त्वत्प्रियस्तु किसलयशयनं रचयति, त्वं तु वाम्यं भजसि । यथा—

रजनी संक्षयं याति त्वन्मानं नास्तमेति हि ।
पिकालापप्रिये नूनं त्यज मानं हि भामिनि ॥
रुवन्ति मधुराराव खगास्त्वं तु न भाषसे ।
त्वं नो हससि कल्याणि ! दीनदीनेव राजसे ॥
कञ्जकुड्मलजालानि विकसन्ति हसन्ति च ।
त्वत्प्रियः परया प्रीत्या पराढ्यं शयनीयकम् ।
रचयत्यनिशं तदिव ! त्वयौदास्यं वितन्यते ॥ इति ।

निकषे स्वर्णरेखेव श्यामलतमालतरौ कनकवल्लीव श्रीमाधवस्य श्यामाङ्ग-संलग्ना वृषभानुनन्दिनी नितरां राजते । चापल्यमपहाय नीलनीरदे स्थिता विद्युल्लेखेव कनकमेरौ सुरसरिद्धारेव साक्षान्मन्मथमन्मथे भगवति श्री-कीर्तिनन्दिनी शोभते । यथा—

तमालश्यामले कान्ते माधवे कीर्तिनन्दिनी ।
निकषे स्वर्णरेखेव भ्राजते विमलाशया ॥
स्वर्णवल्ली यथा वा स्यात् समाश्लिष्टा तमालके ।
नीलनीरद-मध्यस्था यथा चापल्यवर्जिता ।
विद्युल्लेखा विराजेत तथा कृष्णे तु राधिका ॥ इति ।

श्रीमाधवस्य नयनं स्वप्रेयस्याः श्रीराधाया मुखचन्द्रे चकोरायते । स्वहृदयेश्वर्याः श्रीपादाब्जपरागे मधुपायते । तस्याः जघनपुलिने वरखञ्जनायते । महाभाव-रससारस्वरूपायास्तस्याः रससरस्यां तन्वां मीनायते । माधुर्य-सारसर्वस्वाधिष्ठात्र्यास्तस्याः सुखाटव्यां सुतनुकान्त्यां हरिणायते । तदुक्तम्—

चकोरस्ते वक्त्रामृतकिरणबिम्बे मधुकर-
स्तव श्रीपादाब्जे जघनपुलिने खञ्जनवरः।
स्फुरन्मीनो जातस्त्वयि रससरस्यां मधुपते
सुखाटव्यां राधे त्वयि च हरिणस्तस्य नयनम्॥

(रा० सु० नि० २५१) इति।

श्रीप्रेयस्या युगलकुचकुड्मले स्वीयप्रतिबिम्बद्वयं वीक्ष्य संमोहितो महामोहनो निजप्राणप्रेयसीं ससम्भ्रमं वक्ति—'प्रिये! त्वत्कुचयुगे यदेतन्नीलेन्दीवरवृन्दकान्तिलहरीचौरं किशोरद्वयं चकास्ति तत् किमिदं तद्रूपेण मन्मनःसंमोहनम्? तन्मामात्मसखीं कुरु येन तद्द्वयं नौ दृढं श्लिष्यति। तादृक् प्रियसंमोहनमालोक्य जातं राधास्मितं नः पातु।' यथा—

नीलेन्दीवर - वृन्द-कान्तिलहरीचौरं किशोरद्वयम्,
त्वय्येतत्कुचयोश्चकास्ति किमिदं रूपेण संमोहनम्।
तन्मामात्मसखीं कुरु द्वितरुणीयं नौ दृढं श्लिष्यति
स्वच्छायामभिवीक्ष्य मुह्यति हरौ राधास्मितं पातु नः॥

(रा० सु० नि० २४५)

तथैव प्रेष्ठोरसङ्गमहोत्सवाविष्टाया अपि प्रेयसो हृदयस्थितकौस्तुभमणौ परं संमोहनं मधुराकारं स्वप्रतिबिम्बं वीक्ष्य सञ्जाततीव्रेर्ष्याक्रोधेन कुचकोरकस्थितं प्रियतममपनयेत्युक्त्वा करमपास्य बहिर्गताया राधायाः प्रियसख्यै सास्रं निवेदितानि वाक्यानि कदा श्रोष्यामि। यथा—

सङ्गत्याऽपि महोत्सवेन मधुराकारां हृदि प्रेयसः,
स्वच्छायामभिवीक्ष्य कौस्तुभमणौ संभूतशोकाक्रुधा।
उत्क्षिप्य प्रियपाणिमेव विनयेत्युक्त्वा गताया बहिः,
सख्यै सास्रनिवेदितानि किमहं श्रोष्यामि ते राधिके॥

(रा० सु० नि० २४६)

## श्रीराधातत्त्व-रहस्यम्

श्रीकृष्णप्राणेश्वर्यां माधुर्यसारसर्वस्वाधिष्ठात्र्यां राधायामनेके निधयः सामञ्जस्यमश्नुवते। सा लोकोत्तरप्रेमविलासवैभवनिधिः कैशोरशोभानिधिः वैदग्ध्यपूर्णमधुराङ्गभङ्गिमनिधिः लावण्यसम्पन्निधिः शृङ्गारमहारसनिधिः कन्दर्पलीलानिधिः सौन्दर्यैकसुधानिधिः माधवस्य सर्वस्वभूतो निधिः श्रीराधा सर्वोत्कर्षेण वर्तताम्। यथा—

शुद्धप्रेमविलासवैभवनिधिः कैशोरशोभानिधिः,
वैदग्धी मधुराङ्गभङ्गिमनिधि - र्लावण्यसम्पन्निधिः।
श्रीराधा जयतान् महारसनिधिः कन्दर्पलीलानिधिः
सौन्दर्यैकसुधानिधि-र्मधुनतेः सर्वस्वभूतो निधिः॥

( रा० सु० नि० २४४ )

यद्यपि परमानन्दसुधासिन्धोः श्रीकृष्णस्य माधुर्यसारसर्वस्वाधिष्ठात्री श्रीराधा तदात्मभूतैव; तथापि लीलाविशेषावसरे सा तस्यातीव दुर्लभा प्रतीयते। तदप्युक्तम्—

यस्याः कदापि वसनाञ्चल - खेलनोत्थ-
धन्यातिधन्य-पवनेन कृतार्थ-मानी।
योगीन्द्रदुर्गमगति - र्मधुसूदनोऽपि
तस्यै नमोऽस्तु वृषभानुभुवो दिशेऽपि॥

( रा० सु० नि० १ )

यस्याः कदापि नीलवसनाञ्चल-खेलनोत्थेन धन्यातिधन्यपवनेन योगीन्द्र-दुर्गमगतिः मधुसूदनोऽपि स्वात्मानं कृतार्थं मन्यते, तस्याः वृषभानुसुताया दिशेऽपि नमः। एवं परमपुरुषः शिखण्डिमौलिः यस्या निकुञ्जप्रवेशप्राप्तये यत्किङ्करीः काकुवाण्याऽनुनयते तस्या रसनिधेः कीर्तिसुतायाः केलिकुञ्ज-भवनाङ्गणमार्जनीत्वमात्मनः कामयन्ते रसिकाः। यथा—

यत्किङ्करीषु बहुशः खलु काकुवाणी नित्यं परस्य पुरुषस्य शिखण्डमौलेः।
तस्याः कदा रसनिधेर्वृषभानुजायास्तत्केलिकुञ्जभवनाङ्गणमार्जनीः स्याम्॥

( रा० सु० नि० ७ )

पूर्णानुराग-रससागर-सारसर्वस्वमूर्तेः श्रीराधायाः पादपद्म-नखमणि-च्छटाया विस्फूर्जनप्रभावादेव गोपवधूषु मदनमोहन-मोहनसामर्थ्यमुद्भूतम्। तस्याः कृपां कामयन्ते रसिकाः। यथा—

यत्पादपद्म-नखचन्द्र-मणिच्छटाया
विस्फूर्जितं किमपि गोपवधूष्वदर्शि।
पूर्णानुराग - रससागर - सारमूर्तिः,
सा राधिका मयि कदापि कृपां करोतु॥

( रा० सु० नि० १० )

दिव्य-प्रमोद-रससार-निजाङ्ग-सङ्ग-
पीयूषवीचि-निचयैरभिषेचयन्ती।

कन्दर्प - कोटिशर - मूर्च्छितनन्दसूनु-
सञ्जीवनी जयति कापि निकुञ्जदेवी ॥
( रा० सु० नि० ५ )

प्रणयलोलविलोचनायास्तस्या रसवारिनिधेस्तरङ्गैरिवाऽङ्गैः परिरभ्यमाणः शृङ्गाररससारसिन्धु-समुद्भूतश्चन्द्र इव श्यामचन्द्रश्चित्रां चमत्कृतिमादधाति। श्यामसंदर्शनेन चम्पकलतेव चमत्कृताङ्गी वंशीनिनादश्रवणेन विह्वलाङ्गी दिव्यैर्गुणैरगाधा प्रशमिताशेषबाधा राधा भक्ताभीष्टकल्पलतेव राजते।

दिव्यकेलिकल्लोलमालिनी, नाभ्यावर्तशालिनी, श्यामामृताम्बुनिधि-सङ्गमतीव्रवेगिनी, सुखतरङ्गिणीव राधा भक्तान् पुनाति। भक्तेषु सत्प्रेम-सिन्धुमकरन्दरसौध-धारासारानभितः स्रवत् तस्याश्चरणारविन्दमेव गोविन्द-जीवनधनम्।

श्रीराधायाः श्रीमुखं कुटिलकुन्तलभृङ्गजुष्टं सत्प्रेमराशिसारसरोवरसमुद्भूतसरोजमिव स्वानन्दसीधुरससिन्धु-विवर्धनेन्दुरिव अनन्तानन्तशोभास्पदम्। अखिलसारसारं तस्याः स्वरूपे लावण्यसारे रससारे सर्वसुखैकसारे कारुण्यसारे मधुरच्छविरूपसारे वैदग्ध्यसारे रतिकेलिविलाससारे मम मनो रमताम्। तथा चोक्तम्—

लावण्यसार-रससार-सुखैकसारे, कारुण्यसार-मधुरच्छवि-रूपसारे।
वैदग्ध्यसार रतिकेलिविलाससारे राधाभिधे मम मनोऽखिलसारसारे ॥
( रा० सु० नि० २५ )

पीतारुणस्वर्णवर्णां दिव्यदामिनी-कोटि-पुञ्जपिञ्जरप्रभासां विवस्वत्कोटि-दीप्तां सुधामयूख-कोटिकोटिसुशीतलाम् अनन्तानन्त-कोटि-चन्द्रसागरमन्थनोद्भूत-निर्मलनिष्कलङ्का ऽभिनवचन्द्रसमाह्लादिनीं प्रोल्लसदभिनवानुराग-मदविह्वलां राधां सदा स्वात्मतादात्म्यभावामपि माधवो दुर्लभामिव मन्यते। दौर्लभ्यभावमवद्योतयितुमेव राधासुधानिधौ मदनमोहनस्य विटत्व-मप्युक्तम्। यथा—

श्रीराधिकां निजविटेन सहालपन्तीं शोणाधर-प्रसमरच्छवि-मञ्जरीकाम्।
सिन्दूरसंवलित-मौक्तिकपङ्क्तिशोभां यो भावयेद् दशनकुन्दवतीं स धन्यः ॥
( रा० सु० नि० २८ )

निजप्राणाधिकेन प्रियतमेन श्यामसुन्दरेण सहाऽऽलपन्तीम्, आलापकाले शोणाधरात् बिम्बाफलाधरोष्ठात् प्रसरन्त्यश्छविरूपा सौन्दर्यरूपा मञ्जर्यो यस्यास्तां तथाभूताम्। सिन्दूरेण संवलितानां मौक्तिकपङ्क्तीनां शोभा यस्या-

स्ताम्। कुन्दकुड्मलदशनां राधा यो भावनया हृदिस्थां पश्येत् स धन्य इति भावः।

परकीयाभावादपि अतितीव्रगाढानुरागातिशयप्रदर्शनायैव तस्या अभिसारिकात्वं गोपनीयत्वञ्च प्रदर्शितम्। यथा—

सङ्केतकुञ्जमनु पल्लवमास्तरीतुं,
तत्तत्प्रसादमभितः खलु संवरीतुम्।
त्वां श्यामचन्द्रमभिसारयितुं धृताशे
श्रीराधिके मयि विधेहि कृपाकटाक्षम्॥

( रा० सु० नि० ३१ )

हे श्रीराधिके! तेषु तेषु सङ्केतकुञ्जेषु दिव्याभिनवपुष्पपल्लवमयीः शय्या निर्मातुं पुष्पपल्लवादिमयैः तत्तत्प्रासादैः त्वामभितः संवरीतुं गोपायितुं श्यामचन्द्रं कृष्णचन्द्रमुद्दिश्य अभिसारिकां त्वामभिसारयितुं धृताशे बद्धाशे मयि तया तया सेवया प्रसादं कृत्वा प्रसादसुमुखीभूत्वा कृपाकटाक्षं विधेहि। नहि सर्वथा स्वकीयायां मुख्यमभिसारिकात्वं न वा तत्र गोपनमिति तत्त्वम्।

सान्द्रानुराग-रससार-सरोवर-समुद्भूत-सरोजमिव स्वानन्द-सीधु-मकरन्द-घनमिव श्रीवृषभानुनन्दिन्याः प्रत्यङ्गं समुच्छलदुज्ज्वलरसामृतसिन्धुसर्वस्वम्। अनन्तानन्दकोटि - चन्द्राब्धिमन्मथसमुद्भूत - निर्मलनिष्कलङ्क-पूर्णचन्द्रोपमं तस्याः मुखचन्द्रम्। अनन्तानन्दसौन्दर्यसार-सुधासमुद्भूत - सरोजायितं चरणारविन्दम्, लावण्यामृताब्धि-सारसर्वस्वमिव तस्याः प्रत्यङ्गक्रीडासरः, कनकपङ्कज-कुड्मलायितौ स्वानन्दरसकल्पतरोर्दिव्यफलायितौ तस्याः स्तनमण्डलौ। तदुक्तम्—

क्रीडासरः कनकपङ्कजकुड्मलाय स्वानन्दपूर्ण-रसकल्पतरोः फलाय।
तस्मै नमो भुवनमोहनमोहनाय, श्रीराधिके तव नवस्तनमण्डलाय॥

( रा० सु० नि० ३ )

प्रेमानन्दरसैकसिन्धुरूपाया महाकेलि-कल्लोलमालासङ्कुलायाः सान्द्रानन्दघनानुरागविग्रहाया प्रोद्दामविद्युल्लता-कोटिकोटिज्योतिष्मत्याः श्रीराधायाः लीलापाङ्गतरङ्गैः कोटिकोटिकन्दर्पाः प्रादुर्भवन्ति।

प्रेमानन्दसुधासारसर्वस्वमूर्तेर्भगवतो हृत्स्थात् पूर्णानुराग-रससार-सुधाजलनिधेः समुद्भूताया निर्मलनिष्कलङ्क-चन्द्रस्वरूपाया वृषभानुनन्दिन्या हृदयमेव वृन्दावनम्। तत्र रसोद्रेकेण या जडिमा, सैव वनस्य जडिमा। यदुक्तम्—

गौराङ्गे म्रदिमा स्मिते मधुरिमा नेत्राञ्चले द्राघिमा,
वक्षोजे गरिमा तथैव तनिमा मध्ये गतौ मन्दिमा।
श्रोण्याञ्च प्रथिमा भ्रुवोः कुटिलिमा बिम्बाधरे शोणिमा,
श्रीराधे हृदि ते रसेन जडिमा ध्यानेऽस्तु मे गोचरः॥

मधुरोज्ज्वलरसस्य प्रेम्णो यद्धृदयं शृङ्गारकेलिकलायाश्च यत्प्राणस्वरूपं तस्य कैशोराद्भुतमाधुरीभरस्य प्रेमोल्लासमयस्य तेजसः रश्मिकणमपि ये ध्यायन्ति, त एव धन्याः। तादृशा बाह्यवेषानपेक्षा अपि राधारसनिमग्नहृदयत्वात् कृतार्था एव। तदुक्तं राधासुधानिधौ (८१)—

लिखन्ति भुजमूलतो न खलु शङ्खचक्रादिकम्,
विचित्रहरिमन्दिरं न रचयन्ति भालस्थले।
लसत्तुलसिमालिकां दधति कण्ठपीठे न वा,
गुरोर्भजनविक्रमात् क इह ते महाबुद्धयः॥ इति।

तत्सहचर्यस्तु श्रीराधायाः प्रेयांसं रतिलम्पटं प्राप्यापि राधापदरसमेव आकाङ्क्षन्ते। तदुक्तम्—

यदि स्नेहाद्राधे दिशसि रतिलाम्पट्यपदवीम्,
गतं ते स्वप्रेष्ठं तदपि मम निष्ठं शृणु यथा।
कटाक्षैरालोके स्मितसहचरैर्जातपुलकम्,
समाश्लिष्याम्युच्चैरथ च रसये त्वत्पदरसम्॥

(रा० सु० नि० ८७)

हे श्रीराधे! यदि स्नेहात् रसलाम्पट्यपदवीं गतं स्वप्रेष्ठं दिशसि तदपि ममनिष्ठं स्मितसहचरैः कटाक्षैरालोके द्रक्ष्यामि। तैर्जातपुलकमुच्चैराश्लिष्यामि। ततश्च त्वत्पादरसमेव रसये।

मानिनीं कृष्णविमुखीं विलोक्य तत्प्रियसखी परिहासमुखेन तां प्रसादयति—हे सखि, तव सदैव कृष्णः पक्षः, कृष्णं नवकुवलयम्, कृष्णसारो नीलाम्भोदः, तमालः सदैव रुचिपरमतिप्रेमास्पदं भवति कृष्णेति नाम्ना कृष्णेन रूपेण च। कृष्णा यमुनाऽपि तथैव प्रेमास्पदम्। तथापि मोहनश्याममूर्तौ कृष्णे तव कस्माद्विमुखतेति न जानीमः? एवमुक्तां प्रहसितमुखीं राधां दृष्ट्वा द्रष्टुमुत्सुका तत्सखी तत्कामनां व्यनक्ति—

कृष्णः पक्षो नवकुवलयं कृष्णसारस्तमालो
नीलाम्भोदस्तवरुचिपदं नामरूपैश्च कृष्णा।

कृष्णे कस्माच्च विमुखता मोहनश्याममूर्ता-
विस्युक्ता त्वां प्रहसितमुखीं किन्नु पश्यामि राधे ॥

( रा० सु० नि० ८८ )

श्रीविग्रहे उद्वेलितप्रणयरस-महाम्भोधिसारसर्वस्वायास्तस्या रसाम्बुधौ मीनाविव दृशौ सुधासरसि चक्रवाकाविव स्तनौ, सुरतरङ्गिणीविकसित-हेमाम्बुजमिव मुखं श्रीकृष्णस्य सुखकराणि। सान्द्रानन्द-घनानुराग-लहरी-निष्यन्दपादारविन्दायाः श्रीराधाया मङ्गलमयं नामैव श्रीकृष्णवशीकरणमन्त्रः। सर्वप्राणिपरप्रेमास्पदो हरिरपि प्रेमाश्रुपूर्णमुखो यज्जपति तन्नामामृतं ये पिबन्ति ते धन्याः। कोटि-कोटि दामिनीततिद्युति-गात्रायाः प्रवितताननन्दानन्द-च्छवि-मुखाम्बुजायाः नवविद्रुमच्छविबिम्बोष्ठ्याः सत्पल्लवच्छविकराम्बुजाया-श्चरणाम्बुजपरागरसस्तत्कृपापात्रैकलभ्यः। स्निग्धकुञ्चितनीलकेश्याः खञ्ज-नाक्ष्याः स्वरूपे प्रेमोल्लासादीनां दिव्याष्टगुणसीम्नां समवायः समुल्लसति। यस्यां च प्रेमोल्लासैकसीमा, लीलामाधुर्यैकसीमा, निजजनपरमोदारवात्सल्य-सीमा, सौख्यसीमा, रतिकलाकेलिमाधुर्यसीमा सा राधा सर्वोत्कर्षेण वर्तते—

प्रेमोल्लासैकसीमा परमरस-चमत्कार-वैचित्र्यसीमा,
सौन्दर्यस्यैकसीमा किमपि नववयो-रूप-लावण्य-सीमा।
लीलामाधुर्य-सीमा निजजनपरमोदार-वात्सल्यसीमा,
सा राधा सौख्यसीमा जयति रतिकलाकेलिमाधुर्य-सीमा ॥

( रा० सु० नि० १३० )

यस्याः पदनखमणिज्योतिरेकच्छटायाः सान्द्रप्रेमामृतरसमहासिन्धुकोटि-स्खलनं न प्राप्नोति तस्यां राधायां कृपावत्यां मुक्तिरपि तुच्छेव भाति, किमुत लौकिकश्रीः। तथा चोक्तम्—

यस्याः स्फूर्जत्पदनखमणिज्योतिरेकच्छटायाः
सान्द्रप्रेमामृत-रसमहासिन्धुकोटि-र्विलासः।
सा चेद्राधा रचयति कृपादृष्टिपातं कदाचिन्
मुक्तिस्तुच्छीभवति बहुशः प्राकृताप्राकृतश्री. ॥

( रा० सु० नि० १२६ )

यस्याः कटाक्षशरपातेन मूर्छितस्य कन्दर्पकोटिललितस्य भगवतः शिखण्डं स्खलति, दामिनी-द्युतिविनिन्दकं पीताम्बरं भ्रश्यति तस्या अपार-रससार-विलासमूर्तेः आनन्दकन्दपरमाद्भुत-सौम्यलक्ष्म्या ब्रह्मादिदेवदुर्गमगतेः वृषभानुसुतायाः कैङ्कर्यमेव तद्रहस्यज्ञाः कामयन्ते।

पूर्णानुरागरससारमूर्तेः प्रेमोल्लसद्रसविलासविकासकन्दरूपायाः श्याम-नयनचकोरपेयस्वरूपाया अद्भुतरसामृतचन्द्रिकाभिः भक्तान् तर्पयन्त्याः श्रीहरि-प्रेयस्या राधाया पादारविन्दमकरन्दरसामृतानुभूतिरेव सर्वकल्याणमूलम्।

प्रेम्णो वैचित्त्यदशायां श्यामसुन्दरे प्रेयस्याः श्रीराधायाः अङ्कस्थितेऽपि विप्रलम्भानुभूत्या 'हा मोहने'ति मधुरं प्रलापमकस्माद्विदधती श्यामानुरागमद-विह्वलमोहनाङ्गी कापि श्यामामणिर्निकुञ्जसीम्नि विजयते—

अङ्कस्थितेऽपि दयिते किमपि प्रलापं
हा मोहनेति मधुरं विदधत्यकस्मात्।
श्यामानुराग - मदविह्वल - मोहनाङ्गी
श्यामामणिर्जयति कापि निकुञ्जसीम्नि॥

(रा० सु० नि० ४६)

श्यामानुराग-स्फुरद्रोमोद्भिन्नगात्रायाः प्रेमामृतज्योतिर्मय्याः श्रीराधाया नामामृतं यैर्निपीतं तेषां सर्वानप्यपराधान् विस्मृत्य प्रेमाविष्टो हरिः सर्वस्व-मर्पयति, अथ च किं देयमेभ्य इति विमृशति। यथा—

अनुल्लिख्यानन्तानपि तदपराधान् मधुपतिः,
महाप्रेमाविष्टस्तव परमदेयं विमृशति।
तवैकं श्रीराधे गृणत इह नामामृतरसम्,
महिम्नः कः सीमां स्पृशति तव दास्यैकमनसाम्॥

(रा० सु० नि० १५४)

नित्यमन्योऽन्यसंसक्तयोः जलतरङ्गयोरिव परमानन्द-तन्माधुर्ययोरिव यद्यपि कदाचिदपि विप्रलम्भकल्पना नास्ति; तथापि कदाचिन्निमेषतो मनसोऽनवधानाद्वा भ्रमाद्वा प्रतीयमानाद् विच्छेदाभासादेव बाह्यमाभ्यन्तरञ्च कल्पाग्निकोटिज्वलितमिव भाति। तत्स्नेहानुबन्धग्रथितमिव श्यामतेजः-संवलितं गौरं महः, गौरतेजःसंपुटितं श्यामलं वा महो ज्ञेयम्। तदुक्तम्—

विच्छेदाभासमानादहह निमिषतो गात्रविस्रंसनादौ,
चञ्चत्कल्पाग्निकोटिज्वलितमिव भवेद् बाह्यमाभ्यन्तरञ्च।
गाढस्नेहानुबन्धग्रथितमिव तयोरद्भुतप्रेममूर्त्योः,
श्रीराधा माधवाख्यं परमिव मधुरं तद्द्वयं धाम जाने॥

(रा० सु० नि० १७३)

वस्तुतस्तु—राधाया माधुर्यं माधवो वेत्ति, माधवस्य च माधुर्यातिशयं राधैव वेत्ति, श्रीमद्वृन्दावनधाममहिम्ना तद्युगलमाधुर्यमपि श्रीराधासहचरीणा-

मुपलभ्यते । श्रीश्यामसुन्दरस्य परमानन्दसुधासारसर्वस्वमये स्वरूपसिन्धौ अनङ्गतरङ्गिणी रसतरङ्गिणी श्रीश्यामा सङ्गता ।

श्रीवृन्दाया वनं यौवनमेव वृन्दावनम् । तत्र सकलगुणवृन्दस्याऽवनम् । श्रीश्यामापि वृन्दाटवीव मधुपतेर्मनोहारिणी । तत्र रोमाली यमुनायते । अधरच्छविः बन्धूकपुष्पायते । सर्वाङ्गच्छविः चम्पकायते । शोभना नाभिः सरोवरायते । वक्षोजः स्तवकायते । भुजयुगली लतायते । भूषणध्वनिः मधुपारावायते । हरिप्रीतिरेव मूर्तिमती राधारससिन्धोः साररूपदिव वैदग्धीनां हृदयमिव या च श्रीः प्रेमघनाकृतेर्भगवतः प्रेमोल्लासेन क्षणं सीत्करोति, क्षणं वेपते, क्षणं 'श्याम-श्यामे'त्यमुमभिलपन्ती रोमाञ्चति, सा सदानन्दा राधा प्रोद्दामरसदा विजयते । यस्याः पदनखज्योत्स्नाभर-स्नापितस्वान्तानां कापि सरसा भक्तिरुदेति, सा गोपेन्द्रनन्दन-मनश्चोरी किशोरी यत्परं श्रुतिशिखररहस्यं दास्य तद् दद्यात् । यथा—

यस्याः प्रेमघनाकृतेः पदनखज्योत्स्नाभरस्नापित-
स्वान्तानां समुदेति कापि सरसा भक्तिश्चमत्कारिणी ।
सा मे गोकुलभूपनन्दन-मनश्चोरी किशोरी कदा
दास्यं दास्यति सर्ववेदशिरसां यत्तद्रहस्यं परम् ॥

( रा० सु० नि० २०४ )

त्वं भावयोग-परिभावित-हृत्सरोजे
आस्ते श्रुतेक्षितपथो ननु नाथ पुंसाम् ।
यद्यद्धिया त उरगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥

हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥

भावयोगपरिष्कृते हृत्सरोजे भगवान् विराजते । यः पूर्वं श्रूयते भक्तजन-हृदयोद्भूतैः रसोद्रेक-जनितैः रसपरिणामरूप-शब्दब्रह्मात्मना अभिव्यक्तैर्वचोभिः पश्चात् तद्दर्शनोत्कण्ठितैर्नेत्रैः पन्थाः ईक्षितः प्रतीक्षितो यस्य सः । न केवलं नेत्रैर्भगवानीक्ष्यते, अपि तु भगवद्भावभरितया रसात्मिकया धिया ते भावुका यथैव भगवद्रूपं भावयन्ति, तथैव भगवद्रूपव्यञ्जनं भवति ।

किं बहुना, भक्तजनैः स्वहृदि भाव्यमानो निखिल-रसामृतसिन्धु-बिन्दुरेव भावनया परिवर्धमानः सिन्धुः सम्पद्यते । स च उद्वेलितस्तदात्ममनःप्राणेन्द्रिय-देहान् आपूर्य संप्लाव्य समुच्छलितः मुखे समागत्य अष्टस्थानानुषक्त-ऽऽग्नेय-वागिन्द्रियसंसृष्टः दिव्यशब्दब्रह्मात्मना व्यज्यते, शोकः श्लोकत्वमागतः

इविवत् । स एव च निरावरणकर्णकुहरैः अन्तःकरणात्मगुहामाविश्य तत्तादात्म्यापन्न-तदर्थ भूत-निखिलरसामृतसिन्धुः श्रीराधा-माधवरूपेण व्यज्यते । तेन तद्रसमयैः शब्दैरेव रसमयो भगवान् हृदि व्यज्यते । वेदान्तरीत्याऽपि महावाक्यैरेव निरावरणं ब्रह्म हृदि व्यज्यते ।

अत एव पूर्वं शब्दमयैरेव नयनैः प्रभुस्वरूपं दृश्यते । अत एव रसिकैरुच्यते—श्रोत्रेण सौन्दर्यं दृश्यते, नेत्रैश्च श्रूयते। श्रोत्रेषु तच्चर्चायां प्रविष्टायां सैव प्राणरूपा सञ्जाता। यदा कर्णमागतां तामदर्शं तदा कर्णावेव नेत्रतामुपगतौ। तदारभ्य श्रोत्राभ्यां रूपं श्रूयते, वाचा च दृश्यते । तच्चर्चायां रूपेऽवगते नेत्र-श्रोत्रयोः सम्बन्धः संवृत्तः। श्रोत्रेण रूपं मनसे समर्पितम्। मनश्च रूपवत् नेत्रयोर्निविष्टम् । रूपे संन्निविष्टे नयनं रूपमयं सम्पन्नम्। आनन्दमग्नं सन्नयनं रूपवार्तायां लीनम् । मनसा पृष्टम्—'यस्य वार्ता त्वया क्रियते, तत्कास्ति ?' नेत्रेणोक्तम्—'नाहं वेद्मि, प्रत्यभिज्ञानमन्तरा किं वच्मि ? गच्छामः प्रेम्णः सन्निधौ । गत्वा च पृच्छामः ।' तत्र प्राप्तेषु तेषु प्रेम्णा मनस्तु रूपसन्निधौ प्रेषितम् । नेत्रं तु निराशं सद्रोदितुमारब्धम्। येन रूपचर्चा कृता तन्मित्रं न मिलति, अहर्निशं रोदनरतमनिद्रं सीदति । प्रेममेघस्य गर्जनेन विद्युद् भूत्वा भक्तवाणी जनकल्याणाय प्रवर्तते । तेन भक्तवाणी प्रियतमस्य भगवतः सविस्तरं पत्रम् , यत्पठित्वा प्रियतमसमीपे गन्तुं शक्नोति । अन्ये भगवन्तं भजन्ति । सख्यस्तु दिव्यदम्पत्योः प्रीतिमेव भजन्ति । भजनीयस्य प्रेम्णः परिज्ञानाय दिव्यदम्पत्योः प्रेमरीतिरपि ज्ञेया भवति। तच्छ्रवणेन हृदयं सरसायते । तेन आनन्दकोलाहलपर्णः कौतुकनिपुणः सुखनिधिः स्नेहो भक्तवाक्यैर्विज्ञायते ।

भगवद्वाक्यरूपा वेदास्तच्चरणाश्रिता आर्षाः सद्ग्रन्था रसिकान् भगवतः पार्श्वमुपनेतुमागताः शिविकायिताः ।

श्यामलतरुणतमालमाश्लिष्टा रूपवल्लीव माधवमाश्लिष्य श्रीराधा रसाविष्टा। तयोस्तां दशामालोक्य रती रतिपतिश्च विसिस्मिये। तयोर्नवनवायमाना प्रीतिरपि प्रतिक्षणं वर्धते । आसक्तिरपि स्वात्मानं विस्मृत्य रसमग्ना भवति । प्रियस्तु तस्याः सौकुमार्यातिशयं वीक्ष्य मानसैरपि करैः स्प्रष्टुं बिभेति । स्वप्राणैरातपत्रं विदधाति । तस्याः स्वल्पसान्निध्येनापि विपिनलतावीरुधः तप्तकनकायन्ते । तस्याः सहजं दृष्ट्याकुञ्चनं सस्मितमाक्षणं च वीक्ष्य प्रेयसः काचिदद्भुतैव गतिर्जायते । प्रेयस्याः सौन्दर्यमयानि अङ्गोपाङ्गानि निभालयत् छविमहार्णवे तन्मनो मज्जति । यस्याः विशालमुज्ज्वलं कज्जलाञ्चितं नयनमालोक्य प्रियस्य हृदयं शीतति । यद्वीक्ष्य खञ्जनचापल्यं कञ्जस्य आरुण्यं मुक्ताया लावण्यं च जिह्रेति । यच्च सरसं सलज्जं प्रेम्णं चञ्चमपूलमञ्चलं

वरुद्धं नयनं यत्राभिमुखं वीक्षते तत्रैव सौन्दर्यवृष्टिर्जायते। यस्याः अङ्गोपाङ्गेषु प्रतिरोमसु रूपकान्तिलावण्यातिशया देदीप्यन्ते। यन्महामोहनं रूपमालोक्य भुवनमोहनस्य साक्षान्मन्मथमन्मथस्य मोहनशक्तिरपि मोमुह्यते। यस्याः मोदमयं माधुर्यं मदनमदमादकम्, दशनकान्त्या दामिनीद्युतिर्लज्जते, यस्याः नखमणिज्योत्स्ना सर्वसौन्दर्यातिशायिनी, यस्या गौराङ्ग्याश्छविसुधाकणेन संतृनाश्छवितया आप्यायिता भवन्ति।

क्वचित्तु प्रियतमस्य विलक्षणां प्रेमगतिं वीक्ष्य देहगतिं विस्मृत्य वाम्यमपहाय दाक्षिण्यमवलम्ब्य अकस्मात् प्रेमाश्रुमुखीभूत्वा 'प्रियतम-प्राणनाथे-' त्याभाष्य प्रेयांसमुरोजयोराश्लिष्य मुखचन्द्रं निर्वर्ण्य परिचुम्ब्य आपीय दशनैरधरं संदश्य वैवश्यमुपगच्छति। सोऽद्भुतः प्रेमप्रवाहः सर्वा आप्लाव्य व्याप्तः। तेन काश्चित् चित्रायिताः, काश्चिच्च मोहिताः। कस्याश्चित् नयनाभ्यां विमलाश्रुधाराः प्रवृत्ताः। राधा-माधवौ च तास्तथाभूता वीक्ष्य करुणार्द्रौ। तासां हृदयेषु विलक्षणा प्रेमधाराः सञ्चार्य अगाधप्रेमसिन्धोरुद्दध्रतुः। परितः स्थिताः रसरङ्गपूरितास्तृट्परीता चकोर्यश्चन्द्रमिव तद्युगलं परिवव्रुः। एवं प्रतिक्षणं नवनवाः प्रेम तरङ्गा राजन्ते। यथा—

प्रेयसः प्रेमपूरेण विह्वला विस्मृतक्रमा।
विस्मृतात्मगतिर्व्यास-मोहाक्लिन्नमुखी प्रिया॥
प्रेष्ठ प्रेष्ठेति संभाष्य स्तनाभ्यामालिलिङ्ग तम्।
परिचुम्ब्य मुखं तस्य दशनैरधरं तथा॥
मधुरं संददंशाऽऽशु प्रेमपूरितमानसा।
तां तथाभावमापन्नां दृष्ट्वा विह्वलितास्तदा॥
सुहृदो रसकल्लोल-समासक्ता भृशं मुदा।
काश्चिच्चित्रार्पिताः काश्चिन्निपेतुर्नेदविह्वलाः।
रुरुदुः सुस्वरं काश्चित् प्रलेपुरार्तवद्वचः॥ इति।

तथा हंस्य इव तत्कामकला मुक्ताश्चिन्वन्ति। राधामाधवयोरिच्छाशक्तिरूपा एव ताः। तेन तदिच्छापराधीनावेव तौ। सर्वलीलाप्रयोजिकास्ता एव तत्तत्क्रीडानुरूपान् सर्वभावान् सृजन्ति। श्रीवृन्दावन-धाम्नि शिशिरग्रीष्मयोः सन्धिरूपो वसन्तः सदैव राजते। तत्रत्यानि जल-स्थला-ऽऽकाशादीनि वासन्तोल्लासैरुल्लसितानि। कामोऽपि कुञ्जमन्दिराणि स्वहस्तारविन्देन मार्जयति। रात्रौ सुखमयान् विलासाननुभूय निद्राकषायिते नयने उन्मील्य दिव्यानुरागानुरञ्जितौ तौ परिवार्य सखीगणा विविधैः वादित्र-गीतादिभिराराधयन्ति। वंशी स्वनो गौरीरागालापाय प्रेरयति। वासन्तगानपानेन वा एव तौ वासन्त-

क्रीडायां प्रवर्तयन्ति । सर्वदा च तास्तद्धितनिरताः, तेनैव अवहिताः सत्यस्तौ परिचरन्ति । अन्यथा यत्र यौवनमदाः स्नेहमदाः रसमदाश्चोन्मदाः प्रनृत्यन्ति तत्र मनोबुद्ध्यादीनामस्तित्वमपि लुप्यति । तदा तासां निरतिशयप्रेमास्पदौ यत्र प्रेमविह्वलौ स्मृतिहीनौ सम्पद्येते, तत्रापि सावधानाः शृङ्गाररसधाराः प्रवाहयन्ति । प्रेयस्या अधरं प्रियतमस्य अधरेण योजयन्ति, प्रियतमस्य करपङ्कजं प्रेयस्या उरोजे स्थापयन्ति । श्यामल-तरुण-तमालसंश्लिष्ट-कनकलतेव श्रीमाधवाश्लिष्टा वृषभानुकिशोरी शोभते । तस्या स्वर्णोपमान्यङ्गानि यौवनञ्च श्यामरूपस्पर्शनेन साफल्यमश्नुवन्ति ।

राधामाधवयोश्छायेव सख्यः । द्वयोर्नेत्रयोरेका दृष्टिरिव तदुपपत्तिः । अहोरात्रयोः सन्धौ सन्ध्येव द्वयोः भोग्यभोक्तृप्रीत्योः सन्धिरूपास्ताः प्रेरकप्रेम-प्रतिकृतिरूपाः, राधामाधवयोः परस्पररतिरूपत्वात् स्वभावत एव तास्तद्रति-मत्यः । तत्प्रेमबन्धनमेव तत्प्रेमालम्बनम् । यथोक्तं कैश्चित्—

अहो चित्रमहो चित्रं वन्दे तत्प्रेमबन्धनम् ।
यद्बद्धं मुक्तिदं मुक्तं ब्रह्मक्रीडामृगीकृतम् ॥ इति ।

राधामाधवोपभोग्ये प्रेम्णि अप्राकृतकामरूपा नियमा अपि भवन्ति । आसां तु प्रीतयः प्रेममात्रसंसर्गिण्यः । तेन कामस्पर्शशून्य-शुद्धप्रेममय्यो राधा-माधवप्रीत्यपेक्षयापि विशिष्टाः ।

यथा स्वल्पमपि स्वर्णकणमालोक्य कनकमयसुमेरुरनुमातुं शक्यते, तथैव महानुभावैरुपवर्णितं सौन्दर्यमधीत्य सहजं सौन्दर्यं श्रीराधायाः ज्ञातुं शक्यते । यावत्यो द्युतयः कान्तयश्च वर्तन्ते, ताः सर्वा अपि श्रीकीर्तिकुमार्या दिव्याङ्गकान्तिमालोक्य विलज्जन्ते । सौन्दर्य-माधुर्यादीनि साञ्जलिबन्धानि तस्याः सेवायां समुपस्थितानि । गुणाः कलाश्च व्यजन-चामरादिहस्तास्तां परिचरन्ति । तामालोक्य चातुर्यं चित्रीयते । चापल्यं पङ्गुतामुपयाति । मृदुता तत्पादारविन्दं स्प्रष्टुं सङ्कुचति । तस्याः पदनखमणि-प्रकाशमालोक्य भानु-कोटयोऽपि लघुत्वमुपयान्ति ।

श्रीराधा-माधवयोः प्रेमविषय-विषयिणोः योग्यभोक्त्रोः शुद्धप्रेमसौन्दर्य-रूपिणो मनागपि भेदो नास्त्येव, तथापि तत्रानेकाः कल्पनाः समञ्जसाः । तदुक्तम्—

प्रेम्णः सन्मधुरोज्ज्वलस्य हृदयं शृङ्गारलीलाकला-
वैचित्री परमावधिर्भगवतः पूज्यैव कापीशता ।
ईशानी च शची महासुखतनुः शक्तिः स्वतन्त्रा परा
श्रीवृन्दावननाथ-पट्टमहिषी राधैव सेव्या मम ॥

( रा० सु० नि० ७८ ) इति ।

प्राधान्यमेतदुभयोरभेदेऽप्युपपद्यते । यथा—

महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि ।
न वाऽस्तु भेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥ (१११)

श्रीनाथे जानकीनाथे विभेदो नास्ति कश्चन ।
तथापि मम सर्वस्वं रामः कमललोचनः ॥ (१४३)

'सखि मामकं मनः सुस्मितेन नन्दनन्दनेन हृतमेव । अहं तु स्वमुक्तावलि-गुम्फनदत्तमना आसम् । तत्र शर्करा निक्षिप्ता ।' मोहनेन सखिचित्तमाहृतम्, तन्मनस्का विस्मृतभोजन-पानादिव्यवहारा सा जाता ।

विरहसंयोगावपि सूक्ष्मतमे सर्वोत्कृष्टे प्रेम्णि सूक्ष्मतमौ । तत्र कालव्यव-धानस्यासह्यत्वात् विरहसंयोगौ सहैव तिष्ठतः, येन दिव्यदम्पत्योः सहैव विरह-संयोगावनुभूयेते । तेन विरहस्य व्याकुलता अतृप्तिश्च, संयोगस्य तृप्तिरुल्लासश्च सहैवोपभुज्यन्ते । प्रकटलीलयां क्रमेण तावनुभूयेते, तेन तदविच्छिन्नता निर्वोढुं न शक्यते । नित्यनिकुञ्जलीलायां तु प्रेम-सन्दाकिनी विरहसंयोगौ तटौ सर्वदा स्पृशन्त्येव प्रवहति । प्रेममहार्णवस्य तरङ्गा इव अविच्छिन्नतया तास्ता लीलाः प्रादुर्भवन्ति । यथा—

गौरश्यामशरीरौ तौ चिदानन्दौ परात्परौ ।
विजह्रतुर्निकुञ्जे हि सुखपुञ्जे सुखावहे ॥
मन्मथाहवसंरब्धौ विपुलानन्दवर्षिणौ ।
भूषणारावसंघुष्टौ युयुधाते परस्परम् ॥
परस्पराङ्ग - संस्पर्श - कोटिभाव - समन्वितौ ।
प्रेमाहव - परिश्रान्त - शिथिलायत - लोचना ॥
प्रेयसोऽङ्कसमाविष्टा सालसा-ऽऽतङ्कवर्जिता ।
प्रियश्च लालनव्याजमुपाश्रित्य मुदा तदा ॥
नीविनाभिकुचान् स्प्रष्टुमातुरः प्रेमविह्वलः ।
समालोक्याद्भुतं रूपं शिथिलो जातवेपथुः ॥
तं तथाभावमापन्नं सीदन्तं प्रेमसम्पदा ।
धैर्यमुत्सृज्य मानिन्या प्रदत्तं दिव्याधरामृतम् ॥
दिव्यं तन्मादकं स्वादु मधुरञ्चाऽमृतातिगम् ।
प्रियोऽप्यापीय सहसा भावाविष्टो बभूव ह ॥
प्रेयसीं परमां प्रीत्या दैन्यभावमुपागतः ।
उवाच माधवः स्निग्धां प्रिये शृणु परं वचः ॥

अद्भुतं भुजयोर्मध्यं रसालमधुरं मधु।
मयाऽद्यैव हि संदष्टं कृपया वितरामृतम्॥ इति।

मधुरातिमधुरस्यापि वस्तुन उपलब्धौ यावत्समुत्कटा पिपासा अतृप्ता बुभुक्षा च न भवति, तावत् तन्माधुर्यरसानुभूतिर्न जायते। परमविप्रयोग-दशायाम् उत्कटायां बुभुक्षायामतृप्ततृष्णायाञ्च सत्यामपि तन्मधुरं वस्तु विप्रकृष्टं व्यवहितञ्च भवति। तेन तदानीमपि तन्माधुर्यस्य यथावदनुभूतिर्न भवत्येव। तद्वदेव प्रेष्ठप्रेयस्योः नित्यमिलनदशायां नित्यविप्रलम्भदशायाञ्च यथाव-दानन्दानुभूतिर्न भवति। तेन नित्यमिलनदशायामपि उत्कटपिपासा अतृप्त-तृष्णा यदा भवेत्तदैव शुद्धरसानुभूतिः।

यो विप्रयोगे प्राणान् त्यजति, स प्रेमव्यथां नानुभवत्येव। यः प्रिय-वियोगेऽपि शरीरं रक्षित्वा वेदनां सहते, स भीषणामग्निज्वालां स्वशिरस्या-नीयापि जीवति, तदैव विरह-प्रेम-पीडामनुभवितुं पारयति। प्राणपरित्यागे तु प्रियस्य सविधे मर्मपूर्णां प्रेमाभिव्यक्तिं कर्तुं न पारयत्येव। यश्च पीडां जानाति, स एव वज्रतनुर्भूत्वा विप्रलम्भदुःखं सोढुं पारयति। यश्च विप्र-लम्भे सत्येव म्रियते, मर्मव्यथां न जानात्येव।

केचित्तु—कैतवरहितं प्रेम न तिष्ठति मानुषे लोके।
यदि भवति कस्य विरहः सति विरहे को जीवति॥

इतिरीत्या सति विरहे जीवनमेव प्रेम्णो लाघवं मन्यन्ते। परं सम्प्रयोगेऽपि विरह इव उत्कण्ठातिशयोऽस्य दिव्यदम्पत्योप्रेम्णः प्राणः सम्प्रयोगेऽपि अतृप्त-तृष्णोत्कटबुभुक्षा च न क्षीयते।

किन्तु प्रतिक्षणं नित्यनूतनता अतृप्ततृष्णा च महाप्रेमार्णवावगाहनेऽपि जागर्त्येव। अत एव सम्प्रयोगेऽपि न विश्वसिति। यद्यपि प्रियस्य मुखचन्द्रं अवितृप्ताभ्यामनिमिषद्भ्यां दृग्भ्यां पिबति, हृदयञ्चानीय दुर्लभनिधिमिव गोपायति; तथापि विरहविकलमतिर्न विश्वसिति। निर्निमेषं पश्यन्त्यपि चकितं यथा स्यात्तथा विरहभीतेव भवति। स्वप्ने वा जागरे वा सत्यमेव किं वा प्रियं पश्यामीति न प्रत्येति। तदुक्तम्—

आभीरेन्द्रसुते स्फुरत्यपि पुरस्तीव्रानुरागोत्थया
विश्लेषज्वरसम्पदा विवशधीरत्यन्तमुद्घूर्णिता।
कान्तं मे सखि दर्शयेति दशनैरुद्गूर्ण-शस्याङ्कुरा
राधा हन्त तथा व्यचेष्टत यतः कृष्णोऽप्यभूद्विस्मितः॥

सख्यस्तु तत्सुखसुखित्वाभिलाषया परीताः स्वसुखवासनाशून्याः सेवा-परायणा भवन्ति। अगाधभावपूर्णास्तयोः परितः भ्राम्यन्ति। नित्यनूत्नास्तयोः

शृङ्गाररचनास्तदुपकरणानि चिन्वन्त्योऽविश्रमं श्राम्यन्त्योऽपि न श्राम्यन्ति। त्रैलोक्यसुखसारं तृणीकृत्य अवितृप्तदृशा तावेव पश्यन्त्यः सर्वत्र वैरस्यमनुभवन्ति। तावेव माधुर्यभावेन लालयन्त्यो मित्रवत् पुत्रवत् पतिवदात्मवच्च तौ परिचरन्ति।

निशायामुन्मद-प्रेमविलासमासेव्य शयनकुञ्जे नूतनकोमलकिसलयशयने शयानौ संवीक्ष्य सखीवृन्दप्रेरिता अपि ललितादयो वात्सल्यरसपूरिताः प्रबोधवेलायामपि प्रबोधनाय विलम्बन्ते। काश्चिदरुणोदयमालोक्य युगलशृङ्गारलीलां तदाविष्टौ सौन्दर्यसारसर्वस्वौ तदीयस्मितसुधार्णवञ्चावगाहितुं तदुद्बोधनं कामयन्ते। तदन्तरङ्गास्तु तद्वारयन्ति—'अयि सख्यः! सुकुमारतमौ प्रेष्ठाविदानीमेव तु प्रसुप्तौ, तदलमुद्बोधनेन। मरुतो मन्दं वहन्तु। रवितनयाऽपि प्रशान्तप्रवाहा भवतु। पक्षिणोऽपि मौनमातिष्ठन्तु। रसिकोत्तंसौ यावदुन्निद्रौ न स्यातां तावत् कमलान्यपि मुकुलितान्येव तिष्ठन्तु। नक्षत्राण्यपि अक्षीणज्योतींषि भवन्तु। सुप्रभातसमयोऽपि तूष्णीं निर्गच्छतु।' यथा—

कमलान्यविकाशीनि तारकाश्च सुभास्वराः।
यावदुन्निद्रितौ स्यातां तावद्भातु विभावरी॥ इति।

छविसार-सरोवरे वृन्दाविपिने हंसशावकाविव गौर-श्यामलौ दम्पती विविधक्रीडाकौतुकिनौ मोदेते। सख्यस्तु नेत्राञ्जलिभिस्तल्लोलामृतं पिबन्ति। ताः कदाचिद्वात्सल्यभावेन, कदाचिच्च वात्सल्यमिश्रितेन उज्ज्वलेन रसेन सेवन्ते। स्वीयं मनस्तद्युगलाय दत्त्वा तदीयं मनो गृहीत्वा सौन्दर्यामृतरसास्वादे निमज्जन्ति। सम्भ्रमशून्येन सख्येन च मानमुन्मोक्तुं प्रेरयन्ति। मानिन्यास्तस्याः वैदग्ध्यपूर्णैर्वचोभिः माधवस्य रूपसौन्दर्यं परमां प्रीतिञ्चोपवर्ण्य निशावसानं तूर्णमभ्येतीति प्रबोधयन्ति। सा च सुमुखी मानमुत्सृज्य प्रेयांसमुपगूह्य सुखसिन्धौ क्रीडति। राधामाधव-युगलप्रेम-माधुर्यावलम्बेन प्रेमवत्यस्तु ताः उज्ज्वलरसपरिप्लुत-सख्यभाववत्य एव, युगल-पारस्परिकरतिरूपत्वात्। तेन सखीभावेनैव तस्यास्वादः। श्यामा-श्यामयोः सौभाग्येनैव ताः सौभाग्यवत्यः। तयोः सुरङ्गोऽनुराग एव तासां सौभाग्यसिन्दूरम्। तावेव तासां प्राणधनम्। तयोः कृपैव तासां सुखसाधनम्। तौ च तासां रुचिमनुसृत्यैव तदनुकूलौ विहरतः। वृन्दावनचन्द्रौ तावेव तासां जीवनम्।

माधवस्य चञ्चलो मनोमिलिन्दः कुचकमलकुड्मले आससञ्ज। प्रेयस्याः सौकुमार्यातिशयं दृष्ट्वा म्रदिमाधिष्ठात्री महालक्ष्मीरपि कोमलतमैः स्वकरकमलैरपि तत्स्प्रष्टुं सङ्कुचति। दृष्ट्यापि तत्स्पर्शनेन भस्माशङ्क्य द्रष्टुमपि सङ्कुचति। शिरसि सिन्दूराञ्चितसीमन्तसौभाग्येन सार्धं दिव्यपुष्पं सानु-

रागं सौभाग्यच्छत्रमिव राजते। अम्लान-पङ्कजामाला दिव्यहीरकावल्यश्च नानाविधैर्मणिभी रूपसरोवरेऽनङ्गतरङ्गा इव प्रकाशन्ते। गम्भीरनाभि-परिसरे रोमावलयः सरोजे शृङ्गाररेखा इव परिलसन्ति। भ्रुवोः कुङ्कमबिन्दुः शृङ्गारभवनेऽनुराग इव राजते। सौभाग्यपूर्ण-सुरङ्गवसनं प्रियानुराग इव राजते। तत्रैव च रसपतिः शृङ्गारप्रवाह इव द्रवीभूत आनन्द इव कालिन्दी-प्रवाहः पूर्णानुरागः प्रवाहायते। विविधविहङ्गमा मधुरातिमधुरैर्गतिताला-दिभिः द्रुमारूढाः तानतरङ्गैर्गायमाना रागिण्य इव विलसन्ति। यथा—

मधुरैर्मधुरारावैर्निनदन्तो विहङ्गमाः।
गायमानास्तु रागिण्यो द्रुमारूढा इव स्वयम्॥

शृङ्गाररससारसर्वस्वरूपाया माधुर्यातिशयं वर्णयितुं कः पारयेत? यस्याः समीपे शोभैव दास्यं करोति। विविधानां गुणानां कलानाञ्चाधिष्ठात्र्यो महाशक्तयः चामर-व्यजनादिकं धारयन्त्यः परिचरन्ति। यस्याः गौरकान्ति द्युतयः सेवन्ते, रतयश्च निर्माञ्छयन्ति। उज्ज्वलता निकुञ्जं मार्ष्टि। स्वच्छ-तैव शय्यां रचयति। यां वीक्ष्य चतुरताऽपि जिह्रेति। यस्या रागमाकर्ण्य रागिण्योऽप्यनुरज्जन्ति। यस्याः पादारविन्दमार्दवं वीक्ष्य मृदुताया अधिष्ठात्री महाशक्तिरपि स्प्रष्टुं सङ्कुचति। या च नेत्रपुत्तलिकातोऽपि सौकुमार्यातिशयं प्रेमास्पदत्वञ्च भजति। यस्या वीक्षणेन निखिलरसामृतमूर्तेः माधवस्यापि सुखातिशयो जायते।

माधुर्यकुञ्जेषु मोहमय्यां शय्यायां लोकोत्तर - रूप-द्युति-मोदपूर्णौ हाव-भाव-चतुरौ लोकोत्तरौ दिव्यदम्पती विराजेते। प्रेमोल्लासमये श्यामघने महाभावोल्लासमयी दामिनीव माधवस्याङ्के राधा विराजते। तयोरङ्गोपाङ्ग-भूषणानि शोभातिशयं गोपायितुं रसातिशयं व्यञ्जयितुमुपयुज्यन्ते। यथा— नासापुटवीक्षणेनैव प्रेयान् विह्वलो भवति इति गोपायितुं नासाभरण-धारणम्। प्रत्यङ्गोच्छलदुज्ज्वलामृतमयलावण्यदीप्तिं सह ससुस्मितेक्षणञ्च वीक्ष्य प्रतिक्षणं मोमुह्यते माधवः। तेनैव विविधभूषणैः सौन्दर्य-माधुर्य-लावण्यसारमयस्य रूपस्य गोपनम्।

श्रमजलकणाः छविमुक्ता इव विराजन्ते। सुखसिन्धोः कल्लोला इव रति-तरङ्गा विलसन्ति। यद्वा—परमानन्द-मानससरसि छविमणी हंसाविव परमानन्द-वर्षिणौ प्रियस्य कपोलौ नयने च परिचुम्ब्य, अङ्गालिङ्गनं विधाय, अधरामृत-दानेन मदनतमालमिव सिञ्चति। तस्मादेव अगाधसुरत-रससुधासिन्धुः उद्वे-ल्लितः संवर्धते। तत्रैव ह्रीपट्टमपहाय दिव्यदम्पती निमज्जतः। तत्रापि प्रेम-महामेघोऽहर्निशं रसविनोदं वर्षति। ततस्तान् सर्वान् सेतून् विदार्य स्नेहजल-

प्रवाहस्तौ सम्प्लाव्य सुखयति। तस्या अङ्गोपाङ्गानि प्रियेण मृदुलकनकवल्लयः तमालेनेव संसज्जन्ते। नयनदीपं प्रेमघृतेन परिपूर्य हितहस्तेन प्रियं नीराजयति।

श्रीमद्वृन्दावनं ध्यायेन्नानाद्रुमलताश्रयम्।
विचित्र-पत्रिनिवहं मुखरीकृत-दिङ्मुखम्॥
प्रियां दयितसंयुक्तां दयितं प्रियया युतम्।
तत्सङ्गैक-जीवातु-माळिन्यूहञ्च संस्मरेत्॥
यौ दर्श स्पर्शना-घ्राण-श्रवणेषु च तत्परौ।
परस्पर-तदितर-व्यवहार-वियोगिनौ॥
नित्यां स्वारसिकीं लीलां मनसा संस्मरेत् प्रभोः।
शय्यारोहणतः पूर्वां परां शय्यावरोहणात्॥ इति।

ध्यानपरायणो वनविहरण-जलकेलि-कन्दुकक्रीडा-दानलीला-रासलीलादिकञ्च भावनामय्यां सेवायां भावयेत्। राधामाधवयोः सौन्दर्यामृतबिन्दुमापीय तृणवज्जगत् त्यजति। तल्लावण्यामृतनुरक्तो विस्मृतदेहो भवति। भावनामृतसिद्ध्या भाव्यमानं सर्वं साक्षात्करोति। भावसिद्धैरिन्द्रियैरन्तःकरणैश्च तदीयसौन्दर्यं पश्यति। वचनामृतं शृणोति। सौगन्ध्यं जिघ्रति। रसमयीं परिचर्यां वितनोति। संसारमनालोच्य प्रेमोल्लासमयीं लीलापरम्परामेवानुभवति। परं प्रेममार्गप्रवेशोऽतीव दुर्लभः। यो देहेन्द्रियमनांसि स्नेहादितापैः कथित्वा शमेन संशमय्य विवेक-गालिन्या (चालन्या) गालयति स तत्र प्रवेष्टुमर्हति।

नित्यविहारभावनया परमानन्दोल्लासे प्रवेशो भवति। ततश्च हृदयग्रन्थिभेदः सर्वसंशयच्छेदश्च जायते। क्रियाश्च सर्वा लोकबाह्या भवन्ति। तस्य च शरीरमुत्पुलकितं नयनं चानन्दाश्रुपूर्णं भवति। कचिद् गायति, कचिद् रोदिति, कचिद्धसति, श्यामा-श्यामौ नेत्राभ्यामापिबन्निव पश्यति। अभङ्गं यशो गायति। रहस्यलीलारसमपि नेत्राञ्जलिभिः पिबति। नामामृतपानैः पूर्णतमस्य पुरुषोत्तमस्य अभिव्यक्तिः, अभिव्यक्तस्य स्थापनं च सम्पद्यते। अनामरूपस्य भगवतो गाढस्नेहानुबन्धो नामरूपाभ्यामेव सम्पद्यते। प्रेमप्राखर्यमनुवर्धते नामरूप-गौरवम्। नित्यप्रेममयत्वात् तन्नामरूपे भगवत्प्रेमाधाररूपे अविरत-नाम-जप-कीर्तनप्रभावादिन्द्रियाणि मनांसि च नाममयान्येव भवन्ति। समस्तविषयस्फुरणानि उपरतानि भवन्ति। बहिरन्तश्च नामैव संस्फुरति। तदैव हृन्नाम्नोः ऐक्यमापद्यते। तदैव नाममाहात्म्यं व्यज्यते। तदानीमेव भगवद्धामधाम्यादिकं व्यज्यते।

यदा श्वासैर्नाम्नस्तादात्म्यं जायते, देहेन्द्रियमनस्सु च नामतादात्म्यं जायते, वैखर्यां नामाभ्यासात् सर्वत्र मध्यमायां पश्यन्त्यां परायाञ्च वाचि नामैव व्याप्नोति। तदानीं स्वतनावेव धामधाम्यादिकं प्रादुर्भवति। तदानीं नामप्रभावेणैव प्रेमैव भूत्वा प्रेमसौन्दर्यमयौ दिव्यदम्पती सेवते। तदा स्वयमेव वृन्दावनमृदुभूमिर्भूत्वा दम्पत्योश्चरणतलं चुम्बति। कालिन्दी भूत्वा तयोर्ललितान्यङ्गानि संस्पृशति, स्नपयति, सुखयति शीतलयति च। स्वयमेव जलजानि स्थलजानि विविधानि कुसुमानि भूत्वा पुष्यति। स्वयमेव शीतलः सुरभिगन्धो भूत्वा दिव्यदम्पती मोदयति। विविधाम्बराणि भूत्वा प्रत्यङ्गानि संश्लिष्यति। अनिलो भूत्वा तानि खेलयति। स्वयमेव प्रेमप्राबल्यात् प्रफुल्लित-लतावल्ल्यो भूत्वा कुञ्जचयमावेष्टयति।

तत्रैव सुललित-पुष्प-शय्या भूत्वा दम्पत्यो रसक्रीडां वितनोति। तत्र रसोद्रिक्तौ प्रियतमौ क्रीडतः। प्रेमरसात्मकः स्वयमेव तयोः तनुमनःप्राणात्मानः स्वयमेव कामकलाः, स्वयमेव लावण्यम्, स्वयमेव रसो रसोद्रेकश्च, स्वयमेव प्रणयकोपो भृकुटी-विजृम्भणञ्च, स्वयमेव माधुर्यं स्मितञ्च, स्वयमेव नीवीबन्धोन्मोचनम्, स्वयमेव गौरश्यामयोः कलहः, स्वयमेव च तन्मुक्तक्रीडाप्रतिक्षणवैवश्यं प्रतिक्षणं चैतन्यम्, स्वयमेव पिपासा स्वयञ्च पानीयम्, स्वयमेव दम्पत्योः मन्त्रणम्, स्वयं श्रमजलकणाः, स्वयमेव तत्प्रोञ्छनं व्यजनचालनं तदुद्भूत-समीरश्च, स्वयमेव नखक्षता-ऽधर-दशनक्षतादयः, स्वयमेव चुम्बनालिङ्गन-भुजपाशबन्धनादयः, स्वयमेव कुसुमावलिस्खलन-कुन्तल-कपोल-प्रावरणादिकं तेन तेन विविधरूपेण आत्मानं विपरिणमय्य तत्तल्लीलोपकरणं सम्पद्यते।

आत्मभावेन च ताः सेवन्ते, आत्मन एव सर्वातिशायि-प्रेमास्पदत्वात्। तावेव तासामात्मा। प्रेमप्राखर्यप्रतापेनैव प्रियतमस्तासामात्ममयः, आत्मा च प्रियतममयः। द्वयोर्मनागपि भेदो नास्ति। यत्रात्मनः सम्पूर्णसौख्यं तत्रैव राधामाधवयोर्मोदः। यत्र तयोः सौख्यं तत्रैव तासां मोदः। तयोरनुराग एव तासां सीमन्तसिन्दूरम्। तत्र स्वपरेति भिदा न भासते। स्वात्मनस्तयोरभेदे तत्सुखमेव स्वसुखं भवति।

आनन्दमग्नौ प्रेमविह्वलितौ श्लथपदौ वृन्दावनविहारिणौ तासां हृदय-भूषणम्। तयोः सुखमेव तासां सुखम्। तासां ताभ्यां स्वाभाविकमैक्यम्। श्यामस्य मनसा स्वमनस्तादात्म्यमापाद्य श्रीश्यामायाश्चरणमाधुर्यमनुभवन्ति। तस्या मनसा स्वमनस्तादात्म्यमापाद्य प्रीतिपरवशं प्रेयांसमुपलालयन्ति। प्रेममयस्य राधामाधवयुगलस्य मनसा स्वमनः संयोज्य तयोरासक्ति-

मनुभवन्ति। तासां तयोरासक्तिरूपत्वात् तत्कृतस्तद्दासक्त्युपभोगः स्वात्मोपभोग एवेति साम्प्रदायिकानां मतम्।

वस्तुतस्तु तासामनुपमः प्रेमैव राधामाधवयुगलरूपेण तन्मनो नयनानि च तर्पयति। यत्र तृष्णैव तृप्तिस्तृप्तिश्च तृष्णामयी, यत्र विरह एव संयोगः संयोग च एव विरहः, यत्र विरहसंयोगयैक्यम्, यत्र प्रेयसो प्रेष्ठरूपा प्रेष्ठश्च प्रेयसीरूपः, यत्र राधा-माधवयोर्हृदयनिकुञ्जेषु राधामाधवयोः केलिकल्लोलाः, तस्मिन्नेव वृन्दावने तादृक् प्रेमवैचित्र्यम्। तत्र श्यामचन्द्रस्य प्रभावात् सर्वस्यैव व्रजस्य हृदयं श्यामलायते। तत्रैव गौरतेजसः प्रभावात् सर्वस्यैव हृदयं गौरायते। यथा निकषरेखया स्वर्णस्य वर्णोत्कर्षो विज्ञायते तथैव रूपवतो हृदि रूपरेखया रूपस्य माहात्म्यातिशयः सिद्ध्यति। यस्योद्यानस्य समीपे क्षणमवतिष्ठते भानुजा, तस्य पत्राणि पुष्पाणि सर्वाण्यपि पीतान्येव भवन्ति। क्षणं यस्यावतिष्ठते महोद्यानस्य सन्निधौ, तस्य पुष्पाणि पत्राणि सर्वाण्यपि पीतान्येव भवन्ति। क्षणं यस्यावतिष्ठेत महोद्यानस्य सन्निधौ, तस्य पुष्पाणि पत्राणि स्वर्णानि भवन्ति हि। लोकोत्तरं रम्यरूपमालोक्य सर्वेऽपि रूपवन्तो भवन्ति।

वस्तुतस्तु राधामाधवयोः प्रीतिमयस्य परमोज्ज्वलरससमुद्रस्य अपरिमितास्तरङ्गा एव तास्ताः लीलाः। कदाचित् रजःकणा नभसो नक्षत्राणि मेघबिन्दवश्च गणयितुं शक्यन्ते; तथापि लीलातरङ्गाः सख्यश्च परिगणयितुमशक्या एव। तदुक्तम्—

> रजःकणा उडुगणा गण्यन्ते मेघबिन्दवः।
> राधामाधवयोः सख्यो लीलाश्चागणिताः सदा॥ इति।

तासु १. ललिता, २. विशाखा, ३. रङ्गदेवी, ४. चित्रा, ५. तुङ्गदेवी, ६. चम्पकलता, ७. इन्दुलेखा, ८. सुदेवी चैता अष्टौ परमान्तरङ्गाः सख्यः। तासामेकैकस्या अष्टौ अष्टौ यूथेश्वर्यः। एकैकाश्च अनेकानेक-यूथस्वामिन्यः।

तत्र श्री ललिता सर्वासु विद्यासु कुशला गोरोचनप्रभामयूरपिच्छाभवस्त्रा दिव्यताम्बूलवीटिकामर्पयन्ती दिव्यदम्पती उपलालयति। वस्त्रपरिधापनपरायणा दामिनीकोटिप्रभा तारककान्तिवस्त्रा विशाखा। चम्पकपुष्पाङ्गकान्तिः नीलाम्बरधरा व्यजनहस्ता वीजननिष्ठा चम्पकलता। कुङ्कुमकान्तितनुः कनकोपमवस्त्रा चित्रा पेयनिर्माणतत्परा सेवते। तुङ्गविद्या गौरवर्णा पाण्डुरवर्णवस्त्रपरिग्रहा नृत्यगीतादिभी राधामाधवौ उपलालयति। इन्दुलेखा विविधकामकलानिष्णाता हरतालकान्तिः दाडिमीकुसुमाभवस्त्रं बिभ्राणा स्वविद्यया तां लालयति। कमलकिञ्जल्काभविग्रहा जवाकुसुमवस्त्रा रङ्गदेवी भूषणधारण-

परायणा सेवते। कनकाङ्गी शोणाम्बरधरा सुदेवी केशप्रसाधन-निष्णाता नेत्राञ्जनधारण-कुशला शुकसारिकाः पाठयन्ती तौ विनोदयति।

राग-रागिण्यश्च तयोः सौभाग्यं वर्णयन्त्यो विनोदयन्ति। दिवा यामिन्य ऋतवो वृन्दावनगताः खग-मृग-लता-गुल्माद्योऽपि सहचरीभावोपेतास्तौ निषेवन्ते। श्यामाः श्यामपक्षीया दैन्यभावोपेताः गौर्यः श्यामापक्षीयाः सगर्वाः। उन्मुक्तमर्यादः प्रेमसिन्धुरुद्वेलितः श्यामाश्यामौ परिप्लाव्य तासामेव हृन्नेत्रेषु विश्राम्यति। तन्निष्ठाश्च तास्तयोः सेवासु प्रतिक्षणमवहिता-स्तिष्ठन्ति।

कैतवशून्ये हितेऽत्यन्तं निरतत्वात् हितरूपतैव प्रियसख्याः। तस्याश्च प्रीतेः प्रबललौल्यमेव माधवरूपेण व्यज्यते। तदानीमेव तत्स्पृहणीयरूपा श्यामा तद्धृदयाद् व्यज्यते। तस्याः प्राकट्ये विविधाः शृङ्गारचेष्टाः स्वयं व्यज्यन्ते।

प्रियतमश्च तद्रूपमाधुर्यपानं रङ्को निधिमिव कामयते। छविसुधापान-मत्तः स्वप्रेयसीमङ्के समावेशयितुं कामयते। गाढप्रेमालिङ्गनाबद्धौ परस्परं रसनिधिं वितरतः। तेन उत्कृष्टप्रेमाभिलाषमूर्तिमाधवं तदभिलाषस्य अतृप्तपूर्ति-रूपां प्रेयसीं रसमयीं श्यामाञ्च प्रेमक्रीडानिमग्नौ वीक्ष्य प्रशंसमाना सखी सर्वस्पृहणीयसौभाग्या भवति।

नन्दलाल्यव्रजबालानां रासमण्डलेऽपि तदभ्यन्तरे निकुञ्जेश्वर्या तत्सह-चरीभिः साकं तत्प्रियतमस्य नित्यरासक्रीडा प्रवर्तते। तदुक्तम्—

कैशोराद्भुतमाधुरीभरधुरीणाङ्गच्छविं राधिकां
प्रेमोल्लासभराधिकां निरवधि ध्यायन्ति ये तद्धियः।
त्यक्ताः कर्मभिरात्मनैव भगवद्धर्मेऽप्यहो निर्ममाः
सर्वाश्चर्यगतिं गता रसमयीं तेभ्यो महद्भ्यो नमः॥

( रा० सु० नि० ८० )

प्रेमबीजे समुद्भूते वासना अपयान्ति हि।
वृन्दावन-रसासक्तं विरक्तं मानसं भवेत्॥
प्रेमासव - महामत्तो रज्यते विषयेतरैः।
श्यामरङ्गैः सुसुखदैः प्रेमसर्वस्वरूपकैः॥
नीरमीनायते चेतो रसरूपे हरौ सदा।
विरक्तं सर्वतो नित्यं किञ्चिदन्यन्न रोचते॥
हृदि स्पृष्टे प्रेमरसे रसिकः समुदासकः।
हास्यक्रीडारतिस्तन्द्रा निद्रा च विगता भवेत्॥
यातनाशादि विस्मृत्य रूपासक्तं मनो भवेत्।

मौनमालम्बते वाणी प्राणाः क्षीणा भवन्ति हि ।
रोदित्युदश्रुकं नेत्रं हृदयं व्यथते सदा ॥
अङ्गानि शिथिलायन्ते प्रेमाविष्टानि सर्वशः ।
पीतवर्णं मुखञ्चापि देहरङ्गो विवर्तते ।
प्रेमकल्पलतास्पर्शात् देहगेहादिविस्मृतिः ।
कामना कमलं तस्य हृदि शश्वद् विकासते ॥ इति ।

सर्वतोभावेन तयोः स्वात्मसमर्पणं लोकोत्तरं दास्यम् । क्रीतदासोऽपि कदाचिन्मुक्तिं प्रार्थयते । भक्तस्तु मुक्तेः कल्पनामप्यपराधं मनुते । तदुक्तम्—

यस्याः प्रेमघनाकृतेः पदनखज्योत्स्नाभरस्नापित-
स्वान्तानां समुदेति कापि सरसा भक्तिश्चमत्कारिणी ।
सा मे गोकुलभूपनन्दन - मनश्चोरी चकोरी ददा,
दास्यं दास्यति सर्ववेदशिरसां यत्तद्रहस्यं परम् ॥

(रा० सु० नि० २०४)

दिव्यं सखीभावमुपलभ्य वस्त्रभूषणादिभिरात्मानमलङ्कृत्य नित्यकृत्यं जपादिकं विधाय राधा-माधवौ उत्थाप्य स्वच्छजलैर्मुखादिकं प्रक्षाल्य स्निग्धस्वच्छवस्त्रैः सम्प्रोञ्छ्य सिता-नवनीतादिकं नैवेद्यं निवेद्य ताम्बूलं दत्त्वा मङ्गलारार्तिक्यं कुर्यात् । सुगन्धितैलाभ्यङ्गं कृत्वा सुगन्धितैर्जलैः संस्नाप्य स्निग्धैर्वस्त्रैः सम्प्रोञ्छ्य विविधैर्गन्धैर्वस्त्राभरणादिभिः श्रीविग्रहमलङ्कृत्य मकरीपत्रादिकं कपोले विलिख्य वैजयन्तीं वनमालाञ्च परिधाप्य शृङ्गारार्तिक्यं कुर्यात् । विविधानि व्यञ्जनानि समर्प्य ताम्बूलानि दत्त्वा राजभोगारार्तिक्यं कुर्यात् । दर्पणच्छत्र-चामर-व्यजनानि धारयेत् । सुगन्धितपुष्पमयीं शय्यां निर्माय तत्र शयनं कारयेत् । चरणसंवाहनं व्यजनचालनञ्च कुर्यात् । पुनश्च चतुर्थयामे गुणगानपूर्वकमुत्थाप्य किञ्चिज्जलमन्यत् पेयादिकं पाययित्वा नूत्नैर्वस्त्राभरणादिभिरलङ्कृत्य यथासमयं यथाभोग्यं भोगान्निवेद्य ताम्बूलं दद्यात् । तत्पुरतः वादित्रगीतादिभिर्मनो विनोदयेत् । पुनः सायंकालिकमर्चनं नावेद्यं दत्त्वा सन्ध्यारार्तिक्यं कुर्यात् । पुनश्च शयनकालिकं भोगमलङ्कारादिकं च कृत्वा पुष्पशय्यां रचयित्वा तत्र तौ संनिवेश्य पादसंवाहनादिकं कुर्यात् ।

विरलाभिः तीव्राभिरनुभूतिभिर्वैवश्येन सङ्गीतप्रवृत्तिर्भवति । ताभिर्विवेशगायकस्यैव कवित्वम् । तीव्राभिरनुभूतिभिरुत्थितं वैकल्यमेव भावः । भावचर्वणैव साहित्यसृष्टेः प्रयोजनम् ।

श्रीमद्वल्लभाचार्यरीत्या—

ब्रह्मानन्दात् समुद्धृत्य भजनानन्दयोजने।
लीला या युज्यते सम्यक् सा तु तुर्ये निरूप्यते॥

इति गोपीनां स्वरूपानन्दलक्षणभजनानन्ददानं शृङ्गारलीलायाः प्रयोजनम्। तामसप्रकरणे प्रमाण-प्रमेय-साधन फलप्रकरणानि। फलात्मिका च लीला द्विविधा—रूपलीला नामलीला च। रासपञ्चाध्याय्यां रूपलीला। युगलगीते नामलीला। आत्मना मनसा वाचा प्राणैरिन्द्रियैर्देहेन च पञ्चधा रूपलीलायां फलरूपस्य भगवतः प्रत्यक्षरमणम्।

विरहजनित-गुणगानलीला नामलीला। तस्यां प्रियतमस्यान्तरं रमणं निष्पद्यते।

बाह्याभ्यन्तरभेदेन आन्तरं तु परं फलम्।
ततः शब्दात्मिका लीला निर्दिष्टा सा निरूप्यते॥

(सु० का० ५) इति।

मानादिदोषराहित्येन सा निर्दुष्टा सप्ताध्याय्यां षड्भिरध्यायैर्भगवतो धर्मरूपमैश्वर्यं निरूपितम्। सप्तमे तु धर्मिस्वरूपो भगवान् निरूपितः—

सर्वोत्तमा हरेर्लीला वेणुनाद-पुरःसरा। इति।

कैश्चिदुच्यते—"श्रीमद्वल्लभाचार्याणां रीत्या फलनिरूपणप्रसङ्गे गोपसीमन्तिनीनां सात्त्विक-राजसादिभेदवर्णनं न सङ्गतम्, तासां भगवत्तादात्म्यापन्नानां तामसत्वादिभेदासंभवात्" इति। तत्तुच्छम्; तेषां तात्पर्यानवगमात्। अप्राकृतानां तासां प्राकृतसत्त्वादिभेदानुपपत्त्याऽपि लीलोपयुक्ततादृशस्फुरण-लौल्यावष्टम्भाभिप्रायेण अप्राकृतसत्त्वादिभावानां तत्र सत्त्वे बाधाभावात्। सत्त्वेन भगवतः स्वरूपसौन्दर्य माधुर्यादिकं स्फुरति। रजसा तत्प्राप्तिलौल्यं वर्धते। तमसा च तदासक्ति-मोह-व्यसनादिकं जायते। मोहादिप्राबल्यप्रतिपिपादयिषया तामसतामसत्वाद्युक्तिः। अत एव भगवतोऽपि नेत्रेषु विद्यमानयोः अरुणिम-श्वेतिम्नो रजःसत्त्वव्यपदेशः, रजः-सत्त्वाभ्यां स्रष्टृपालकाः इति दशमोक्तेः।

नीरमये सरोवरे मृण्मयेन पङ्केन समुद्भूतं पङ्कजं सौन्दर्यमाधुर्यादिभिरत्यन्तमाकर्षकं भवति। यदि क्षीरमये सरोवरे नवनीतमयात् पङ्कादुत्पन्नं पङ्कजं स्यात्तदा तदतीव शोभनं स्यात्। सच्चिदानन्द-रससारसरोवरात् पूर्णानुराग-रससारसरोवराद्वा समुत्पन्नं सरोजं त्वतीव मधुरं भवतीति कैमुतिकन्यायसिद्धम्। तादृङ् नीलसरोजाद्युपमितं कृष्णस्वरूपं तु ततोऽपि मनोहरम्। तच्च उद्वर्तितमिव सौरभ्येण, अभ्यक्तमिव स्नेहेन, स्नातमिव माधुर्येण,

स्वाङ्गमहसा वा मार्जितमिव, लावण्येन अनुलिप्तमिव, सौन्दर्येण भूषितमिव त्रैलोक्यलक्ष्म्या भवति ।

सच्चिदानन्द-रससार-सरोवरसमुद्भूत-सरोजस्थानीयस्य व्रजस्य किञ्जल्कस्थानीया व्रजसीमन्तिन्यः तन्निष्ठपरागस्थानीयश्च श्रीकृष्णः । तन्निष्ठमकरन्दस्थानीया तत्प्रेयसी वृषभानुनन्दिनी ततोऽप्यन्तरङ्गा, अतिमधुरा तदाराध्या च । यदि साक्षान्मन्मथः परमरूपमय-कच्छपाश्रितेन शोभामय्या रशनयाऽवनद्धेन शृङ्गारमन्दर-मन्थानदण्डेन अमृतच्छविपयोनिधिं मथित्वा दिव्यामभिनवां श्रियमाविर्भावयेत् तदा कथञ्चिदेव तया सा तुलयितुमर्हा ।

किं बहुना, यस्याः प्रत्यङ्गमपरिगणिता वैदग्ध्या-नुराग-वात्सल्यलावण्यादि-सिन्धवः समुद्वेलिता भवन्ति, तस्याः किमिवोपमानं स्यात् ?

वैदग्ध्यसिन्धु - रनुरागरसैकसिन्धु-
वात्सल्यसिन्धु - रतिसान्द्रकृपैकसिन्धुः ।
लावण्यसिन्धु-रमृतच्छविरूपसिन्धुः
श्रीराधिका स्फुरतु मे हृदि केलिसिन्धुः ॥ इति ।

दिव्यातिदिव्य - लोकोत्तर - कल्याणगुणगणाधिष्ठात्र्यो देव्यस्तदङ्गमयूखरूपाः, तस्या एव सर्वगुणगणास्पदत्वात् ।

यद्वा—महाभावचिन्तामणिरेव श्रीकृष्णप्रेयस्या राधायाः स्वरूपम् । तत्कायव्यूहरूपा ललितादयस्तत्स्वरूपा एव । विशिष्टैस्तैस्तैरप्राकृतैः उपकरणैरेव तच्छृङ्गारादिकमुपवर्णितं महानुभावैः । यथा—तद्विषयकेण कृष्णस्नेहेन कृष्णाङ्गसौरभ्येण तदुद्वर्तनं तदभ्यञ्जनं कारुण्यामृतधारया प्रथमं स्नानम् । तारुण्यामृतधारया द्वितीयं स्नानम् । लावण्यामृतधारया तृतीयं स्नानम् । ह्रीश्यामपट्टशाट्या प्रथमपरिधानम् । कृष्णानुरागमय-पट्टशाट्या द्वितीयपरिधानम् । प्रणयमानमय्या कञ्चुक्या वक्षोज-प्रावरणम् । सौन्दर्यकुङ्कुमेन सखीप्रणय चन्दनेन स्मितकान्तिकर्पूरेण चाङ्गविलेपनम् । कृष्ण-शृङ्गारमयेन मृगमदेन स्वाङ्गे विविधं चित्रणम् । प्रच्छन्नमान-वाम्यमयो धम्मिल-विन्यासः । धाराधीरात्मगुणमय-पटवासेन अङ्गसञ्जनम् । कृष्णरागताम्बूलेन अधररञ्जनम् । प्रेमकौटिल्याञ्जनेन नेत्रयुगलालङ्करणम् । सुदीप्तसात्त्विकैर्हर्षादिसञ्चारिभिः किलकिञ्चितादिभावैः अङ्गालङ्करणम् । गुणश्रेणीपुष्पमालाभिः कण्ठभूषणम् । सौभाग्यतिलकेन ललाटभूषणम् । प्रेमवैचित्त्यरत्नेन हृदयालङ्करणम् । मध्यवयःसखीस्कन्धे करन्यासः । कृष्णलीलावृत्तिरूपाः सख्यः पार्श्ववर्तिन्यः निजाङ्गसौरभालये गर्वपर्यङ्करोहणेन कृष्णचिन्तनम् । कृष्णनाम-यशसी कर्णाभरणे कृष्णाभिधान-गुणप्रवाहरूपं मुखे कृष्णस्य शृङ्गाररसमधुप्रदानप्रसन्नता सती

तत्कामदोग्ध्री महाभावरूपा राधैव कृष्णप्रेम-रत्नाकरायमाणा शक्तिसारभूता आह्लादिनी। तस्याः सारभूतं प्रेम, तस्यापि सारभूता राधा। राधायामेव कृष्णस्य परमस्वरूपोपलब्धिः। अत्र कृष्णस्वरूपायामेव तस्यां तच्छक्तित्व-व्यपदेशोऽपि। स्वातन्त्र्यमेव शक्तिः। सा च समवायिनी शक्तिः स्वरूपशक्तिः। सा च आनन्दरूपा। कामपूरकत्वात् सा कामेश्वरी। द्वयोरभेदात्मकं सामरस्य-मेव सौन्दर्यमपि। उज्ज्वलरसज्योतिर्मयी लक्ष्मीर्यस्याऽङ्गविभूतिः, पट्टमहिषी-गणो यस्याः वैभवविलासः, व्रजसीमन्तिन्यो यस्याः कायव्यूहरूपाः, तासा-मेवार्तिरूपा वा सा।

सा तत्स्वरूपभूता, इतरा अपि तदात्मिकाः सत्यतमं प्रेयांसमेव भूषणादि-रूपेण धारयन्ति। तदुक्तम्—

श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम।
वृन्दावनतरुणीनां मण्डनमखिलं हरिर्जयति॥ इति।

उपदिशन्ति चास्मभ्यम्—

ईदृशा पुरुषभूषणेन या भूषयन्ति हृदयं न सुभ्रुवः।
धिक् तदीयकुलशीलयौवनं धिक् तदीयगुणरूपसम्पदः॥ इति।

स्वकीया महिष्यः। सामान्या कुब्जाः। परकीया द्वेधा—कन्यका परोढाश्च।

मायाकल्पिततादृक्स्त्री - शीलनेनानुसूयुभिः।
न जातु व्रजदेवीनां पतिभिः सह सङ्गमः॥
नासूयन् खलु कृष्णाय मोहितास्तस्य मायया।
मन्यमानाः स्वपार्श्वस्थान् स्वान्स्वान्दारान् व्रजौकसः॥

तासामनेके भेदाः। साधनपराः देव्यः नित्यप्रिया इति। आद्या यौथिक्यः अयौ-थिक्यश्चेति द्वेधा। मुनिरूपाः श्रुतिरूपाश्च द्विविधा आद्याः, 'दण्डकारण्य-वासिनो मुनयो रामचन्द्रं दृष्ट्वा विस्मिता बभूवु'। स्त्रिय उरगेन्द्रभोगभुज-दण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः इत्युक्तेः। अयौथिक्य-श्च द्वेधा प्राचीना नवीनाश्च। आद्या नित्यप्रियाभिः सालोक्यमुपगच्छन्ति। नवीना मर्त्यामर्त्ययोनिषु भ्रममाणा व्रजे गोप्यो भवन्ति। कृष्णस्य देवत्वे या देव्यो भवन्ति ता देव्यः। नित्यप्रियाः सदा कृष्णसहवासिन्यः। ता राधा, चन्द्रावली, विशाखा, ललिता, श्यामा, पद्मा, शैव्या, भद्रिका, तारा, विचित्रा, गोपाली, धनिष्ठा, पालिकाः कोटि-कोटियूथानां मुख्याः। यथा—

अनन्तानन्तब्रह्माण्ड - शक्त्युपादानतां गताः।
शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः॥

नीराजयन्ति सततं चन्द्रसूर्यहुताशनाः ।
दिव्यविग्रहधारिण्यो दिव्याम्बरविभूषणाः ॥
दिव्याङ्गरागविलस-च्छुभस्मेराननाः शुभाः ।
परप्रेमास्पदं साक्षाद् भगवन्तं सनातनम् ॥

महेन्द्रनीलाभिरुचिप्रदीपितां रवीन्दुतारागणदीप्तदिक्तटीम् ।
वियन्मयीं रत्नशुभस्थलीं करे प्रगृह्य नीराजननिष्ठमानसाः ॥
प्रातिस्विकैः सूर्य-शशाङ्क-वह्निभि-र्विद्युद्गणै-र्दीप्तसुमङ्गलग्रहैः ।
स्फूर्जत्प्रभैर्दिव्य वियत्स्थलीगतैस्तैस्तैः सपर्यां विदधत्यतिद्युतेः ॥

बाह्यानामान्तराणाञ्च ज्योतिषां ज्योतिरीश्वरम् ।
तपन्तं परमेशानं वरिवस्यन्ति संयताः ॥
देवदेवाश्च देवाश्च सिद्धा ब्रह्मर्षयोऽमलाः ।
नृदेवा यक्षगन्धर्वा विद्याधर्यश्च सुव्रताः ॥
पक्षिणश्चोरगा दिव्याः पूजयन्ति दृढव्रताः ।
प्रियं प्रियाणां परमं परमात्मानमव्ययम् ॥
पूजयन्ति महात्मान-मशेषैरुपचारकैः ।
अव्याकृतानि ब्रह्माणि चेतांसि चिन्मयानि च ॥
प्रातिस्विकानि दिव्यानि कल्पयन्ति शुभासनम् ।
कोटिसूर्य - प्रतीकाशं कोटिचन्द्र - सुशीतलम् ॥
कोटिविद्युद् - गणाभासं सिंहासनमनुत्तमम् ।
दिव्यगन्ध - रसोपेतै - र्निर्मलै - स्तीर्थवारिभिः ॥
दिव्यपुष्पफलोपेतैः पाद्यं दत्वा तथाऽर्घ्यकम् ।
विमलैः काञ्चनैः पात्रै - र्दिव्यरत्नै - रलङ्कृतैः ॥
गन्ध-पुष्प-यवैः शुभ्रै-र्दर्भैश्च तिल-तण्डुलैः ।
सरित्सरोभिः स्रोतोभि-र्निर्मलैः सप्तसिन्धुभिः ॥
नानारसैः पुण्यफलैः दधि-दुग्ध-घृतैस्तथा ।
मधुरै-र्मधुमाध्वीकैः पूजयन्ति प्रियं मुदा ॥ इति ।

अथ परमात्मनः विराट्पुरुषस्य विराट्पूजनप्रकारः संक्षेपतोऽयम्— भगवतो महामहिमैव तन्मूर्तिः, तदनन्या महाशक्तिर्वा, तस्यामेव सर्वदा तत्सन्निधानात् । तत्रैव तदावाहन - प्रतिष्ठापन-सन्निधापन-सन्निरोधनानि । अज्ञानाद् दुर्मनस्त्वाद् वैकल्याद्वा साधकस्य यदपूर्णत्वमर्चने सम्भाव्यते, तत्सम्मुखीकरणेनापोद्यते । यदभक्त-वाङ्-मन-श्चक्षुः-श्रोत्राविषयत्वादतिदूरं तस्यैवामितद्युतेः स्वतेजःपञ्जरेण सर्वतो वेष्टनं यत्तदेव अवगुण्ठनम् । सर्वेऽपि

देवा यद्दर्शनं कामयन्ते, तस्यैव तत्र स्वागतम्। पूर्वोक्ते चित्सारचिन्तामणिमये मन्दिरे अव्याकृत-ब्रह्ममहासिंहासन-भावनमेव तदाऽऽसनार्पणम् । स्वात्मनः तदधीनताभावनं तन्नमस्करणम् ।

यद्भक्तिलेशात् परमानन्दसम्भवस्तस्य स्वभावपावनत्व-भावनं पाद्यम्। तापत्रयापहं परमानन्दस्वरूप-भावनं तदर्घ्यम् । सकलवेदादि-सच्छास्त्रपरम-तात्पर्यगोचर-देवदेवत्व-भावनमशुद्धानामपि शुद्धिहेतुत्वेन आचमनम्। यस्य स्मरणेनोच्छिष्टोऽशुचिश्च शुद्धो भवति, तस्य तादृक्स्वभावनमेव तदाचमनम्। सर्वकालातीतस्य परिपूर्णसुखात्मकस्य सौगन्ध्य-सुस्नेह-सारसर्वस्वाधिष्ठानत्व-भावनमेव उद्वर्तनमभ्यञ्जनञ्च । पञ्चामृतेषु पयोदधिघृतमधुशर्करादिषु गङ्गादि-तीर्थेषु च स्निग्धत्व-पावनत्वादिकं यतः समुदेति, तस्य तादृक्स्वरूपानुसन्धानं परमानन्दबोधाब्धिनिमग्नत्वभावनं वा पञ्चामृतैः गङ्गादितीर्थोदकैर्वा स्नपनम्।

स्वाङ्गतेजोमयादि-प्रावरणानुसन्धानं वस्त्रम्। निरावरणविज्ञानमेव स्वर्ण-वर्णाम्बरं मायामयं कनककपिशं वासः। त्रिवृत्कृत-त्रिगुणाधिष्ठानत्वभावनमेव उपवीतम्। सर्वगन्धत्व-निखिलयशःसौरभान्वित-स्वरूपचिन्तनं गन्धार्पणम्। स्वभावसुन्दराङ्गस्य नानाशक्त्याश्रितस्य चिन्मयानि विचित्राणि सौन्दर्याण्येव भूषणानि । सुमनसां भक्तिमतां विविध-भावसौगन्ध्यान्वितानि सुमनांस्येव पुष्पाणि। तुरीयवनसम्भूत-नानागुणमनोहरमानन्दसौरभं पुष्पम्।

सर्वाभीष्टकामानां तद्भावोद्दीप्ताग्नौ प्रज्वालनं धूपः। ज्योतिषामपि यज्ज्योति-स्तमसां यदपोहनम्, तस्य पौनःपुन्येन अनुसन्धानं दीपः। चित्पात्रे तत्सौख्या-नुसन्धानं नैवेद्यम्। परमतृप्तिहेतुत्वेन अखण्डानन्दानुसन्धानं जलम्। स्वीयसुरुचि-सुवास-सुरागादि-भावानां तदात्मसात्करण-भावनं ताम्बूलम्। चतुर्वर्गस्य तस्मिन्नेव परिकल्पनं फलार्पणम् । तत्स्वप्रकाशस्यान्तराणां वाङ्मनोबुद्ध्यादीनां बाह्यानामादित्यचन्द्रविद्युदग्नीनामपि प्रकाशकत्वभावनं नीराजनम्। तथा चोक्तम्—

श्रीकृष्णस्याङ्गसौरभ्यसारसर्वस्वमेव यत्।
उद्वर्त्तनं ततस्तस्या मानिन्या ह्यतिसौख्यदम्॥
कृष्णस्नेहमयैर्दिव्यै - भक्तिभावसुवासितैः।
तैलैरभ्यञ्जनं तस्या रुचिरं स्नेहदं परम्॥

कारुण्यामृतधारया प्रथमतः स्नानं मनोज्ञं मतम्,
तारुण्यामृतधारया च सततं स्नानं द्वितीयं शुभम्।
लावण्यामृतधारया च विहितं स्नानं तृतीयं परम्,
तत्स्नानत्रयनिर्मलं सुविदितं तस्याः शुभाकूया वपुः॥

ह्रियाशाट्या हि सततं भूषितं तद्वपुः सदा ।
कृष्णरागात्मकेनापि शोणपट्टेन भूषितम् ॥
मानप्रणय-कञ्चुक्या वक्षोजयुगलं शुभम् ।
भूषितं ह्यनवद्याङ्ग्या दिव्यया दीप्तमायया ॥
सौन्दर्य-कुङ्कुमेनापि स्मितकर्पूरकेण च ।
तथा प्रणयरूपेण चन्दनेन सुगन्धिना ॥
ह्यनुलिप्तं परार्ध्येन वपुरस्या ह्यनुत्तमम् ।
कस्तूरीचर्चितं चित्रं वक्षोजयुगले तथा ।
तिलकं फालके दिव्यं कृष्णोज्ज्वलरसात्मकम् ॥
प्रच्छन्नमान-वाम्यात्मा धम्मिलो राजते शुभः ।
धीराधीरागुणाश्चापि पटवासाः प्रकीर्तिताः ॥
ताम्बूलवीटिकारागः कृष्णरागः सुशोभनः ।
प्रेयकौटल्यरूपं तु कज्जलं चक्षुपोः शुभम् ॥
सूद्दीप्ताः सात्त्विकाभावास्तथा सञ्चारिणोऽपि ये ।
किलकिञ्चितकाद्याश्च सर्वेऽलङ्कारतां गताः ॥
महाभावस्वरूपायाः श्रीराधाया न संशयः ।
गुणश्रेण्यः पुष्पमालाः सर्वाङ्गे परिपूरिताः ॥
सौभाग्यतिलकञ्चापि ललाटे शोभते शुभे ।
प्रेमवैचित्यरत्नं हि तरलं हृदये शुभे ॥
कृष्णलीलविपर्यिण्यो वृत्तय परमाः शुभाः ।
ताः सख्यः सर्वतो व्यापारतामावार्य परिस्थिताः ॥
श्रीवृन्दावनचन्द्रस्य कृष्णचन्द्रस्य प्रेयसी ।
प्राणेश्वरी महाराज्ञी राधा सौभाग्यदा शुभा ॥
स्वाङ्गसौरभ्यभवने - गर्वपर्यङ्क-संस्थिता ।
प्रेयसो गुण - नामादि - यशकर्णावतंसकः ॥
सर्वदा राजते तस्याः खञ्जनाक्ष्याः शुभावहः ।
अथवा कृष्ण एवास्याः शुभाङ्ग्या कुण्डले शुभे ॥
स एव कज्जलो भूत्वा दृशोरस्याः सुशोभते ।
वक्षोजस्थो मृगमदो भूत्वा कृष्णः प्रमोदते ॥
इन्द्रनीलमणिप्रायाश्चूलिकावलयश्च ताः ।
हाराश्च नीलशाट्यश्च हरिरेव न संशयः ।
श्रीकृष्णप्राणा प्रेयस्या राधाया भूषणान्यथ ।
वस्त्राणि च हरिः साक्षात् तत्तद्रूपधरः स्वयम् ॥ इति ।

आनन्दमहासमुद्रे भवसमुद्रं प्रविलाप्य विशुद्धे परमानन्दसुधासिन्धौ कोटि-कोटि-मार्तण्डमण्डलप्रभाभास्वरे चिन्मयमणिद्वीपे ततोऽप्यधिकपरमप्रकाशमये चित्सारचिन्तामणिमयमन्दिरमध्ये दिव्यातिदिव्यपुष्पमये मन्दिरे तत्रापि दिव्यसौरभमये दिव्यातिदिव्य-कल्पवृक्षाधःस्थिते ततोऽप्यनन्तकोटिभास्वरभास्वरे अनन्तानन्तशशिसुशीतले अव्याकृतब्रह्मात्मके अनन्तानन्तविद्युत्पुञ्जपिञ्जरे महासिंहासने दिव्यदम्पतीमयम् अनन्तानन्त-रवि-शशि-पावक-विद्युदादिप्रकाशकं ज्योतिषामपि ज्योतीरूपं परस्परहृत्स्थ-पूर्णानुराग-रससारसिन्धुसमुद्भूत - निर्मलनिष्कलङ्कचन्द्रमयं सम्प्रयोग-विप्रयोगात्मक-समुद्वेलित-शृङ्गारेन्दुमयञ्च स्वरूपयुगलम्। कोटिकोटि-चन्द्र-सूर्य-समुद्रमन्थन-समुद्भूत-निर्मल - निष्कलङ्क-पूर्णचन्द्रनिभाननम्। परस्पराङ्गसौम्यसारसर्वस्वेन उद्वर्तितम्, अन्योऽन्यस्नेहेन अभ्यक्तम्। माधुर्यामृतेन लावण्य-कारुण्य-तारुण्यामृतैः परस्पराङ्गमनसा च स्नातम्। सौन्दर्येण अनुलिप्तम्। परमसौभाग्यलक्ष्म्या अलङ्कृतम्। परस्पराङ्गवर्णशोभिना परस्परात्ममयेन स्ववर्णेतरेण वाससा परिहितम्। अन्योऽन्यात्मकेन अलङ्कारेण चालङ्कृतम्। एवं दिव्यगुणावलीपुष्पमालया शोभितं विराजते।

दिव्यरत्नालङ्कृताभिः दिव्यरसेन्दुगलितामृतधाराद्रुपिणीभिः सर्वाङ्गसुन्दरीभिः दिव्यदेवताभिश्च तत्समर्हणम्। दूर्वया पङ्कजोपेतया विष्णुकान्तया विविधकुसुमैश्च सहितेन पाद्येन पादाम्बुजप्रक्षालनम्। गन्धपुष्प-यव-सर्षप-दूर्वाभिः तिल-कुशाऽक्षत-रत्नमिश्रेण हेमपात्रगतेन अर्घ्यजलेन हस्तक्षालनम्। जातीफलकङ्कोललवङ्ग-गन्धयुतेन जलेन आचमनम्। दधिमधुघृतमयेन मधुपर्केण अर्हणम्। हेमरजोमिश्रितेन कुङ्कुमपङ्केन उद्वर्तनम्। चम्पकादि-विविधपुष्प-वासित-सुगन्धितैलेन अभ्यङ्गम्। स्निग्धचिक्कणेषु भ्रमरप्रभेषु तमोराशिनिभेषु केशेषु निसर्गसुन्दरेषु चाङ्गेषु तैलानुलेपनम्।

ततो दुग्धसमुद्र-स्नानम्। दधिसिन्धु-स्नानम्। घृतसिन्धु-स्नानम्। मधु-सिन्धु-स्नानम्। शर्करासिन्धु-स्नानमिति। पञ्चामृत-स्नानम्। उष्णोदक-स्नानम्। पुष्पोदक-स्नानम्। गन्धोदक-स्नानम्। सुवर्णोदक-स्नानम्। रत्नोदक-स्नानम्। पलोशीरसुवासितैः माणिक्यामलमौक्तिकामृतमयैः गङ्गादितीर्थोदकैः स्नानम्। उद्यद्गन्धैरगुरुद्रवैः स्फूर्जत्सौरभयक्षकर्दमरसैः सुगन्धिभिः काश्मीर-कस्तूरिका-नीरैः पुष्पाम्भोभिः कर्पूरपाथोभरैः अशेषतीर्थजलैश्च स्नानम्। शुद्धगङ्गोदकस्नानम्।

ततः स्निग्धाम्बरेण प्रोञ्छनम्। सिन्दूरपूरप्रभेण सूक्ष्मस्निग्धामलकान्तिना बालार्कद्युतिदाडिमीकुसुमप्रस्पर्धिना सुगन्धिना दिव्यतेजसा कदम्बकिञ्जल्क-

पिशङ्गेन रविरश्मिनिकर-निभेन दामिनीद्युति-विनिन्दकेन वाससा परिधानम्। तत्सवर्णसमानवर्णेन उत्तरीयेण मुक्तादिविविध-रत्नग्रथित-मुख्यरत्नविचित्र-हेमरचनाचारु-प्रभाभास्वरया नीलया कञ्चुकिकया तदर्हणम्। दिव्यरत्नालङ्कृत-कमनीय-तपनीय-पादुकार्पणम्। बहुभिरगुरुधूपैः केशानां धूपनम्। कमनीयकङ्कतैश्च तन्मार्जनम्। सुरभिभिः अरविन्दैश्चम्पकैश्च तदर्चनम्। कनकसूत्रैश्च जूटनिर्माणम्। मणिचितैः सौवर्णसूत्रैः मौक्तिकगुच्छोपेतैः वेणीनिर्माणम्। स्वरोचिषोल्लसित-केशपाश-चूडामणि-समर्पणम्।

तपनीयमयैः कमनीयैः रत्नालङ्कृतैस्तूलिकाढ्यै रूपमहोपधानैः रत्नालङ्कृताभिः सुकोमलाभिः तूलिकाभिः सुसूक्ष्मैर्मृदुस्निग्धैः मुक्तामणिरत्नजटितैः दिव्याविकरोमशैः सुवर्णैः दुकूलैस्तेजोमयैः परमप्रकाशमयै रत्नमयैः सुरभिभिश्च पट्टैविविधैश्च कौशेयैस्तदर्हणम्।

दिव्यसौवीराञ्जनैः कनकशलाकया नेत्रयोः अञ्जनार्पणम्। पादयोः विस्फुरत्-सहजरागरञ्जित-पद्मरागनूपुर - विविधरत्नालङ्कृत - स्वर्णमञ्जीरार्पणम्। कट्यां दिव्यमणिरत्नालङ्कृत - काञ्चीमेखलादिकम्। उरोजयोश्च अनुपम-नक्षत्रमाला-मुक्ताहारादेः समर्पणम्। मौक्तिकच्छटाविराजित - भास्वरफालभूषणार्पणम्। भुजेषु केयूराणि करेषु रत्नवलयश्रेण्यो राजन्ते। कर्णयोः ताटङ्के शीर्षे चूडामण्यादिकम्, धम्मिले हेमकुसुमानि, भाले मुक्ताराजिविराजि हेमतिलकम्, नासापुटे मौक्तिकम्, कुचयोः मौक्तिकजालिकाः, सर्वाङ्गुलीषु ऊर्मिका-काञ्चन-किङ्किण्यादिरत्नावतंसादि यथास्थानं रोचते।

कुङ्कुमकर्पूरागुरुभिः कस्तूरिकया च तिलकैः देहाङ्गरागैश्च तदभ्यर्हणम्। सर्वगन्धैरष्टगन्धैः यक्षकर्दमैश्चाङ्गेषु अनुलेपनम्। पादयोश्च कुङ्कुमयावका-नुलेपनम्। बालादित्यद्युतिना सिन्दूरेण जाती-जपा-बकुल-केतकादिभिः मालती-हेम-पुष्पिका-काञ्चनार-मन्दार-कुन्दवीर-लवङ्ग-कर्णिकार-गिरिकर्णिकादिभिः पारिजात-शतपत्र-पाटलादिभिस्तदर्हणम्। बकुल-मल्लिका-मालती-जाती-चम्पका-ऽशोक-पूग-पुन्नाग-कल्हार-सर्वर्तुकुसुममालार्पणम्।

अनन्तानन्त-मार्तण्डमण्डल न्यक्कारिभिः विविधरत्नमयैः किरीटकुण्डलैः कौस्तुभ-वैजयन्ती-वनमालादिभिः अन्यैश्च महार्हरत्न-मौक्तिकमणिमयैः कोटिकोटि-रविप्रभाभास्वरैः हारैः दिव्यातिदिव्य-केयूराङ्गद-कङ्कणा-ऽङ्गुलीय-कादिभिः विरोचमानकाञ्चीकलाप-नूपुरादिभिरलङ्कारैः अलङ्करणम्। मार्तण्डमण्डलप्रभ-नवमणिमुकुटचन्द्रशकलसिन्दूरतिलकरत्न - कालाञ्जनवाली-मणिकुण्डलयुगल-नासाभरणाऽधरयावक-माङ्गल्यसूत्र - कनकचिन्ताक-पदक-महापदकैकावलि-मुक्तावली-पादकटक-पादाङ्गुलीयकादिभूषणार्पणम्। नखमणि-

चन्द्रिकाकिरणनिरस्कृतानन्तानन्तमनोजाखर्वगर्वं तद्युगलस्य रूपं सशक्तिभिः सर्वैरपि देवदेवैरुपासितम्।

ततो लाक्षा-शिलारसश्रीवास-कर्पूर-सिता-मधुयुतैः गोसर्पिशाऽऽलोडितैः श्रीखण्डा-ऽगुरु-गुग्गुलादिभिः धूपैर्धूपनम्। रत्नालङ्कृत-हेमपात्रनिहितैः दीर्घतराऽन्धकारभिदुरैः गोसर्पिषोद्दीपितैः बालार्ककोटिप्रभै रत्नप्रदीपैः नीराजनम्। महत्कनकपात्रस्थितैः डमरुसदृशरूपैः पक्वगोधूमदीपैरार्तिक्यम्। मुखकमलसमीपे सार्धत्रिवारभ्रामणम्।

दधि-दुग्ध-पायस-महाशाल्यन्न - सन्तानक - सूपापूप-सिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः एला-जीरक-हिङ्गु-नागर-निशा-कौस्तुम्भरीसंयुतैः सुधाधिकरसैः शाकैस्तर्पणम्। सापूप-सूप-दधि-दुग्ध-सिता-घृतैः सुस्वादुभक्ष्य-परमान्नपुरःसरैः शाकोल्लसन्मरिच-जीरकवह्निकैः भक्ष्यैश्च तदुपाहरणम्। प्राज्याज्यमयमधुरामृतोज्ज्वलपयोऽर्पणम्। जाताकोरकोपमौदनार्पणम्। मुद्ग-माष-चणकमयसूपार्पणम्। प्राज्य-माहिषमाज्यार्पणम्। शिम्बी-सूरण-बिम्बबृहती-कुष्माण्डकौषीतकी-वृन्ताक-पटोलादीनां मृदुनाऽग्निना संसाधितानां वेसवारयुतानां सौवर्णपात्रव्रजस्थानां समर्पणम्। निम्बूका-ऽऽर्द्रक-चूत-कन्द-कदली-कौशातकीकर्कटी-धात्री-बिल्व-करीरकैर्विरचितानां राजीभिः कटुतैल-सैन्धव-हरिद्राभिर्युतानां नानाविधानां सन्धानानां समर्पणम्। सिताञ्चितलड्डुकमृद्वपूप-पूरिका-परमान्नानाम् एला-काश्मीर-कर्पूरैः सुसाधितस्य पयसः चन्द्रमण्डलनिभस्य दध्नश्च दिव्यगन्धान्वितायाः शिखरिण्याश्च समर्पणम्।

कलधौतपात्रे उष्णोदकैः पाणियुगल-मुख-प्रक्षालनम्। कर्पूरमिश्रेण सकुङ्कुमेन चन्दनेन हस्तोद्वर्तनम्। उशीरवासित-शीत-जितामृत-सुरसरिन्नीरार्पणम्। आनन्दाम्भोधि-समर्पणम्। अमृताम्भोधि-समर्पणम्। दिव्याम्र-द्राक्षा-दाडिमाऽञ्जीर-नारङ्ग-सेवादिफलार्पणम्। परमान्नपायसादि-समुद्रार्पणम्। कूर्चापूपपर्वतान् सितानवनीतमहापर्वतान् श्वेत-पीत-भक्तपर्वतान् शष्कुल्यपूपपर्वतान् विविधशाका-सूप-वाताद-पिस्तादिसंयात्रान् पाटल-जम्बूरसगुटक-दुग्धाक्तगुटक-रसचूलकादिविविधमिष्टान्नानि च समर्प्य एला-लवङ्ग-कक्कोल-कर्पूरचूर्णाञ्चितैः गौरखदिर-जातीफलमिश्रितैः सुस्वादुक्रमुकोपेतैः केतकिपत्र-पाण्डुरुचिरैः ताम्बूलवल्लीदलैः तन्मुखालङ्करणम्। स्वर्णाक्तपूगफल-मौक्तिक-चूर्णयुक्तं रत्न-स्थलीस्थित-स्वर्णस्तवकालङ्कृत-निर्जितस्वर्णवर्णताम्बूलवल्लीदलार्पणम्। विविधपटवासादि-समर्पणम्।

कोटिकोटि-दीपैर्नीराजनम्। महेन्द्रनीलमणिमये महति वियतिपात्रे स्थितैः कोटिकोटिसूर्यैः कोटिकोटिचन्द्रैः कोटिकोटिविद्युद्भिस्तथाभूतैः पावकैश्च

नीराजनम्। बहुमणिमिश्रैः मौक्तिकैः निर्मञ्छ्य त्रिभुवनकमनीयैः रत्नालङ्कृतैः पटवासवासितैस्तेजोमयैः सुगन्धिवासोभिस्तत्पूजनम्।

तदाननस्पर्धि-सुधांशुबिम्बचूर्णप्रतिभासि-जातीकुसुमोत्करार्पणम्। मुक्तामाणिक्यादिमिश्र-कनकवृष्टि-दक्षिणार्पणम्। नानारत्नविशोभि-हेमकलशोपशोभितं काञ्चनदण्डमण्डित - पूर्णेन्दुबिम्बप्रभ - भास्वन्मौक्तिकजालिकापरिवृत-लोकत्रयाह्लादक-दिव्यच्छत्रधारणम्। मणियुक्तैः विलसत्सुवर्णदण्डैः शरदिन्दुमरीचिगौरवर्णैश्चामरैर्वीजनम्।

दिव्यरत्नालङ्कृत - पल्याणोपशोभित - तुरगशतान्वित - वायुवेग-दिव्यहयार्पणम्। मधुकरवृत-कुम्भस्य न्यस्तसिन्दूर-रेणोः कनककलितघण्टस्य किङ्किणीशोभिकण्ठस्य श्रवणयुगलचञ्चच्चामरस्य मेघतुल्यस्य मत्तमातङ्गस्य वाहनार्थमर्पणम्। द्रुततरतुरगोपेतस्य मणिमयचक्रचतुष्टयोपेतस्य कनकवितानवतो रथस्य हय-गज-रथ-पत्तिशोभमानस्य दिशिदिशि दुन्दुभिमेघनादयुक्तस्य अभिनवचतुरङ्गसैन्यस्य चार्पणम्।

परिधीकृतसप्तसागरं बहुसंपद्युतं धरणीतलाभिधं दुर्गं समर्प्य अतिसौरभ्ययुतैः पीतपरागयुतैः स्वभावशीतैः सौगन्ध्यमधुलुब्धमिलिन्दझङ्कृतैः दिव्यकह्लारमयैर्व्यजनैर्वीजनम्। विविधैर्नृत्य-वादित्र-गीतादिभिस्तन्मनोरञ्जनम्।

अनन्तानि रत्नानि सुवर्णानि अनन्तानि धनानि दक्षिणार्थानि अनन्तानि मत्तरथानानि अनन्तानि वायुयानानि पुष्पकयानानि च अनन्तानश्वान् गजान् रथान् महामहासेना अनन्तान्यस्त्राणि शस्त्राणि अनन्तब्रह्माण्डसाम्राज्यानि च समर्प्य पदेपदे अश्वमेधादिफलदां प्रदक्षिणां पापाद्रिभेदनस्तवन-नमस्कारादिकं समर्प्य कण्ठे कनककमल-मालार्पणम्। चरणनलिनयुगमे पङ्कजानि शिरसि रत्नपुष्पाञ्जलिञ्च समर्प्य प्रसरदगुरुधूपैर्धूपिते मणिमयमञ्चकाभिरामे द्युतिमति पुष्पवितानराजमाने वासगृहे तन्निवासपरिकल्पनम्। कनकमये विस्तीर्णे मृदुलतरच्छदे तदुपवेशनम्। निर्जितपद्मरागयोः सरोजचिह्नयोः पादयोरतिरक्ततरैरलक्तकैः रञ्जनम्। कोटिकोटिसूर्यप्रभाणां सिंहासनानां तादृक्प्रभाभास्वराणां छत्राणां समर्पणम्। इत्थं महोमहोपकरणैः भगवतः सपर्याभावना विधेयेति दिक्।

: ९ :

# भगवद्धाम-रूपादीनां परब्रह्मात्मकत्वमेव

अथर्ववेदीय-'त्रिपाद्विभूतिमहानारायणोपनिषदि' सविस्तरं भगवल्लोकादिवर्णनं दृश्यते। तथा हि, तृतीयाध्याये—'चतुर्युगसहस्राणि ब्रह्मणो दिवा भवति। तावत्येव रात्रिः। तस्मिन्नेकस्मिन्नेव दिने आसत्यलोकान्तम् उदयस्थितिलया भवन्ति। पञ्चदशदिनैः पक्षः, तद्द्वयेन मासः। मासद्वयेन ऋतुः, तत्त्रयेण अयनम्। स्थित्यन्ते अण्डविराट्पुरुषः स्वांशं हिरण्यगर्भमभ्येति। पुनर्वत्सरशतं प्रलयो भवति। तदा जीवाः सर्वे प्रकृतौ प्रलीयन्ते। ब्रह्मणः स्थितिप्रलया आदिनारायणस्यांशेन अवतीर्णस्य अण्डपरिपालकस्य महाविष्णोरहोरात्रसंज्ञकौ। ते अहोरात्रे दिनमेकं भवति। तादृग्दिनादिमानेन शतकोटिवत्सरकालस्तस्य स्थितिः, तदन्ते स महाविराट्पुरुषमभ्येति। ततः सावरणं ब्रह्माण्डं विनाशमेति तावानेव तत्प्रलयकालः। तौ स्थितिप्रलयकालौ आदिविराट्पुरुषस्य अहोरात्रिसंज्ञकौ। ते अहोरात्रे एकं दिनं भवति। तदीयमानेन शतकोटिवत्सरकालस्तस्य स्थितिः। तादृशौ स्थितिप्रलयौ मूलाविद्यापरिपालकस्य आदिनारायणस्य अहोरात्रिसंज्ञकौ दिनम्। तस्यापि तदीयमानेन शतकोटिवत्सरकालः स्थितिः। तस्य स्थित्यन्ते त्रिपाद्विभूतिनारायणस्य इच्छावशान्निमेषो जायते। तस्मात् मूलाविद्याण्डस्य सावरणस्य विलयो जायते। ततः सविलासा मूलाविद्या सर्वकार्योपाधिसमन्विता सदसद्विलक्षणाऽनिर्वाच्या अनाद्यखिलकारणकारणा अनन्तमहामायाविशेषिता परा सूक्ष्ममूलकारणमव्यक्तं विशति। अव्यक्तं ब्रह्मणि विशति। तदा मायोपाधिकं आदिनारायणस्वरूपं भजते। यथा रक्तपुष्पोपाधिना रक्तस्फटिकप्रतीतिः, तदभावे तु स्फटिकप्रतीतिस्तथा ब्रह्मणोऽपि मायोपाधिविलयात् निर्गुणनिरवयवब्रह्मस्फुरणम्।

तत्रैव द्वितीयाध्याये—आविद्यकाखिलकार्यकारणजालस्य अविद्यापाद एव सत्त्वेन समस्ताविद्योपाधिकस्य साकारत्व, सावयवत्वादनित्यत्वमेवोक्तम्। निरुपाधिकसाकारस्य ब्रह्मविद्यासाकारानन्द-साकारोभयात्मकसाकारभेदेन त्रैविध्यमुक्तम्। तत्रापि नित्यसाकारस्य आद्यन्तशून्यत्वेन शाश्वतत्वमुक्तम्। मुक्तसाकारस्य ऐच्छिकशाश्वतत्वमुक्तम्। उपासनया ये मुक्तिं यान्ति, तेषां मुक्तसाकारत्वम्। यथा सर्वगतस्य निराकारस्य महावायोश्च तदात्मकस्य स्वरूपतित्वेन प्रसिद्धस्य साकारस्य वायुदेवस्य च भेद एव श्रूयते, पृथिव्यादीन

व्यापकशरीराणां देवविशेषाणाञ्च यथा भेदस्तद्वदेव सर्वात्मकस्य ब्रह्मणः साकारनिराकारभेदविरोधो नास्त्येव। विविधविचित्रानन्तशक्तेः परब्रह्मणः स्वरूपज्ञानेन विरोधो नास्ति, तदभावे तु विरोधानन्त्यमेव।

श्रीगुरुहरिकृपया मायामयात् प्रपञ्चाद्विरज्य भगवन्तमाराध्य प्राकृतदेहमपहाय मन्त्रमयं ब्राह्मतेजोमयनन्दमयमहाविष्णुसारूप्यविग्रहं प्राप्य सूर्यमण्डलान्तर्गत-परमपुरुषदिव्यचरणारविन्दाङ्गुष्ठनिर्गत-निरतिशयानन्दमय-गाङ्गप्रवाहमाकृष्य भावनया स्नात्वा विविधचिन्मय-वसनालङ्करणालङ्कृतो दिव्यवाहनैरन्वितः सत्यलोकमाविश्य ध्रुवादिकं सन्दृश्य सम्पूज्य शिशुमारचक्रं निर्भिद्य क्रमेण वैकुण्ठं गच्छति।

तत्र ब्रह्मानन्दमयानन्तप्रकाश-प्राकारप्रासाद-तोरणविमानोपवनावलिभिः ज्वलच्छिखैरुपलक्षितो निरुपम - निरतिशय - नित्यनिरवद्य - ब्रह्मानन्दाचलो विराजते। तदुपरि निरतिशयानन्ददिव्यतेजोराशिः, तदन्तः शुद्धबोधानन्दः। तदन्तराले चिन्मयवेदिका। तत्र चानन्दविभूषिता आनन्दवेदिका। तदन्तरमिततेजोरा शर्व्वलति। तत्र परममङ्गलासन-तत्पद्मकर्णिकायां शुद्धशेषभोगासनम्। तत्र समासीनमादिनारायणं दृष्ट्वा कृतकृत्यो भवति।

सावरणं ब्रह्माण्डं भित्त्वा महदादिसमष्ट्याकारमण्डं तपनीयमयं तप्तजाम्बूनदप्रभम् उद्यत्कोटिदिवाकराभं महाभूतैः परिवृतं महदहङ्कृतितमोभिः मूलप्रकृत्या च परिवेष्टितं नारायणक्रीडाकौतुकम्, तथैव अनन्तानन्तानि ब्रह्माण्डानि प्रज्वलन्ति। चतुर्मुख-पञ्चमुखादि-सहस्रावधिमुखान्तैः विधातृभिरधिष्ठितानि जलयन्त्रस्थघटमालिकाजालवत् महाविष्णोरेकैक-रोमकूपान्तरेषु तानि तानि अनन्तानन्तानि ब्रह्माण्डानि विराजन्ते।

सर्वं ब्रह्मात्मकमिति बुद्ध्वा अनन्तानन्त-तमःसागरमुत्तीर्य मूलाविद्यापुरं पश्यति। विविधविचित्रानन्तमहामायाविशेषैः परिवेष्टितानन्तमहामायाशक्तिसमष्ट्याकाराम् अनन्तदिव्यतेजोज्वालाजालैरलङ्कृताम् अनन्तानन्तमहामायाविलासानां परमाधिष्ठानविशेषाकारां शश्वदमितानन्तानन्दाचलोपरि विहारिणीं मूलप्रकृतिजननीं महामायां पश्यति। तदाराधनप्रभावात्ततोऽपि परं गत्वा महाविराट्पदं विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् इत्यादिलक्षणं मनोवाचामगोचरं दृष्ट्वा ततोऽखण्डपरिपूर्णपरमानन्दलक्षणं परब्रह्मणः समस्तस्वरूपविरोधकारिणीमपरिच्छिन्नतिरस्करिण्याकारां वैष्णवीं महायोगमायां पश्यति।

तस्याः पुरमतिकौतुकमत्याश्चर्यसागरानन्दलक्षणममृतं भवति। तत्प्रतिबिम्बितनित्यवैकुण्ठप्रतिवैकुण्ठमिव विभाति। ततः पादविभूतिवैकुण्ठपुर-

माभाति। अत्याश्चर्यानन्तविभूतिसमष्ट्याकारमानन्दरसप्रवाहैरलङ्कृतम् अभितस्तरङ्गिण्याः प्रवाहैरतिमङ्गलम्, ब्रह्मतेजोविशेषाकारैरनन्तब्रह्मवनैरभितःस्ततम्, नित्यमुक्तैरभिव्याप्तम्, अनन्तचिन्मयप्रासादजालसङ्कुलतत्पादविभूतिवैकुण्ठं भाति। तन्मध्ये चिदानन्दाचलो विभाति। तदुपरि ज्वलति निरतिशयानन्ददिव्यतेजोराशिः। तदभ्यन्तरे परमानन्दविमानम्। तदन्तश्चिन्मयासनम्। तत्पद्मकर्णिकायां निरतिशयदिव्यतेजोराश्यन्तरसमासीनं नारायणं पश्यति।

ततोऽविद्याण्डं भित्त्वा विद्यापादमुल्लङ्घ्य विद्याविद्ययोः सन्धौ विष्वक्सेनवैकुण्ठपुरम् अनन्तदिव्यतेजोज्वालाजालैरभितः प्रज्वलन्तम्, अनन्तबोधाम्बरबोधानन्दव्यूहैरभितस्ततम्, शुद्धबोधविमानावलिभिर्विराजितम्, अनन्तानन्तपर्वतैरलङ्कृतमाभाति। तन्मध्ये कल्याणाचलोपरि शुद्धानन्दविमानम्। तत्र दिव्यमङ्गलासनम्। तत्पद्मकर्णिकायां परमनन्दस्वरूपं विष्वक्सेनं पश्यति।

ततो विद्याविभूतिं प्राप्य विद्यामयानन्तवैकुण्ठान् ब्रह्मतेजोमयानवलोक्य विद्यामयाननन्तान् समुद्रांस्तीर्त्वा ब्रह्मविद्यातरङ्गिणीमासादयति। तत्र स्नात्वा मन्त्रमयदेहं परित्यज्य विद्यानन्दमयामृतदिव्यशरीरं परिगृह्य नारायणसारूप्यं प्राप्य ब्रह्मविद्याप्रवाहैरानन्दरसनिर्भरैः क्रीडानन्दपर्वतैरभिव्याप्तं ब्रह्मविद्यामयैः सहस्रप्राकारैरानन्दामृतमयैः दिव्यगन्धस्वभावैश्चिन्मयैरनन्तब्रह्मवनैरतिशोभितं ब्रह्मविद्यावैकुण्ठमाविशति।

तदभ्यन्तरस्थिताऽत्यन्तोन्नतबोधानन्द - प्रासादाग्रस्थित-प्रणवविमानोपरिस्थिताम् अपारब्रह्मविद्यासाम्राज्याधिदेवताम् अमोघनिजमन्दकटाक्षेण अनादिमूलाविद्याप्रलयकरीम् अद्वितीयामेकामनन्तमोक्षसाम्राज्यलक्ष्मीं दृष्ट्वा सम्पूज्य ततो ब्रह्मविद्यातीरे गत्वा बोधानन्दमयाननन्तान् वैकुण्ठानालोक्य निरतिशयानन्दं प्राप्य बोधानन्दमयाननन्तान् समुद्रानतिक्रम्य ब्रह्मवनेषु परममङ्गलश्रेणीषु ततो बोधानन्दविमानपरम्परां पश्यन् परमानन्दं प्राप्नोति।

तदुपरि परमकल्याणमनन्तविभवम् अमिततेजोराश्याकारम् अनन्तब्रह्मतेजोराशिसमष्ट्याकारं चिदानन्दमयानेकप्राकारविशेषैः परिवेष्टितम् अमितबोधानन्दाचलोपरि स्थितं बोधानन्दतरङ्गिण्याः प्रवाहैरतिमङ्गलं निरतिशयानन्दैरनन्तवृन्दावनैरतिशोभितम् अखिलपावनानां पावनम्, चिद्रूपैर्नित्यमुक्तैरभिव्याप्तम् आनन्दमयानन्तविमानजालैरलङ्कृतम्, अमिततेजोराश्यन्तर्गतदिव्यतेजोराशिविशेषं तुलसीपुरवैकुण्ठं प्रविशति।

तदन्तर्गतदिव्यविमानोपरि स्थितां महाविष्णोः सर्वाङ्गविहारिणीं निरतिशयसौन्दर्यलावण्याधिदेवतां बोधानन्दमयैरनन्तनित्यपरिजनैः परिसेवितां श्रीसखीं तुलसीं लक्ष्मीं संपूज्य ततस्तदुपरि गत्वा तदनुगृहीत उपासकः परमा-

नन्दतरङ्गिण्यास्तीरे परितः स्थितान् शुद्धबोधानन्दमयान् अनन्तवैकुण्ठाना-लोक्य निरतिशयानन्दं प्राप्नोति।

ततोऽप्युपरि दिव्यगन्धपुष्पवृष्टिसमन्वितेषु दिव्यमङ्गलालयेषु ब्रह्मवनेषु निरतिशयानन्तानन्दसागरेषु दिव्यतेजोराश्याकारेषु कल्लोलवनसङ्कुलेषु ततोऽनन्तशुद्धबोधविमानजालसङ्कुलानन्दाचलश्रेणीषु विहरति।

ततोऽप्युपरि गत्वा विमानपरम्परासु अनन्ततेजःपर्वतराजिषु विहरन् विद्यानन्दमययोः सन्धिं प्राप्नोति। यत्र आनन्दतरङ्गिण्याः प्रवाहेषु स्नात्वा बोधानन्दवनं प्राप्य सततामृतपुष्पवृष्टिभिः परिवेष्टितं परमानन्दप्रवाहैरभि-व्याप्तं मूर्तिमद्भिः परममङ्गलैरन्वितमपरिच्छिन्नानन्दसागराकारं क्रीडानन्द-पर्वतैरतिशोभितं शुद्धबोधपरमानन्दाकारवनं पश्यति।

तत्र शुद्धबोधानन्दवैकुण्ठं सहस्रानन्दप्राकारैर्जाज्वल्यमानं विभाति। तत्र अनन्तानन्दविमानजालसङ्कुलमनन्तबोधसौधैः प्रोज्ज्वलमनन्तक्रीडामण्डपा-न्वितं बोधानन्दलयाऽनन्तच्छत्र-ध्वज-चामर-वितान-तोरणालङ्कृतं परमानन्द-व्यूहैर्नित्ययुक्तैः शोभितं दिव्यतेजःपर्वतसमष्ट्याकारम् अपरिच्छिन्ना-नन्तशुद्धबोधानन्दमण्डलं वाचामगोचरमानन्दब्रह्मतेजोराशिमण्डलम् अखण्ड-चिद्घनानन्दविशेषं बोधानन्दवैकुण्ठं प्रविश्य परमानन्दाचलोपरि अखण्ड-बोधविमानं पश्यति।

तत्र चिन्मयासनम्। तदुपरि विभाति अखण्डतेजोमण्डलम्।

तत्र समासीनमादिनारायणं दृष्ट्वा विविधोपचारैः सम्पूज्य संस्तौति। भगवानादिनारायणश्च तं स्वसिंहासने समुपवेश्य स्वचिह्नैरलङ्कृत्य अभि-षिञ्चति। तदाज्ञया प्राप्तगरुडमारूढमहासुदर्शनं पुरस्कृत्य विष्वक्सेनपरि-पालितः उपर्युपरि गत्वा ब्रह्मानन्दविभूतिं प्राप्य सर्वत्रावस्थितान् ब्रह्मानन्द-मयान् अनन्तवैकुण्ठानवलोक्य निरतिशयानन्दसागरो भूत्वा आत्मारामानन्द-विभूतिपुरुषात् अनन्तानवलोक्य तानभिपूज्य तदुपरि ब्रह्मानन्दविभूतिं प्राप्य अनन्तदिव्यतेजःपर्वतैरलङ्कृतान् परमानन्दलहरीवनशोभितान् आनन्द-समुद्रानतिक्रम्य विविधविचित्रानन्त-परमतत्त्वविभूति-समष्टिविशेषान् परम-कौतुकान् ब्रह्मानन्दविभूतिविशेषानतिक्रम्य परमकौतुकं प्राप्नोति।

ततो नित्यमङ्गलमनन्तविभवं सहस्रानन्दप्राकारपरिवेष्टितम् अयुतकुक्ष्यु-पलक्षितम् अनन्तोत्कटज्वलदरमण्डलं निरतिशयदिव्यतेजोमण्डलवृन्दारक-परमानन्दं शुद्धबुद्धस्वरूपमनन्तानन्दसौदामिनीपरमविलासं निरतिशयानन्द-पारावारम् अनन्तैरानन्दपुरुषैश्छिद्रपैरधिष्ठितं सुदर्शनवैकुण्ठपुरं पश्यन्ति।

तन्मध्ये सुदर्शनं महाचक्रम्...—अयुतारमयुतसमष्ट्याकारं निरतिशय-

विक्रमविलासम् अनन्तदिव्यायुध-दिव्यशक्तिसमष्टिरूपं महाविष्णोरनर्गल-प्रतापं विग्रहमयुतकोटियोजनविशालम् अनन्तज्वालाजालैरलङ्कृतं समस्तदिव्य-मङ्गलनिदानम् अनन्तदिव्यतीर्थानां निजमन्दिरं सुदर्शनचक्रं प्रज्वलति। तस्य नाभिमण्डले निरतिशयानन्दतेजोराशिः प्रज्वलति। तत्र सहस्रारचक्रं प्रज्वलति। तदखण्डदिव्यतेजोमण्डलाकारं परमानन्दसौदामिनीनिचयोज्ज्वलम्।

तत्र षट्शतारचक्रं तस्यामितपरमतेजःपरमविहारसंस्थानविशेषं विज्ञानघनस्वरूपम्। तदन्तराले त्रिशतारचक्रं विभाति। तच्च परमकल्याणविलासविशेषम् अनन्तचिदादित्यसमष्ट्याकारम्। तत्र शतारचक्रम्। तच्च परमतेजोमण्डलविशेषम्। तन्मध्ये षष्ट्यारचक्रं ब्रह्मतेजःपरमविलासमयम्। तन्मध्ये अपरिच्छिन्नानन्तदिव्यतेजोराश्याकारं षट्कोणचक्रम्। तत्र महानन्दपुरं विभाति। तदभ्यन्तरे चिन्मयानि सूर्येन्दुवह्निमण्डलानि। तत्र निरतिशयदिव्यतेजोराशिः। तत्र युगपदुदितानन्तकोटिरविप्रकाशो महाविष्णुस्वरूपः सुदर्शनपुरुषो विराजते। तं सम्पूज्य तदनुगृहीतस्ततोऽपि उपरि गत्वा परमानन्दमयाननन्तान् वैकुण्ठानवलोक्य तदुपरि विविधविचित्रान् चिद्विलासविभूतिविशेषानतिक्रम्य अनन्तपरमानन्दविभूति-समष्टिविशेषान् अनन्तसमुद्रानतीत्य क्रमेणाद्वैतस्थानं प्राप्नोति।

तच्च अखण्डानन्दस्वरूपम् अनिर्वाच्यममितबोधसागरम् अमितानन्दसमुद्रं विजातीयविशेषवर्जितं सजातीयविशेषविशेषितं निरवयवं निराधारं निर्विकारं निरञ्जनमनन्तब्रह्मानन्दसमष्टिकन्दं परमचिद्विलासं निर्मलं निरवद्यं निराश्रयम् अतिनिर्मलानन्दकोटिरविप्रकाशैकविस्फुलिङ्गम् अनन्तोपनिषदर्थस्वरूपम् अखिलप्रमाणातीतं मनोवाचामगोचरं निजमुक्तस्वरूपमनाधारम् आदिमध्यान्तशून्यं कैवल्यं परमं शान्तं सूक्ष्मतरं महतो महत्तरम् अपरिमितानन्दविशेषं शुद्धबोधानन्दविभूतिविशेषम् अनन्तानन्दविशेषसमष्टिरूपम् अक्षरमनिर्देश्यं कूटस्थमचलं ध्रुवम् अदिग्देशकालमन्तर्बहिश्च व्याप्य परिपूर्णं सर्वविधपरिच्छेदशून्यं निरन्तराभिनवं नित्यपरिपूर्णमखण्डानन्दामृतविशेषं शाश्वतं निरतिशयानन्त-तडित्पर्वताकारमद्वितीयमनिशं ज्वलति।

तदभ्यन्तरे अमितानन्दचिद्रूपम् अचलाखण्डपरमानन्दविशेषं बोधानन्दमहोज्ज्वलं नित्यमङ्गलमन्दिरं चिन्मथनाविभूतं-चित्सारमनन्ताश्चर्यसागरम् अतितेजोराश्यन्तर्गततेजोविशेषम् अनन्तानन्दप्रवाहैरलङ्कृतं निरतिशयानन्दपारावाराकारं निरुपम-नित्य-निरवद्य-निरतिशय - निरवधिक-तेजोराशिविशेषं निरतिशयानन्दसहस्र-प्राकारैरलङ्कृतं चिदानन्दमयानन्तदिव्यारामैः सुशोभितं शश्वदमितपुष्पवृष्टिभिः समन्ततः सन्ततम्, तदेव त्रिपाद्विभूति-वैकुण्ठस्थानम्। तदेव परमकैवल्यम्। तदेव अबाधितपरमतत्त्वम्। तदेव सद्धनं

चिद्घनं तदेवा वाऽऽनन्दघनं तदेव शुद्धबोधघनविशेषमखण्डानन्दब्रह्मचैतन्याधिदेवतास्वरूपं सर्वाधिष्ठानमद्वयपरमविहारमण्डलं निरतिशयानन्दतेजोमण्डलमद्वैतं परमानन्दलक्षणम्।

तत्र सहस्रकोटियोजनायतोन्नतचिन्मयप्रासादं ब्रह्मानन्दमयकोटिभिरतिमङ्गलम् अनन्तोपनिषदर्थारामजालसङ्कुलं सामहंसकूजितैरतिशोभितमानन्दमयानन्तशिखरैरलङ्कृतं चिदानन्दरसनिर्झरैरतिव्याप्तम् अखण्डानन्ततेजोराश्यन्तःस्थितम् आनन्दाश्चर्यसागरम्।

तदभ्यन्तरे अनन्तकोटिरविप्रकाशातिशयप्राकारं निरतिशयानन्दलक्षणं प्रणवाख्यं विमानं विराजते। तच्च शतकोटिशिखरैरानन्दमयैः समुज्ज्वलति। तदन्तराले बोधानन्दाचलोपरि अष्टाक्षरी-मन्त्र-मण्डपम्। तत्र आनन्दवनविभूषिता चिदानन्दमयी वेदिका। तदुपरि निरतिशयनन्दतेजोराशिः। तदभ्यन्तरे अष्टाक्षरीपद्मविभूषितं चिन्मयासनं विराजते। प्रणवकर्णिकायां सूर्येन्दुवह्निमण्डलानि चिन्मयानि ज्वलन्ति।

तत्र अखण्डतेजोराश्यन्तर्गतं परममङ्गलाकारमनन्तासनं विराजते। तस्योपरि निरतिशयब्रह्मानन्दपरममूर्तिमहायन्त्रम्। तत्र निरञ्जनपरब्रह्मस्वरूपं ब्रह्मणः परमरहस्यकैवल्यं परमवैकुण्ठनारायणयन्त्रं विजयते। तत्रानेके मन्त्रा महामन्त्राश्च विद्यन्ते। तदुपरि निरतिशयानन्दतेजोराश्यभ्यन्तरसमासीनं वाचामगोचरानन्दतेजोराश्याकारं चित्साराविभूतानन्दविग्रहं बोधानन्दस्वरूपं निरतिशयसौन्दर्यानन्दपारावारं लावण्यवाहिनीकल्लोलतडिद्भासुरं दिव्यमङ्गलविग्रहं मूर्तिमद्भिः परममङ्गलैरुपसेव्यमानं चिदानन्दमयैः अनन्तकोटिरविप्रकाशैः अनन्तभूषणैरलङ्कृतम्।

चिन्मयैः सर्वैरायुधैः पार्षदैश्च सेवितम्, नानाविधाभिः शक्तिभिः श्रीवत्सकौस्तुभवनमालादिभिश्च अलङ्कृतं ब्रह्मकल्पवनामृतपुष्पवृष्टिभिः सन्ततं ब्रह्मानन्दरसनिर्भरैः असंख्यैरतिमङ्गलं शेषायुतफणाजालविपुलच्छत्रशोभितं तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहं तदङ्गकान्तिनिर्झरैस्ततं निरतिशयब्रह्मगन्धस्वरूपम् अनन्तानन्दतुलसीमाल्यैरभिनवं चिदानन्दमयानन्तपुष्पमाल्यैः अलङ्कृतं तेजःप्रवाहतरङ्गतत्परम्पराभिर्ज्वलन्तं निरतिशयानन्दं कान्तिविशेषावर्तैरभितोऽनिशं प्रज्वलन्तं बोधानन्दधूपदीपावलिभिरतिशोभितं निरतिशयानन्दचामरविशेषैः परिसेवितं निरन्तरनिरुपमनिरतिशयोत्कटज्ञानानन्दानन्तगुच्छफलैरलङ्कृतं चिन्मयानन्ददिव्यविमानच्छत्रध्वजराजिभिः विराजमानपरममङ्गलानन्तदिव्यतेजोभिर्ज्वलन्तं निर्गुणं निष्क्रियं निर्मलं निरञ्जनं निरतिशयानन्दलक्षणं भगवन्तं ध्यायेत्।

यथा सुवर्णस्यैव कटकमुकुटाङ्गदादिभेदः, सलिलस्यैव सूक्ष्म-स्थूल-तरङ्ग-फेन-बुद्बुदादिभेदः, भूमेरेव पर्वत-वृक्ष-तृण-गुल्मादिभेदः, तथैवैकस्य शुद्धब्रह्मण एव तल्लोकविग्रहभूषणालङ्कारादयः। एकस्य ब्रह्मणः कथं तद्विरुद्धवैकुण्ठप्रासाद-प्राकारविमानाद्यनन्तभेद इति पितामहप्रश्नस्य तथैवोत्तरणात्। त्रिपाद्विभूति-महानारायणोपनिषदि एकस्मिन्नविद्यापादेऽनन्तकोटिब्रह्माण्डानि सावरणानि श्रूयन्ते, एकस्मिन्नण्डे बहवो लोकाश्च बहवो वैकुण्ठाः सन्तीति सर्वेषां सत्त्वमभिमतम्। पादत्रयेऽपि किं वक्तव्यम्, निरतिशयानन्दाविर्भावो मोक्ष इति मोक्षलक्षणम्। पादत्रयमेवातिपादत्रयं परमवैकुण्ठः, तदेव परमकैवल्यम्। ★

: १० :

# निराकार-ब्रह्मप्रतिपत्तेरपि भक्तिरूपत्वम्

निर्देश्य-निर्विशेष-ब्रह्मसाक्षात्काराय सगुणसाकारस्य भगवतोऽनन्त-सौन्दर्यमाधुर्य-सारसर्वस्वमयी श्रीमूर्तिः ध्येयत्वेनोक्ता । तथान्ते प्रहसितस्य ध्यानमुक्त्वा तत्रैव भक्त्यार्द्रयाऽर्पितमना न पृथग् दिदृक्षेत इत्युक्तम् । ततः श्रोक्तम्—

एवं हरौ भगवति प्रतिलब्धभावो
भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ।
औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमान-
स्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥

अस्यार्थः श्रीधरस्वामिरीत्या—एवं ध्यानमार्गेण हरौ प्रतिलब्धो भावः प्रेम येन सः । तथा भक्त्या द्रवद् हृदयं यस्य सः । तथा प्रमोदद्दुद्गतानि पुलकानि यस्य सः । तथा औत्कण्ठ्येन प्रवृत्तया बाष्पस्याश्रुणः कलया मुहुरर्द्यमान आनन्दसम्प्लवे निमज्जमानो दुर्ग्रहस्य भगवतो ग्रहणे बडिशं मत्स्यवेधनमिव उपायभूतं चित्तमपि ध्येयाद्वियुङ्क्ते । तद्धारणे शिथिलप्रयत्नो भवतीत्यर्थः ।

यथा दुर्ग्रहस्य मत्स्यस्य ग्रहणाय बडिशः प्रयुज्यते, तथैव निर्गुणस्य निर्विशेषब्रह्मणो ग्रहणाय चित्तं प्रयुज्यते । तदर्थमेव निर्बीजः सबीजश्चेति द्विविधो योगो भवति । तत्र—

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥

इति निर्बीजयोग उक्तः । सबीजे तु परमानन्दमूर्तौ हरौ ध्यायमानेऽयत्नत एव चित्तोपरमो भवति । तदुक्तं श्रीमद्भागवते ( ३.२५.३६ )—

हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते । इति ।

चित्तस्य विषयाद् वियोजनमतीव दुष्करं भवति । तत्र पूर्वं भगवत्सौन्दर्य-माधुर्याद्याकृष्टतया अलौकिकेभ्यो विषयेभ्यश्चित्तवियोजनमनायासेन सिद्ध्यति । परमानन्दरससारसर्वस्वमयात् मनःपरिकल्पिताद् भगवतः श्रीविग्रहधनजनित-प्रेमानन्दोद्रेकेण च प्रयत्नशैथिल्यम् । प्रयत्नशैथिल्येन च ध्येयो ग्रहीतुं न शक्यते । ध्येयाकारवृत्तिव्यापारस्य प्रयत्नसाध्यत्वात् ध्यानवृत्त्यभावे ध्याना-श्रयस्य ध्यातुरपि सत्त्वं न सिद्ध्यति । तथा च ध्यानाश्रयस्य ध्यातुर्ध्यान-

विषयस्य ध्येयस्य चाभावे ध्यानमयं चित्तमपि विषयाश्रयशून्यं सत् तैलवर्त्य-भावे यथा दीपशिखा प्रविलीयते महाभूतमये ज्योतिषि, तथैव ब्रह्मणि प्रविलीयते। एवं प्रयत्नशैथिल्येन ध्येयरूपविषयस्य ग्रहणेऽसमर्थत्वात् अन्यस्य विषयस्य च पूर्वमेव त्यक्तत्वात् निर्विषयं भवति चित्तम्। ध्येयसम्बन्धं विना ध्यातरि अवस्थानासम्भवात् निराश्रयञ्च भवति।

न च पूर्ववत् पुनरपि शब्दादिस्तस्य विषयः सम्भवति; परमानन्दानुभवेन ततो विरक्तत्वात्। ततो वृत्तिरूपतां परित्यज्य निर्वाणं लयं गच्छति, ब्रह्माकारेण परिणमते, यथा अर्चिर्ज्वालाश्रय-विषयापगमे महाभूत-ज्योतीरूपेण परिणमते। तदानीमव्यवधानेन ध्यातृध्येयविभागशून्यम् एकमखण्डमात्मानं समनुगतमीक्षते, प्रतिनिवृत्तदेहाद्युपाध्याकारगुणप्रवाहत्वात्।

एवं सम्प्रज्ञातस्य निरोधे प्रविलये सति सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलयात् आसंस्कारमात्रा वृत्तिरुदेति। तस्यां 'नेति नेतो'गति पर्युदसनात् निर्बीजः समाधिर्भवति। तदा पुरुषो वृत्तिसारूप्यमपहाय स्वरूपनिष्ठो भवति। तदुक्तम्—

मुक्ताश्रयं यर्हि निर्विषयं विरक्तं
निर्वाणमृच्छति मनः सहसा यथार्चिः।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः॥ इति।

स च सुप्तोत्थित इव पुनः संसरति। महावाक्यजन्यया ब्रह्माकारया मनसश्चरमया वृत्त्या अविद्यासहितस्य मनसो निवृत्तत्वात्। सुषुप्तौ अविद्या-शेषत्वात् पुनः संसरणम्। अत्र तु न तस्यानिवृत्तिरिति विशेषः। यथा जन्मनैव आकाशपूर्णस्य घटस्य रजोधूमादिभिरागन्तुकैः उपाधिभिरेव आकाश-राहित्यं भाति, तथैव जन्मनैव ब्रह्माकारस्य चित्तस्य प्रपञ्चाकारतायामेव ब्रह्मा-नाकारता प्रतीयते। विषयापगमे तु चित्तस्य स्वाभाविकी ब्रह्माकारतैव भाति।

श्रीजीवगोस्वामि-विश्वनाथचक्रवर्त्यादिरीत्या पृथङ् न दिदृक्षेत् इत्युक्त्या अतः पुरुषार्थसारादन्यस्य वस्तुनोऽसम्भवात् पृथक् ज्ञातुं द्रष्टुञ्च नेच्छेत्। भगवत्स्वरूप-सौन्दर्यमाधुर्यास्वादा-ऽऽनन्दसम्मोह एव परमः समाधिः। योग-महागह्वरात् योगिनोऽप्याकृष्य भक्तिरससुधामहार्णवे निमज्जयितुमेव योगाङ्गत्वेन परमभक्तिरूप-भगवत्स्वरूप-सौन्दर्यध्यानवर्णनम्। अत एव याग-ज्ञानादिनिष्ठा अपि भगवतः स्वरूपे रज्यन्ते।

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया।
गृहीतचेता राजर्षे आख्यानं यदधीतवान्॥

स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावो-
ऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।
अद्वैतवीथीपथिकैरुपास्याः स्वाराज्यसिंहासनलब्धदीक्षाः ।
शठेन केनापि वयं हठेन दासीकृता गोपवधूविटेन ॥

एतद्रीत्या कश्चिदतिमन्दो महदननुगृहीत एवैतां ध्यानमाधुरीमुपभुज्यापि अलब्धास्वादनिष्ठो जिहासति। स एव वियुङ्क्ते चित्तं श्रीविग्रहात् । भक्तिरसवञ्चितः स भक्त्यैव दीयमानं निर्दुःखं प्रत्यगात्मानुभवात्मकं मोक्षं प्राप्नोति, न तु ब्रह्मानन्दानुभवात्मकं मोक्षं प्राप्नोति । एतद्रीत्या श्लोकार्थोऽपीत्थम्—

हरौ भगवति मनोहरत्वात् भगषट्कवत्त्वात् माधुर्यैश्वर्यपूर्णेऽपि प्रतिलब्धभावः श्लेषेण प्रतिरूपतयैव न त्वनुरूपतया । द्रवद्धृदयोऽपि उत्पुलकोऽपि बाष्पकलया मुहुरर्द्यमानोऽपि । तस्मादपि स्वरूपात् चित्तबडिशं वियुङ्क्ते वियोजयतीति ।

यद्यपि ज्ञानञ्च मयि संन्यसेत् इति ज्ञानस्य संन्यासविधानं दृश्यते ; तथापि भक्तिसंन्यासविधानं न कुत्रापि दृश्यते। प्रत्युत भक्त्यार्द्रं यार्ऽपितमना न पृथग् दिदृक्षेत् इति निषेधसद्भावादयं मन्दधीः स्वेच्छयैव वियोजयति । वियुञ्ज्यादिति विध्यप्रयोगात्, विषयरसौत्कण्ठ्यदूरीकरणार्थं भगवन्माधुर्ये निःक्षिप्तं यच्चित्तं तस्य तन्माधुर्यौत्कण्ठ्यस्यापि निवृत्तये तच्चित्तं ततोऽपि निवर्तयति । शनकैरित्यनेन सम्यग्युक्तत्वे वियोजनं दुर्घटमेव । अतः शनैः शनैः चतुष्पञ्चवारेण सप्ताष्टवारेण वाऽवश्यं वियोजयति ।

बडिशमश्मसारमयं भवति । तन्न नवनीतादिवद् द्रवीभवति। किन्तु वह्नितापाधिक्यात् किञ्चिद् द्रवदेव तत्क्षण एव पुनः कठोरमपि भवति । अत एव 'द्रवद्धृदय' इत्युक्तम् , न तु 'द्रुतहृदय' इति ।

बडिशं यथा मत्स्यग्रहणार्थं गङ्गादितीर्थजलस्नानपरमपि कुटिलमरसञ्च भवति, मीनलोभनमिष्टपिष्टखण्डावृतमुखत्वाद् दाम्भिकञ्च, तथैव विगीतयोगिनश्चित्तं तीर्थपूतमपि कुटिलं कठोरञ्च भवति, भगवदाकर्षक ध्यानभक्त्यावृतमुखत्वाद् दाम्भिकञ्च, धर्मः प्रोज्झितकैतव ·····इत्यत्र मोक्षाभिसन्धेरपि कैतवत्वेन व्याख्यानात् । कैवल्यच्छादोषादेव सर्वश्रेष्ठाऽपि ध्यानरूपा श्रीभक्तिदेवी योगाङ्गत्वेन उपासिताऽपि पश्चात्त्यक्ता । गीतोक्त-चित्तबडिशदृष्टान्तेन बडिश-जीव-धीवरत्वमस्य योगिनो ध्वनितम् । योगिचित्तबडिशस्य स्पर्शो भगवतोऽपि कष्टकरः । तत एव भगवानेव तस्मै हारिततादृशचित्तबडिशाय योगिधीवराय प्रत्यगात्मानुभवाख्यमेव मोक्षं ददाति, न ब्रह्मानन्दात्मकम् । यस्तु गीतोक्तो योगी भगवद्ध्यानमजहदेव दृष्टस्तस्मै तु उभयमपि ददाति । योग्ययोगादिनिष्ठस्तु न भगवन्मधुररूपाच्चित्तं वियोक्तुमीष्टे । तदुक्तम्—

धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति।
मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा॥ इति।

श्रीमद्भागवते ( ११. २९. ५ ) उद्धवेन चोक्तम्—

कं त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद् विसृजेत को नु। इति।

श्रीनारदेनाप्युक्तम्—

स्मरन् मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः। इति।

किञ्च अर्पितमना भगवते मनः समर्प्य तस्मिन् मनसि स्वत्वाभावात् कथं तस्माद्वियोजयेत्? कथं वा दत्तापहारी भवेत्? भगवानपि भक्तानामेव हृदि तिष्ठति, न योगिनाम्।

भक्त्या गृहीतचरणः परया च तेषां नापैति नाथ हृदयाम्बुरुहात् स्वपुंसाम्।
येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥
जीवन्मुक्ताः प्रपद्यन्ते पुनः संसारवासनाम्।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः॥

इति वासनाभाष्योक्तेश्च।

नानुव्रजति यो मोहाद् व्रजन्तं हरिमीश्वरम्।
ज्ञानाग्निदग्धकर्मापि स भवेद्ब्रह्मराक्षसाधमः॥

इत्यादिवचनैस्तस्य पतनं जीवन्मुक्त्यभावश्च प्रसज्यते।

वस्तुवस्तु—भगवद्व्यतिरिक्त-वस्तुदर्शनज्ञानादिकमेव 'न पृथग्दिदृक्षेदि'त्यनेन निषिद्धम्, आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् इत्युक्तेः। युगपत् सर्वस्वरूपचिन्तनासम्भवेन यथा सुस्मितमुखारविन्दचिन्तनावेशवशात् पादारविन्दचिन्तनत्यागोऽवश्यं भावी सौगन्ध्यचिन्तनकाले सौन्दर्यचिन्तनत्यागः, सौरस्यचिन्तनकाले तस्यापि त्यागः। शौर्यवीर्यप्रताप-सार्वज्ञ्यःसत्य-सङ्कल्पत्वाद्यचिन्त्यानन्त - कल्याणगुणगणचिन्तन-काले श्रीविग्रहचिन्तनत्यागः प्रसज्यत एव। न तावता तस्यापराधत्वम्। तथैव भगवतो निर्गुणस्वरूपचिन्तनेऽपि न दोषः। निर्गुणं मां गुणाः सर्वे भजन्ति निरपेक्षकम्. इत्युक्तिदिशा तस्य गुणैरपि आराध्यमानत्वात्।

यथा कौस्तुभादीनां भगवदलङ्काराणां यद्यपि लोकोत्तरं माहात्म्यम्; तथापि भगवदङ्गानि तेषामप्यलङ्कारभूतानि। '''भूषणभूषणाङ्गम्, कण्ठञ्च कौस्तुभमणेरधिभूषणार्थम् इत्याद्युक्तेः। यो भगवान् त्रिपुटीदशायां ध्येयरूपेण भासते, स एव ध्यातृ-ध्यानादित्रिपुट्यभावदशायां तत्साक्षिनिर्विशेष-परब्रह्मरूपेण भासते। तथा च भगवदवमानकल्पना वराकी कः समुदेति? तस्यापराधत्वे

तु पतनमेव स्यात्। इह तु तस्य जीवन्मुक्तिवर्णनं दृश्यते। अत एव रसिका अप्याहुः—यथा विषयिणां विषयानादराभावेऽपि निद्रावशात्तत्सेवने शैथिल्यं स्यात् तथा भगवतः श्रीविग्रहाद्यनादराभावेऽपि मुक्तिवासनावशात् तद्धारणे शिथिलप्रयत्नो भवतीति तस्य जीवन्मुक्तिवर्णनं सङ्गच्छते।

वस्तुतस्तु भगवत्स्वरूप-सौन्दर्य-माधुर्य-रसामृतावगाहनजनित-प्रेमानन्द-समुद्रेकवशादेव यथा कण्ठावरोधो वाक् च गद्गदा जायते, तथैव चित्त-प्रयत्नशैथिल्यादेव ध्येयाकारवृत्त्यजननेन ध्येयास्फुरणं भवति त्यागप्रयत्न-मन्तरैव। अन्यत्र सर्वविषयाभानं महता प्रयत्नेनापि दुष्करम्। इह तु प्रेमोद्रेक-जनितप्रयत्नशैथिल्येनैव तत्सम्पद्यते। तदानीमेव जिज्ञासोः महावाक्याद्य-भ्याससंस्कारवतोऽनायासेन भगवत एव निर्गुणस्वरूपसाक्षात्कारो जायते। ज्ञानिनाञ्चापि पुनः पुनः सगुण-निर्गुणस्वरूप-माधुर्यानुभूतौ न कापि बाधा। निर्गुणस्वरूपसाक्षात्कारानन्तरमपि सगुणसाकारस्वरूपगुणमाधुर्यानुभवे बाधा-भावात्। अत एव स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसार इत्याद्युक्तयः सङ्गच्छन्ते। न च तदद्वैतसिद्धान्तेन विरुद्ध्यते। तदुक्तम्—

यत्सुभक्तैरतिशयप्रीत्या कैतववर्जनात्।
स्वभावस्य स्वरसतो ज्ञात्वाऽपि स्वाद्वयं पदम्।
विभेदभावमाहृत्य सेव्यतेऽत्यन्ततत्परैः॥ इति।

श्रीत्रिपुरारहस्येऽपि—

पारमार्थिकमद्वैतं द्वैतं भजनहेतवे।
तादृशी यदि भक्तिः स्यात् सा तु मुक्तिशताधिका॥
द्वैतं मोहाय बोधात्प्राक् जाते बोधे मनीषया।
भक्त्यर्थं भावितं द्वैतमद्वैतादपि सुन्दरम्॥ इति।

एवं ज्ञानवतां सगुणब्रह्मसेवनं निर्गुणब्रह्मानुभवश्च तुल्य एव।

प्रियतमहृदये वा खेलतु प्रेमरीत्या
पदयुगपरिचर्यां प्रेयसी वा विधत्ताम्।
विहरतु विदितार्थो निर्विकल्पे समाधौ
न तु भजनविधौ वा तुल्यमेतद्द्वयं स्यात्॥ इति।

व्यवहारे तु सगुणस्य अचिन्त्यकल्याणगुणगणाकरस्य भजनमेव शोभावहम्।

विश्वेश्वरोऽपि सुधिया गलितेऽपि भेदे
भावेन भक्तिसहितेन समर्चनीयः।
प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते
चैलाञ्चलव्यवहितेन निरीक्षणीयः॥

इति बोधसारे। अत एव मुधैव 'एवं हरौ भगवति प्रतिलब्धभाव' इत्यस्य अन्यथावर्णनम्। 'वियुञ्ज्यात्' इति विध्यभावेऽपि प्रयत्नशैथिल्येन ध्यात्राद्यभावभासकस्वप्रकाशब्रह्मानुभवः सिद्ध्यत्येव। तन्निन्दनं तु दूषणमेव, भगवतो निर्गुणस्वरूपस्यापि सगुणस्वरूपस्येव आराध्यत्वाविशेषात्। यथा कस्यचिदन्धभक्तस्य गुरोः पादयोरन्यतरस्य भेदबुद्ध्या सेवनम्, अपरस्य ताडनं मौर्ख्यमेव, तद्वदिहाप्यनुसन्धेयम्।

यदुक्तम्—"ज्ञानञ्च मयि संन्यसेदि"ति ज्ञानसंन्यासवद् भक्तिसंन्यास विध्यभावात् तदयुक्तमि"ति। तदपि न; यतः महावाक्यजन्य-ब्रह्माकारवृत्तिरूपस्य ज्ञानस्यानित्यत्वेन तत्त्याग उचित एव, तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् इति पुरुषसाक्षात्काराद् गुणवैतृष्ण्यस्योक्तत्वात्। सत्त्वपुरुषान्यताख्यातिरपि परिणामिनी, प्रतिसङ्क्रमणशीला, सान्ता च। तद्विपरीता चितिश्च अप्रतिसङ्क्रमणशीला, अपरिणामिनी, अनन्ता चेति ख्यातुरपि हेयैव।

न चैतावता पुनरपि सत्त्वपुरुषविवेकख्यातिनाशात् पुनरप्यविवेको जायते तद्धेतोरविद्यायाः समूलकाषं कषितत्वात्। स्वरूपभूतज्ञानस्य अविनाशित्वाच्च। एवमेव ध्यानवृत्तिरूपाया भक्तेस्त्यागेऽपि निरतिशयपरप्रेमास्पदे भगवति नित्यनिरतिशयप्रेमलक्षणाया भक्तेरनपायात्।

न च 'वियुञ्ज्यात्' इति लिङादिविधिप्रत्ययाभावान्न विधित्वमिति वाच्यम्; 'इडो यजति', 'तनूनपातं यजति' इत्यादिषु लट्प्रयोगेऽपि विध्यभ्युपगमात्। 'द्रष्टव्य' इति विधिप्रत्ययसत्त्वेऽपि विध्यनभ्युपगमात्, वस्तुतन्त्रे ज्ञाने विध्यसम्भवात् पुरुषतन्त्रे कर्मण्येव विधिसम्भवाच्च। तथा च भगवद्व्यतिरिक्तवस्तुप्राप्तये भगवद्ध्यानत्याग एव निन्दितः।

त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृति - रजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः॥

इत्युक्तेः। मुखचन्द्रचिन्तनार्थं पादारविन्दचिन्तनत्यागवत् निर्गुणस्वरूपचिन्तनार्थं सगुणस्वरूपत्यागस्य तत्र तत्रोक्तत्वात्। यथा—

तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत्। इति।

यदपि च—"अर्पितमनाः कुतस्तदपहरणे दत्तापहारेण न प्रत्यवेयादि"ति। तदपि न; तदपोहस्य विहितत्वात्। यथा पादारविन्दसमर्पितस्य मनसः पुनर्मुखारविन्दसमर्पणे न दत्तापहारदोषः।

एकैकशोऽङ्गानि धियाऽनुभावयेत् पादादियावद्धसितं गदाभृतः।
जितं जितं स्थानमपोह्य धारयेत् परं परं शुद्ध्यति धीर्यथा यथा॥

इत्युक्तत्वात्। तथैव भगवत एव सगुणस्वरूपस्येव निर्गुणस्वरूपस्य ध्याने तदपोहे दोषाभावात्।

एतेन 'बडिशजीविकासादृश्येन तस्य निकर्षो ज्ञापित' इत्यप्यपास्तम्; चित्ते बडिशारोपस्य भक्तिरसलम्पटे चित्ते लाम्पट्यारोपवद् अदोषत्वात्। भक्तिः सिद्धेर्गरीयसी, नैकात्मतां मे स्पृहयन्ति केचित् इत्यादिकमपि न ब्रह्मज्ञानेन विरुध्यते। परमहंसत्वसिद्धये ज्ञानिनामपि भक्त्यपेक्षत्वे बाधाभावात्। नहि तदर्थ द्वैतसत्त्वाद्वैतासत्त्वस्य आवश्यकता, पारमार्थिकाद्वैत-व्यावहारिकद्वैताभ्यां तदुपपत्तेः। अत एव 'प्रतिलब्धाभाव' इत्यादौ न भक्त्याभासवर्णनम्; गौणार्थकल्पने प्रमाणाभावात्।

श्रीवीरराघवीय-व्याख्यायां श्रीधरीय-व्याख्यायामिव भक्तेरेव वर्णनं निरूपितम्, न भक्त्याभासस्य। तथा हि—एवं दिव्यविग्रहचिन्तावसाने दिव्यात्मस्वरूपचिन्ता तत्प्रकारत्वेन प्रत्यगात्मचिन्ता च कार्येत्याह। प्रतिलब्धो भावः प्रेमातिशयो येन, भक्त्या इव द्रवद् हृदयं यस्य, प्रमोदादुद्गतानि पुलकानि यस्य, औत्कण्ठ्याश्रुकलया मुहुरर्द्यमान आनन्दसम्प्लवे निमज्जमानः, चित्तबडिशं मत्स्यबन्धनं दुर्ग्रहस्य भगवतो ग्रहणे मत्स्यबन्धनमिव उपायभूतम्, चित्तमपि ध्येयाद् भगवद्विग्रहात् शनकैर्वियुञ्ज्यादिति।

श्रीधरस्वामिरीत्या तु प्रेमोद्रेकात् प्रयत्नशैथिल्यात् वियोगानुकूलव्यापाराभावेऽपि ध्येयाकारवृत्त्युदयानुकूलव्यापाराभावादेव ध्येयास्फुरणेन स्वतः सिद्ध्यति तद्वियोगः। श्रीवीरराघवीये व्याख्याने चित्तस्य बडिशं चित्तापहारिणं भगद्विग्रहं प्रति अपादानस्यैव कर्मत्वविवक्षया द्वितीयेत्यप्युक्तम्। तथा च भगवद्विग्रहस्यैव माधुर्यातिशयाच्चित्तापहारकत्वेन बडिशत्वम्। तथा च भगवद्विग्रहध्यानेन निगृहीतस्य चेतसस्ततो वियोज्य दिव्यात्मध्याने तत्प्रवर्तनमिहाभिप्रेतम्।

श्रीवल्लभाचार्यरीत्या तु—हरौ सर्वदुःखनिवर्तके सर्वपुरुषार्थदायके भगवति प्रतिलब्ध एवं पूर्वोक्तो भावो येन, द्रवद्धृदयो यथा तापेन हिमघृतादिकं द्रवति तथा भक्त्या हृदयस्य द्रवणे देहवैकल्यं भवति। आनन्दप्रतिबन्धकस्य हृदयस्य द्रुतत्वात् प्रमोदे जातोत्पुलको भवति। तदा भगवति प्रेमाधिक्यात् कण्ठनिरोधोऽपि भवति। तत औत्कण्ठ्ये या बाष्पकला उत्पद्यते, तया मुहुरर्द्यमानः सकलायां भक्तौ सिद्धायां तत्रापि चित्तस्य बडिशं वशीकरणहेतु भगवद्रूपं मनःपरिकल्पितमिति शनकैर्वियुङ्क्ते त्याजयति। अत्रापि मनःपरिकल्पितात् भगवद्रूपात् बडिशात् चित्तवियोजनमुक्तम्। नात्र भगवदनादरादिकं शङ्कितम्। पुनश्च सुबोधिन्याम् अन्यतो निवृत्तं मनो भगवन्मूर्तिं कल्पयित्वा तत्र निवृत्तं स्थितम्। तस्मिंस्तु गते मुक्ताश्रयं निर्विषयं

च जातम् । आश्रयत्व-विषयत्वे एतावत्कालमत्रैव स्थिते । पूर्वं-विषयास्तु पूर्वमेव त्यक्ताः । भगवद्रसस्य चास्वादितत्वात् इदानीं तत्र विषयेभ्यो विरक्तम् । एवं सर्वथा विषयाभावे निर्वाणं कारणे लयं च स्वयमेव गच्छति । एवं भगवत्कृपया भगवदानन्दानुभवेन शब्दादिविषयेभ्यो विरक्तं स्वाश्रयाहङ्कारलयात् मुक्ताश्रयम्, अत एव ध्यातृध्येयानुसन्धानाभावात् निर्विषयञ्च सत् मनः सहसा अनायासेन निर्वाणमृच्छति नानाविधवृत्तिरूपतां परित्यज्य परमकारणब्रह्माकारेण परिणमते । यथाऽर्चिर्ज्वाला तैलवर्त्यौ अश्नुवती साश्रया सप्रकाशा सती तैलवर्त्यपगमे निराश्रया निःप्रकाशा च सा । स्वकारणमहाभूतज्योतीरूपेण परिणमते तद्वत् । अत्रैव अव्यवधानं ध्यात्रा[illegible]-विभागशून्यम्, अत एव एकमखण्डमनुगतम् आत्मानमीक्षते ।

श्रीशुकदेवरीत्या तु यथा मत्स्यग्रहणसाधनं लोहकण्टकं तत्तथाविध विषयग्रहणसाधनं चित्तबडिशं शनकैरयत्नत एव विषयेभ्यो वियुङ्क्ते उपरतं भवतीत्युक्तम् ।

यत्तूक्तम्—"भगवान् प्रत्यगात्मानुभवरूपं मोक्षं ददाति, न ब्रह्मात्मानुभव-रूपमि"ति । तन्न ; 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिश्रुतिशतविरोधात् । प्रत्यक्चैतन्याभिन्नपरब्रह्मप्राप्तिरेव ब्रह्मज्ञानफलमिति श्रुतिशतबोधितत्वाच्च ।

यदुक्तम्—"बडिश-शब्देन चेदं ध्वन्यते यत् गङ्गादितीर्थस्थानीये भगवति बडिशस्थानीये चित्तेन ग्राह्यत्वात् मत्स्यस्थानीयस्य स्वप्रकाशानन्दरूपे ह्रासे तदंशे सजातीयतया व्यक्तस्य निर्विशेषब्रह्मण उपलम्भात् सिद्धार्थतया कृत-तत्त्यागस्य तस्य धीवरत्वमेव लब्धमि"ति । तदपि तुच्छम् ; निर्विशेष ब्रह्मणः सर्ववेदान्ततात्पर्यविषयत्वेन सर्वोत्कर्षशालित्वेन तस्यैव सगुणसाकारब्रह्मरूपेण आविर्भावावगमेन तन्न्यग्भावकल्पनाया निष्प्रमाणकत्वात् ।

किञ्च—न ह्यत्र निर्विशेषब्रह्मप्राप्त्यनन्तरं सगुणध्यानतत्त्याग उक्तः, किन्तु सगुणध्यानत्यागानन्तरमेव चित्तस्य निराश्रयविषयत्वे निर्वाणे सति तदन्वीक्षणवर्णनम् ।

वस्तुतस्तु—मत्स्यस्येव दुर्ग्रहस्य निर्विशेषब्रह्मणो ग्रहणोपायभूतं चित्तं बडिशमिव भवति । तत्र यथा बडिशे पिष्टमिष्टादिकं योज्यते, तथैव चित्ते श्रीभगवतः परमानन्दमय - श्रीविग्रहध्यानजनित - प्रसादलेशो योज्यते । तेन निवृत्तिकं निर्विकल्पसमाधिदशापन्नं तद्ब्रह्माकारतया परिणतं ब्रह्मग्राहकं भवति । भगवत्प्रसादस्य परमफलं तु तत्स्वरूपरसास्वाद एव ।

अथापि ते देवपदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि ।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥

इति पदाम्बुजद्वय-प्रसादलेशानुगृहीतस्यैव भगवतो निर्गुणरूपज्ञानमुक्तम् ।

अन्यत्रापि भङ्ग्यन्तरेण तदेवोक्तम्—

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलब्धबोधं यथाऽञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम् ॥
तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥ इति।

इह प्रथमश्लोकेन कथामृतपानतज्जनितभक्तिलाभ-बुद्धिवैशद्य-वैराग्यज्ञान-लाभक्रमेण भगवत्प्राप्तिरुक्ता । द्वितीयेन अतद्व्यावृत्त्या आत्मसमाधियोग-बलेन बलिष्ठप्रकृतिजयद्वाराऽपि भगवत्पदप्राप्तिः । उत्तरमार्गे काठिन्यम्, पूर्व-मार्गे तु सारल्यम् । गीतायामपि ददामि बुद्धियोगं तं येन मामुपयान्ति ते इत्यादिभिः भगवत्प्रसादहेतुको भगवत्स्वरूपसाक्षात्कार उक्तः । भगवतः श्रीविग्रहप्रादुर्भावस्य तत्त्वसाक्षात्कारो मुख्यं फलम् । तमन्तरा साक्षात्कारा-सम्भवापातात्, सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम् इत्या-द्युक्तेश्च । अज्ञानभिद्विज्ञानं मार्जनमपि आप्नुयाद्यद्यस्य विशुद्धसत्त्वमयस्वरूपस्य आविर्भावो न स्यात् । अत एव भक्तिरसायनकृता जिज्ञासूनां श्रीभक्तेर्भगवत्-स्वरूपसौन्दर्यादिरसास्वादनं दृष्टम्, तत्त्वसाक्षात्कारक्रमेण मोक्षश्च अदृष्टमिति दृष्टादृष्टात्मकं फलम् । ज्ञानिनां मोक्षस्य तु ज्ञानेन पूर्वमेव सिद्धत्वात् दृष्टं भक्तिरसास्वादनमेव फलम् । कंसादीनां तु तमोरजोभिर्दृष्टफलस्य प्रतिबद्धत्वात् अदृष्टं मोक्षात्मकमेव फलमुक्तमिति संक्षेपः ।

: ११ :

# भक्तिः मुक्तिशताधिका

आत्मनस्तु कामाय सर्वं प्रियं भवति, रसो वै सः इत्यादिश्रुतयः उपक्रमोपसंहारादिभी रसात्मके प्रत्यक्चैतन्याभिन्ने ब्रह्मण्येव पर्यवस्यन्ति। तत्र अन्यानुरागाधीनानुरागविषयत्वं प्रेम्णो गौणत्वम्। अन्यानधीनानुरागविषयत्वं मुख्यत्वम्। तच्चञ्च आत्मन्येव उपलभ्यत इति सुखरूपत्वमपि तस्यैव। न च सुखमप्यात्मार्थमेवेति स्वात्मसम्बन्धित्वेनैव तत्काम्यते, वैषयिकसुखस्य भ्रान्तिवशात्तथात्वेन प्रतीयमानत्वेऽपि परमार्थतया तस्यात्मरूपत्वात्। वैषयिकमेव सुखं लक्षीकृत्य परिणामतापसंस्कारगुणवृत्तिविरोधात् सर्वमेव दुःखं विवेकिन इति पतञ्जलिः, दुःखमिश्रितत्वेन विषसंपृक्तमधुरान्नवत् सुखमपि हेयमिति नैयायिकाश्च वदन्ति। एष ह्येवानन्दयाति, मात्रामुपजीवन्ति, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति इत्यादिश्रुतिभिर्लौकिकस्य वैषयिकसुखस्यापि तदंशत्वमेवोच्यते। स्वानुकूलविषयाप्तौ अवरुद्धवृत्तिके चेतसि सत्त्वोद्रेकात्तत्र प्रतिबिम्बतया स्वात्मानन्दो व्यज्यते, वृत्तिरोधस्य क्षणिकत्वाद् विषयनिबन्धनत्वाच्च सुखेऽपि क्षणिकत्व-वैषयिकत्वाद्युक्तिः। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन इत्यादिभिस्तत्त्वसाक्षात्कारमूलकपरिणामादिभिः दुःखकालुष्याद्यसम्भिन्नतया ब्रह्मात्मसुखावाप्तिरुच्यते। अत एव आत्मैव रस इति सिद्धान्तः।

अत्र आत्मशब्देन प्रत्यक्चैतन्याभिन्नः परमात्मैव लिलक्षयिषितः। तत्रैव उपक्रमोपसंहारादिभी रसात्मबोधकवचनानां तात्पर्यावधारणात्। विशिष्टः सोपाधिकश्चिदाभासश्चित्प्रतिबिम्बश्चित्कणस्समवच्छिन्नो वा जीवः सिन्धोर्बिन्दुरिव अग्नेर्विस्फुलिङ्ग इव न निरतिशयरसरूपः, पूर्णानन्दतायास्तत्र तिरोहितत्वात्। नापि तटस्थः परः; तस्य प्रत्यगभिन्नत्वाभावे साक्षादपरोक्षत्वाभावेन स्वप्रकाशानन्दरसरूपताया दूरापेतत्वात्। ततोऽकामेनापि प्रत्यक्चैतन्याभिन्नस्यैव परस्य शुद्धात्मनो रसत्वमुपेयम्।

यत्तु—कैश्चित् स्वरूप-तटस्थ-बहिरङ्गभेदेन सच्चिदानन्दभगवतः शक्तित्रैविध्यमुपेत्य आद्यायाः पुनः सन्धिनी, संवित्, ह्लादिनीभेदेन त्रैविध्यमुच्यते। तदपि प्रकारान्तरेणात्र पक्षे नासमञ्जसम्; तथा हि—अचिदात्मिकाया मायाया बहिरङ्गत्वम्, सोपाधिकस्य जीवस्य च तटस्थत्वं स्पष्टमेव। सच्चिदानन्दस्य स्वरूपभूता एव सन्धिन्यादयस्तिस्रोऽपि।

यद्यपि सत एव स्वप्रकाशत्वेन चिद्रूपता, चित एव अत्यन्ताबाध्यत्वात् सद्रूपता, तस्यैव च सर्वोपद्रवविवर्जितत्वात् आनन्दरूपतेति स्वरूपे न मनागपि भेदः, नतरां तत्र शक्तिकल्पना, नतमां तत्त्रैविध्यम्; तथापि अचिन्त्यानिर्वाच्यथा दिव्यशक्त्या लीलाविशेषप्रकाशार्थम् उक्तभेदानामुपपादयितुं शक्यत्वात्। जलराशौ यथा फेनस्य बहिरङ्गता, तरङ्गस्य तदपेक्षयाऽन्तरङ्गत्वेऽपि स्वरूपापेक्षया बहिरङ्गत्वात् तटस्थता, माधुर्यस्य स्वरूपभूतत्वादेव मुख्यान्तरङ्गता तथैव परमानन्दसुधासिन्धौ भगवति भोग्यजडप्रपञ्चमूलभूता माया बहिरङ्गा, सोपाधिकचिल्लक्षणा जीवास्तटस्थाः, स्वरूपभूता माधुर्यादयोऽन्तरङ्गा भावाः शक्तयोऽप्युच्यन्ते। सतः सन्धायकत्वात्तत्र सन्धिनी, चितः प्रकाशकत्वात्तत्र संविद्, आनन्दस्याह्लादकत्वात्तत्र आह्लादिनीति त्रिविधा शक्तयस्तत्र कल्प्यन्ते। सर्वमेतत् प्रत्यगभिन्नस्य परमात्मनः शुद्धात्मनो रसत्वे सूपपद्यते। रससिन्धोः विन्दुरपि रस एव यथा, तथैव सोपाधिकोऽप्यात्मा रस एव। आवृतपरमानन्दत्वेन अल्पानन्दः साकाङ्क्षो रसप्रेप्सुर्भवति। तदर्थमेव रस प्रतिपाद्यते। तत्र वेदान्तवेद्यस्तु निर्विशेषभगवद्रूप एव रसः। स एव रसशास्त्रे स्थायिविशिष्टतया वर्ण्यते। तत्र भगवद्गुणगण-श्रवणजनित-द्रुतिरूपायां गृहीतभगवदाकारायां मनोवृत्तौ विभावा-ऽनुभाव-व्यभिचारिसंयोगेन रसरूपता। अत्र आलम्बनविभावो भगवान्, उद्दीपनविभावस्तुलसीचन्दनादिः, अनुभावो नेत्रविक्रियादिः, व्यभिचारिणो निर्वेदादयः, व्यक्तीभवद् भगवदाकारतारूपरसाख्यः स्थायिभावः, परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति, स एव भक्तियोगः दुःखासंभिन्नसुखं परमपुरुषार्थः।

यथा जतुद्रव्यं स्वभावकठिनं तापकाग्न्यादिसम्बन्धेन जलमिव द्रुतं चीनांशुकशतक्षालितं निर्मलं भवेत्, तत्र निक्षिप्तहिङ्गुलादिरङ्गस्य सर्वांशप्रवेशः स्थिरता च भवति, पुनः काठिन्ये पुनर्द्रवतायां वा न रङ्गविश्लेषो जतुनो रङ्गस्य वा वाञ्छायामपि। एवमेव चित्तजतुनि काम-क्रोध-भय-स्नेह-हर्ष-शोक-दयादिभिः भगवद्विषयैस्तापकैर्गङ्गाजलप्रवाहवद् द्रुते चीनांशुकशतक्षालित इव निर्मले सर्वांशप्रविष्टः परमानन्दस्वरूपो भगवान् स्थायिभावतामासाद्य रसतां प्राप्नोति। द्रवावस्थाप्रविष्टविषयाकारस्य अनपायित्वेन तत्र मुख्यः स्थायिशब्दः। तथात्व एव कर्तुमकर्तुमन्यथाकर्तुं समर्थस्यापि भगवतस्ततोऽपसृतौ सर्वशक्तिमत्ताऽपि कुण्ठ्यते। एतदेवोच्यते—

> विसृजति हृदयान्न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः।
> प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः॥

प्रणयो द्रवत्वस्यैव। अपसरणसामर्थ्यमालोच्यैव वदति भक्तः—हृदयाद्यदि निर्यासि पौरुषं गणयामि ते, इति। व्रजसीमन्तिनीजनास्तदनुसारणे प्रवृत्ता

अपि विफलप्रयत्ना भवन्ति। 'तदलमसितसख्यैरि'ति निश्चित्यापि तत्कथां दुस्त्यजां मन्वते। भगवदुदन्तं प्रस्तुवतीं काञ्चिद्वारयन्ती काचिदाह—

सन्त्यज सखि तदुदन्तं यदि सुखलवमपि समीहसे सख्याः।
स्मारय किमपि तदितरद्विस्मारय हन्त मोहनं मनसः॥ इति।

चित्रीयते च कश्चिन्मुनिः—

प्रत्याहृत्य मुनिः क्षणं विषयतो यस्मिन्मनो धित्सति
बालाऽसौ विषयेषु धित्सति मनः प्रत्याहरन्ती ततः।
यस्य स्फूर्तिलवाय हन्त हृदये योगी समुत्कण्ठते
मुग्धेयं किल पश्य तस्य हृदयान्निष्क्रान्तिमाकाङ्क्षति॥ इति।

न चैवमालम्बनविभाव-स्थायिभावयोरैक्यापत्तिरिति वाच्यम्; बिम्बप्रतिबिम्बभावत्वेन ईश-जीवयोरिव व्यवहारसिद्धभेदस्याभ्युपगमात्। बिम्बस्यैव द्रुतमनोनिष्ठत्वेन प्रतीयमानत्वात् प्रतिबिम्बत्वोक्तिः।

आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति इत्यादिश्रुतिभिः प्रपञ्चस्यानन्दात्मकब्रह्मैकोपादाननिमित्तकत्वेन कान्तादिविषयाणामपि कारणानन्दरूपतैव, मायानिमित्तावरणविक्षेपाभ्यां तेषामखण्डानन्दाद्वयाकारेणाभानम्। अकार्याणामपि कार्याकारेण भानं भवति ऋतेऽर्थं यत्प्रतीयेत इत्यादौ तदुक्तेः।

तत्र अज्ञातज्ञापकत्वेनैव मानानां मानत्वम्। अज्ञातञ्च स्वप्रकाशतया भासमानं चैतन्यमेव, न जडं तस्य भानाप्रसक्त्या तत्रावरणकृत्याभावात्। तथा च कान्तादिगोचरमानानामपि मानत्वाय अज्ञातत्वात्तदवच्छिन्नचैतन्यविषयकत्वाभ्युपगमेन आवरणतिरोभावे सति तद्विषयावच्छिन्नत्वेन परमानन्दरूपस्य उपादानचैतन्यस्यैव भानम्। तावताऽपि न सद्योमुक्तिः स्वप्रकाशत्वभङ्गो वा, अनवच्छिन्नस्वरूपाभानात्। ततो विषयावच्छिन्नचैतन्यमेव द्रवावस्थमनोवृत्त्युपारूढतया स्थायिभावमासाद्य रसतां प्राप्नोतीति कान्तादिरसस्यापि परमानन्दरूपत्वेऽपि जाड्यविमिश्रणात् न्यूनता। भक्तौ तु अनवच्छिन्नचिदानन्दघनस्य भगवतः स्फुरणात् परमानन्दरूपता स्फुटैव। एतावता द्रवावस्थमनोवृत्त्युपारूढतया स्थायिभावमासाद्य विषयावच्छिन्नचैतन्यमेव रस इति पक्षे न कोऽपि दोषः। स्थाय्यवच्छिन्नभानावरणचिदेव रस इत्यपि साध्वेव।

यत्तु—"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति एतद्वाक्यघटकायंपदार्थकर्तृकलाभकर्मैव रसत्वेनाभिमतश्चेद् भग्नावरणचैतन्यस्यैवायंपदार्थत्वात् कर्तृकर्मणोरभेदापत्तिरि"ति। तन्न; सावरणस्यायंत्वेन कर्तृतयाऽनावरणस्य च कर्मतया औपाधिकभेदाभ्युपगमेन तदविरोधात्।

यदप्युक्तम्—"स्वप्रकाशवादे किलावरणभङ्गमन्तरेण इतरस्यानपेक्षणादावरणभङ्गादेव आनन्दीभवनप्राप्तेः पूर्वांशस्य वैयर्थ्यमि"ति। तदप्ययुक्तम्; अनवच्छिन्नचैतन्यस्य परमानन्दरूपतया आवरणभङ्गेनैव रसरूपत्वेऽपि तत्तदवच्छिन्नचैतन्येषु तत्तदवच्छेदकगत-दोषगुणमिश्रणनातथात्वात्। अत एव विभावानुभावव्यभिचारिसंयोगेन अभिव्यक्तः स्थायिभाव एव सभ्याभिनेययोर्भेदतिरोधानेन सभ्यगत एव सन् परमानन्दसाक्षात्कारेण रसतामाप्नोतीति रसविदां मर्यादा। रसस्य ब्रह्मानन्दसहोदरत्वमपि स्थाय्यवच्छिन्नतयैव भविष्यति। वेदान्तवेद्यस्य निर्विशेषस्य रसस्य तु ब्रह्मात्मकत्वमेव, न तत्सहोदरत्वम्। तत्रावच्छेदकानां पारमार्थिकसत्ताकब्रह्मापेक्षया किञ्चिन्न्यूनसत्ताकत्वेन तदवच्छिन्नानामपि तादृक्त्वेन सिद्धान्ताव्याकोपोऽपि।

अयमभिप्रायः—यद्यपि सर्वशास्त्रमहातात्पर्यविषये परमात्मन्येव सच्चिदादिशब्दानां रसानन्दादिशब्दानां चाञ्जस्येन प्रवृत्तिस्तथापि तेषु तेषु विषयविशेषेषु सत्ता-चैतन्यादिशब्दप्रयोगवत् रसाऽऽनन्दादिशब्दानामपि विषयविशेषेषु प्रयोगसम्भवात्। तथा च स्थाय्यवच्छिन्नभग्नावरणचैतन्ये रसशब्दप्रयोगः। द्रवतां सात्त्विकीं वृत्तिमन्तरा च न रसानन्दाद्यनुभूतिरित्युपेक्ष्य द्वेष्यविषयेषु भग्नावरणचैतन्यस्य सत्त्वेऽप्यानन्दाननुभवः स्पष्ट एव। अत एवायं रससिन्धुबिन्दुःस्थानीयः सोपाधिको जीवोऽनवच्छिन्नपरमात्मानं रससिन्धुस्थानीयं स्थाय्यवच्छिन्नभग्नावरणं तदंशभूतं चितं वा लब्ध्वाऽऽनन्दीभवतीति सुवचम्।

यदपि "सावरणोऽनावरणः सन्नित्येतावतैव इष्टसिद्धेः लब्ध्वेति निरर्थकमि"त्यापद्येत। तदपि अकिञ्चित्करम्; नित्यप्राप्त-परिहृतविषयेषु विस्मृतग्रैवेयक-मिथ्यासर्पादिषु प्रेप्सा-परिजिहीर्षादर्शनेन अज्ञाननिवृत्त्या तन्निवृत्तौ लाभ-परिहारप्रयोगदर्शनवत् आवरणभङ्गेन प्रेप्सानिवृत्तौ प्राप्तिव्यवहारोपपत्तेः। अत एव स प्रकृतपञ्चकोशातीतः स्वरूप-तटस्थलक्षणलक्षितः प्रत्यगभिन्नब्रह्मस्वरूपः परमात्मैव वै निश्चयेन रसः। तमेव लब्ध्वा पूर्णत्वेन मात्रया वा लब्ध्वा अयं सोपाधिकः स्वल्पानन्दो वा जीव आनन्दीभवति। एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति, एष ह्येवानन्दयाति इत्यादिश्रुतिभिर्लौकिकानन्दस्यापि तदंशत्वमेव गम्यते। नहि साधारणानामब्रह्मविदाम् अनवच्छिन्नब्रह्मात्मकस्य रसस्य अप्राप्तिरिति यथायोग्यमेव सम्बन्धो युज्यते। तथा च 'रसो वै सः, रसं ह्येवे'त्युभयत्र अनवच्छिन्नः स्थाय्यवच्छिन्नभग्नावरणचिदात्मकः पारिभाषिकस्तदंशभूतो रसश्च गृह्यते। द्रवत्व-स्थायिभावानपेक्षमहावाक्यजन्यापरोक्षब्रह्माकारवृत्तौ आवरणभङ्गेन अनवच्छिन्नब्रह्मरूपेण रसलाभः। परमानन्दघनस्य भगवतो द्रवावस्थमनोवृत्त्युपा-

रूढतया स्थायिभावापन्नतया भक्तिरसरूपेण लाभः। कान्ताद्यवच्छिन्नत्वेन उपादानब्रह्मचैतन्यस्यापि द्रवावस्थमनोवृत्त्युपारूढतया स्थायिभावापत्त्या पारिभाषिकावच्छिन्नतया रसलाभः। अत एव उत्तरमीमांसया रसशास्त्रस्य न गतार्थता, अपि तु स्थायिभावादिविशिष्टरसस्य प्रतिपादनार्थं तदारम्भस्य आवश्यकत्वात्।

यत्तु—"अत्रापारमार्थिकताभ्युपगमेनाद्वैतिमते रसशास्त्रकृदभिमतस्य रसस्य न चरमोपेयत्वमि"ति। तन्न; व्यावहारिकत्वाभ्युपगमेनैव तदुपपत्तौ तत्र पारमार्थिकताभ्युपगमानपेक्षणात्। कर्मकाण्डागमस्यापि यथा व्यावहारिकसाध्य-साधनबोधकत्वे सत्यपि स्वाभाविकप्रवृत्तिरोध-चित्तशुद्ध्यादिक्रमेण परमानन्दघने भगवति महातात्पर्यं तथैव रसशास्त्रस्य विनेयोन्मुखीकरणाय प्राकृतरसवर्णने अवान्तरतात्पर्ये सत्यपि भगवदालम्बनकतया सकलशेषितया परमपुरुषार्थभूते प्राकृतरस एव महातात्पर्यस्य सत्त्वात्।

न चाद्वैतिमते तस्याप्यपारमार्थिकत्वम्, बिम्बप्रतिबिम्बभावानाक्रान्तस्य आदित्यस्यैवोपाधिना बिम्बप्रतिबिम्बभावत्वेऽपि न वस्तुभेदस्तथैव परमानन्दस्वरूपबिम्बस्यैव द्रवावस्थमनसि प्रतिबिम्बितत्वेन परमानन्दघनभगवदाकारतायास्तद्रूपत्वेन बिम्बप्रतिबिम्बिभावानाक्रान्ते पारमार्थिकवस्तुन्येव पर्यवसानात्। परमार्थभूतस्यैव तत्त्वस्य दिव्यलीलाशक्त्या कृष्ण-तद्भक्ति-सद्धामादिरूपेण प्रतिभानम्। तथा हि—

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः।
तस्यापि भगवान् कृष्णः किमतद्वस्तुरूप्यताम्॥ इति।

पादविभूतिविलासविजृम्भितत्वे प्राकृतालम्बनकतया रसस्य प्राकृतत्वं त्रिपादवैभवाप्राकृतालम्बनकतया रसस्याप्राकृतत्वं प्राकृतो रस उच्यते। अप्राकृतस्तु भाव इति नाट्यशास्त्रीया परिभाषैव। एतदनुसारिणी देवादिविषया रतिर्भाव एव, न रस इत्येषाऽप्युक्तिः।

वस्तुतस्तु—अप्राकृतो भक्तिरसः रसत्वव्यपदेशमूलभूतायास्तादृशानन्दात्मकताया उभयत्राविशेषात्। अलौकिकत्वं तूभयोरेव विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनात् रसस्य स्थाय्युपहित-चिदानन्दात्मनः स्वरूपप्रकाश इत्यादिरीत्या रसस्य उभयत्राप्यलौकिकत्वम्।

तस्याश्च श्रीभगवद्धर्मद्रुत-शुद्धस्वान्ताभिव्यक्तायाः परमानन्दघन-भगवदाकारताया निरुपमसुखसंविद्रूपाया असंस्पृष्टदुःखायाः श्रीभक्तेर्माहात्म्यातिशयस्तत्र तत्र स्फुट एव, परमानन्दस्वरूपस्य सर्वाधिष्ठानभूतस्य औपनिषद परमपुरुषस्यैव स्थायिविशिष्टतया भक्तिरसरूपेण प्रसिद्धेः। प्राकृतेष्वपि रसेषु

तस्यैव मात्रयाऽभिव्यक्तिः । विषयाश्रयमालिन्येन रसे मालिन्यविभासः । तदुक्तं भक्तिरसायनकृद्भिरेव ( १३ का० )—

किञ्च न्यूनाञ्च रसतां याति जाड्यविमिश्रणात् ।

अर्थात् विषयावच्छिन्नचैतन्यमेव द्रवावस्थमनोवृत्त्युपारूढतया भावत्वं प्राप्य रसतां प्राप्नोतीति न प्राकृतरसस्य परमानन्दरूपता । अनवच्छिन्नचिदानन्दघनस्य भगवतो भक्तिरसे स्फुरणात् परमानन्दरूपता ।

अत एव यत् कैश्चिदुच्यते—"देवादिविषयाया रतेर्भावरूपतैव, न रसरूपता । कुतः पुनः कृष्णविषयाया रतेः परमानन्दरूपता देवतात्वाविशेषादि"ति । तन्न ; तदुक्तेः देवतान्तरविषयत्वेन परमानन्दस्वरूपे भगवति तदनुपपत्तेः । प्रत्युत कान्तादिविषयाणां रत्यादीनामेव परिपूर्णरसास्पर्शित्वान्न तादृग् रसत्वं पुष्यते यथा भगवद्रतेः । तदुक्तं श्रीमधुसूदनसरस्वतिपादैः—

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥ इति ।

तयोरेकतरस्य उभयोर्वा रसात्मकत्वे विशुद्धरसस्वरूपता । विशेषतः समुद्वेल्लित-सम्प्रयोग-विप्रयोगात्मकोभयविध-शृङ्गार-रस - समुद्र - सारसर्वस्वरूपो भगवानेव मनोगतो विशिष्टरसतामेति । रसे रसोद्रेकवदत्रापि रसोद्रेककल्पना । तादृग्भगवद्धृदयस्थ-पूर्णानुरागरससारसमुद्रसमुद्भूत-निर्मल-निष्कलङ्कचन्द्रस्वरूपिणी श्रीवृषभानुनन्दिनी तद्धृदयस्थ-तथाभूतरससारसिन्धु-समुद्भूतशशभृद्रूपः श्रीव्रजेन्द्रनन्दनोऽपि ।

अन्यत्र त्रिदलस्य प्रेम्णो विषयाश्रयादिवैजात्येऽप्यत्र सदानन्दैकरसत्वमेव । तल्लीला-तदधिष्ठान - तत्परिकर - तदुद्दीपनादि-सामग्र्यादीनामपि रसरूपतैव । सच्चिदानन्दरससार-सरोवरसमुद्भूत - सरोजकिञ्जल्क - पराग-मकरन्दात्मनां व्रज-व्रजसीमन्तिनी-तत्प्रिय-प्रेयसीनां रसात्मकत्वाविशेषात् ।

यत्र प्रविष्टः सकलोऽपि जन्तुरानन्दसच्चिद्घनतामुपैति ।
सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तयः ।

इत्यादिवचनानि चात्र प्रमाणानि । तदेतत्सर्वं ब्रह्मवाद एव उपपद्यत इति ब्रह्मवित्तमैः श्रीमधुसूदनसरस्वतिपादैः भक्तिरसायनं ब्रह्मवादानुरोधेनैव विरचितम् ।

अन्यैः श्रीभक्तिरसामृतरसिकैरप्युक्तम्—

मुक्तमुनीनां मृग्यं किमपि फलं देवकी फलति ।
तत्पालयति यशोदा प्रकामुपभुञ्जते गोप्यः ॥

अनाघ्रातं भृङ्गैरनपहृतसौगन्ध्यमनिलै-
रनुत्पन्नं नीरेष्वनुपहत - मूर्मीकणभरैः ॥
अदृष्टं केनापि क्वचन च चिदानन्दसरसो
यशोदायाः क्रोडे कुवलयमिवौजस्तदभवत् ॥
परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तचारखिन्नाः ।
विचिनुत भवनेषु बल्लवीना-मुपनिपदर्थमुलूखले निबद्धम् ॥
शृणु सखि कौतुकमेकं नन्दनिकेताङ्गणे मया दृष्टम् ।
धूलीधूसरिताङ्गो नृत्यति वेदान्तसिद्धान्तः ॥
पुञ्जीभूतं प्रेम गोपाङ्गनानामेकीभूतं गुप्तवित्तं श्रुतीनाम् ।
मूर्तीभूतं भागधेयं यदूनां श्यामीभूतं ब्रह्म मे सन्निधत्ताम् ॥ इति ।

तादृशस्य निखिलरसामृतमूर्तेः प्रसाधनादिकमपि तादृगेव । यथा भगवत्-स्वरूपं लक्ष्यीकृत्योक्तम्—उद्वर्तितमिव सौरभ्येण अभ्यक्तमिव स्नेहेन स्नातमिव माधुर्येण स्वाङ्गमहसा वा मार्जितमिव लावण्येनानुलिप्तमपि सौन्दर्येण अलङ्कृत-मिव त्रैलोक्यलक्ष्म्या । सा चाभिलक्ष्य अभिहिता श्रीवृषभानुनन्दिनी चापि महाभावस्वरूपा । तस्याः प्रसाधनादिकमपि तथाविधमेव । सखीप्रणय-सद्गन्धेन उद्वर्तिता, कारुण्यतारुण्यलावण्याद्यमृतधाराभिः स्नपिता, ह्रीपट्टवस्त्रा-वृताङ्गी, सौन्दर्यघुसृणाञ्चिता, श्यामलोज्ज्वलकस्तूरीविरचितकलेवरा, कम्पाश्रु-पुलकस्तम्भस्वेदगद्गदरक्ततोन्मादजाड्यात्मकैः रत्नैरलङ्कृता, गुणाली पुष्पमालिनी, धीराधीरात्वसद्वासःपटवासैः परिष्कृता, प्रच्छन्नमानधम्मिल्ला, सौभाग्यतिलकोज्ज्वला, कृष्णानामयशश्रावितमनसोल्लासकर्णिकाराग-ताम्बूल-रक्तौष्ठी, प्रेमकौटिल्यकज्जला, प्रणयक्रोधसच्चोलीबन्ध-गुप्तीकृतस्तनी, नर्म-निष्यन्दस्मितकर्पूरवासिता, सौरभ्यान्तरगृहा, गर्वपर्यङ्का, प्रेमवैचित्त्यविचल-तरलाञ्चिता, आत्मसखीस्कन्धदत्तलीलाकराम्बुजा श्यामा श्यामस्मरमोदमधूली-परिपोषिका । एवं वसनालङ्कारादिकमपि परस्परस्य परस्परात्मकमेव ।

बिभ्रद्वासः कनकपिशम् श्रीकृष्णे कनककपिशं वासः श्रीवृषभानुजैव । एवं तस्याम् अञ्जनमृगमदकर्णोत्पलनीलाम्बरादिकमपि श्रीकृष्ण एव । तदुक्तम्—

श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम ।
वृन्दावनतरुणीनां मण्डनमखिलं हरिर्जयति ॥

श्रीव्रजसीमन्तिनीजनानां श्रीकृष्णविषये स्पृहयालुता—

अयि तडित् त्वमसौ क नु किं तपः कियदहो कृतवत्यसि तद्वद ।
यदिदमम्बुधरं हरिवक्षस-स्फुजितमालिगता रमसे सदा ॥

अथश्च मुख्याया श्रीराधाया उद्गारः—

दुरापजनवर्तिनीः रतिरपत्रपा भूयसी
गुरूक्तिविषवर्षणैर्मतिरतीव दौस्थ्यं गता ।
वपुः परवशं जनुः परमिदं कुलीनान्वये
न जीवति तथापि किं परमदुर्मरोऽयं जनः ॥

तद्विषये श्रीकृष्णविमर्शश्चायम्—

पूर्वानुरागगलितां मम जम्भनेऽपि लोकापवाददलितामथ मद्वियुक्तौ ।
दावानलज्वलित-नातिवनीसदृक्षानेतां कथं कथमहो बत सान्त्वयामि ॥

तस्याश्च तन्नैष्ठुर्येण सम्भावितमरणेऽपि तद्धाम्नि तत्सदृशतमाले च समासङ्गातिशयः—

अकारुण्यः कृष्णो यदि मयि तवागः कथमिदं
मुधा मा रोदीर्मे कुरु परमिमामुत्तरकृतिम् ।
तमालस्य स्कन्धे विनिहितभुजा वल्लरिरियं
यथा वृन्दारण्ये चिरमविचला तिष्ठति तनुः ॥

शृङ्गारस्य यदङ्गित्वमुज्ज्वलत्वञ्च तद्राधाकृष्णयोरेवानुपचारेण सङ्गच्छते । किं बहुना, कृष्णविषयाणां कामक्रोधभयादीनामपि कृष्णाप्तावेव पर्यवसानम् । चिन्तामणौ दीपबुद्ध्या प्रवृत्तानामपि चिन्तामणिलाभवत् : परमकारुणिके भक्तेच्छानुविधायिनि पतितपावनेऽप्रमेये निर्गुणे नृणां निःश्रेयसार्थमेवाभिव्यक्ते श्रीकृष्णे भगवति जारादिबुद्ध्या प्रवृत्तानामपि परमात्मलाभ एव । अन्यत्र धर्म-परलोकादिजरणात् जारत्वम् । इह तु अविद्या-काम-कर्मादीनां पञ्चकोशादिसंसारस्य च जरणात् जारत्वम् । तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः । "यान्ति तन्मयतां हि ते एवमादिस्मरणात् ।

यद्यपि अनिमित्ताया एव भक्तेः कोशजरयित्रीत्वं विज्ञायते, न तु सनिमित्तायाः ; तथापि सन्निमित्ताया अप्यन्ते तथात्वे पर्यवसानात्त दोषः । अनिमित्ता परा भक्तिरपि यद्यपि स्वतस्सिद्धा ; तथापि आमान्नस्य पकान्नहेतुत्ववत् अपरस्या भक्तेः परभक्तिहेतुत्वोपपत्तिः । तथा सत्येव 'अनिमित्ता भागवती भक्तिः' 'अहैतुक्यव्यवहिता' 'भक्त्या सञ्जातया भक्त्या' एवमादीनां वचनानां सङ्गतिः । तदात्मकस्य प्रेम्णोऽपि तथात्वमेव । तदुक्तम्—

प्रादुर्भावदिने न येन गणितो हेतुस्तनीयानपि
क्षीयेतापि न चापराधविधिना नत्या न यो वर्धते ।
पीयूषप्रतिवादिनस्त्रिजगती दुःखद्रुहः साम्प्रतं
प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्निष्ठतावाचमत्वर ॥ इति ।

वाङ्निष्ठतयैवास्य लाघवं निर्वाणं वा—

प्रेमाद्वयो रसिकयोरपि दीप एव हृद्वेश्म भासयति निश्चलमेव भाति।
द्वारादयं वदनतस्तु बहिष्कृतश्चेन्निर्वाति शीघ्रमथवा लघुतामुपैति॥

इत्याद्युक्तेः कैवल्याद्यनभिलाषुकैः पुरुषख्यातेर्गुणवैतृष्ण्याख्य-परवैराग्यवद्भिरपि सा भक्तिः काम्यते।

न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम।
गृह्णन्त्यपि मया दत्तं कैवल्यमपुनर्भवम्॥
कामं भवः स्ववृजिनैर्निरयेषु नः स्यात्
चेतोऽलिवद् यदि नु ते पदयो रमेत।

इत्यादिस्मरणेभ्यः। अत एव परमानन्दरूपाया भक्तेश्चतुर्थपुमर्थे मोक्षे पर्यवसानम्, स्वातन्त्र्येण पञ्चमपुरुषार्थता वा।

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
देवानां गुणलिङ्गानामानुश्रविककर्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या।
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।

इत्यादिभिः तादृग्भक्तियोग उक्तः।

यद्यपि राम-कृष्ण-शिव-विष्ण्वादिषु वेद-तच्चरणाश्रित-शास्त्रकदम्बविहितोपासनेषु परमेशितृस्वरूपेषु भक्तिस्तथाविधैव; तथापि सर्वे रसा आञ्जस्येन कृष्ण एवोपपद्यन्त इति विशेषतो मुकुन्दग्रहणम्—

परमसिह मुकुन्दे भक्तियोगं वदन्ति। इति।

सर्वान्तर्यामी सर्वेश्वर एव भक्तिरसालम्बनविभाव इति वक्ष्यते। विशेषप्रेमनिरूपणप्रसङ्गे चोक्तम्—द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा। सा भक्तिरित्यभिहिता इति।

कर्मोपासनज्ञानबोधकानां समेषामागमानां स्वान्तःसंशोधन-भगवदाराधन-तत्स्वरूपज्ञानद्वारा परपुमर्थभूतायां भक्तौ तात्पर्यम्। तदुक्तमेव—

भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम्।
यद् गृह्णाति द्रुतं चित्तं किमन्यदवशिष्यते॥ इति।
काठिन्यं विषये कुर्याद् द्रवत्वं भगवत्पदे। इत्यपि च।

'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुत्यनुरोधेन आनन्दैकोत्पत्तिस्थिति-

लयस्य प्रपञ्चस्य परमानन्दभगवदात्मकत्वात्; स्वप्नादिप्रपञ्चवद् बाध्यत्वाच्च भगवदाकारस्फूर्त्यां प्रपञ्चो निवर्तमानो भगवद्रूप एव भवति, अध्यस्तस्य अधिष्ठानज्ञाननिवर्त्यत्वात्। तथा च विषयनिष्ठः सर्वोऽपि प्रेमा भगवत्येव पर्यवस्यति। द्रवावस्थमनःप्रविष्टं वस्तु पुनः काठिन्यदशायामपि स्थितं सत् पुनर्द्रवीभावान्तरेण विषयान्तरं गृह्यमाणेऽपि प्रकाशमानत्वान्न मनसा सन्त्यज्यते। ततो द्रवावस्थे मनसि भगवदाकारतायां प्रविष्टमन्यवस्तुग्रहण-कालेऽपि भगवतो भानं भवति। जतुलिप्तवस्तुषु द्रुतजतुप्रविष्टरङ्गभानवत्। तथा हि, प्रपञ्चसत्यत्वभानसहित-भगवद्भानस्योदाहरणम्—

खं वायुमग्निं सलिलं महीं च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित्समुद्रांश्च हरेः शरीरं
यत्किञ्च भूतं प्रणमेदनन्यः॥ इति।

प्रपञ्चमिथ्यात्वभानसहित तद्भानस्य तु—तस्मादिदं जगदशेषमसत्स्वरूपम् इत्युदा-हरणम्। प्रपञ्चभानरहितभगवद्-भानादाहरणमपि—

प्रेमातिभरनिर्भिन्न - पुलकाङ्गोऽतिनिर्वृतः।
आनन्दसम्प्लवे लीनो नापश्यमुभयं मुने॥ इति।

विशेषतो विप्रलम्भशृङ्गारे द्रवावस्थप्रविष्टालम्बनमयमेव सर्वं वस्तु भासते–

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य।
हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः॥

कंसस्य भयेन श्रीकृष्णस्फूर्तिरपि—

चिन्तयानो हृषीकेशमपश्यत् तन्मयं जगत्। इति।

तदर्थं क्रमेण साधकस्य महत्सेवा, तद्धर्मश्रद्धा, हरिगुणश्रुतिः, रतिः, स्वरूपा-धिगतिः, प्रेमवृद्धिः, तत्स्फुरणम्, तद्धर्मनिष्ठा, स्वास्मिंस्तद्गुणशालिता च अपेक्ष्यन्ते प्राप्यन्ते च।

आत्मारामैः निर्ग्रन्थैः महामुनिभिरपि भगवान् भज्यते। यथा—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥ इति।

ननु सर्वाधिष्ठान-प्रत्यक्चैतन्याभिन्न-परब्रह्मसाक्षात्कारेण अपास्तसमस्त-भेदानां स्वसुखनिभृतचेतसां कुतः स्वाभिन्नभगवतः स्फूर्तिः, कुतस्तरां रागः,

कुतस्तमा च भक्तिरिति चेन्न । स्वारसिकप्रेम्णा आहार्यभेदज्ञानेन तदुपपत्तेः । यथा—

यत्सुभक्तैरतिशयप्रीत्या कैतववर्जनात् ।
स्वभावस्य स्वरसतो ज्ञात्वापि स्वाद्वयं पदम् ।
विभेदभावमाहृत्य सेव्यतेऽत्यन्ततत्परैः ॥

( त्रिपुरसुन्दरीरहस्ये )

न च तथा सति व्यामोहप्रसक्तिः ; राजराजन्यायेन सत्यस्य सत्यमित्यादौ सत्यभेदाङ्गीकारेण पारमार्थिकसत्तापेक्षया किञ्चिन्न्यूनसत्ताकस्य भजनोपयोगिनो भेदस्याभ्युपगमे पारमार्थिकाद्वैताव्याकोपेन तदनुपपत्तेः । तदुक्तमभियुक्तैः—

पारमार्थिकमद्वैतं द्वैतं भजनहेतवे ।
तादृशी यदि भक्तिः स्यात्सा तु मुक्तिशताधिका ॥
द्वैतं मोहाय बोधात्प्राग् जाते बोधे मनीषया ।
भक्त्यर्थं भावितं द्वैतमद्वैतादतिसुन्दरम् ॥ इति ।

गाढानुरागानर्गलालिङ्गनादिरसास्वादचतुरयापि यथा चैलाञ्चलव्यवहितप्राणेश्वरनिरीक्षणं रसविशेषविकासार्थं काम्यते, तथैवाभेदानुभविना सुधियापि भेदाभावेन विश्वेश्वरोऽर्चयितुमिष्यते । यथा—

विश्वेश्वरोऽपि सुधिया गलितेऽपि भेदे भावेन भक्तिसहितेन समर्चनीयः ।
प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते चैलाञ्चलव्यवहितेन निरीक्षणीयः ॥ इति ।

विदुषः समाधिनिष्ठा भगवदर्चनञ्च सममेव—

प्रियतमहृदये वा खेलतु प्रेमरीत्या
पदयुगपरिचर्यां प्रेयसी वा विधत्ताम् ।
विहरतु विदितार्थो निर्विकल्पे समाधौ
ननु भजनविधौ वा तुल्यमेतद्द्वयं स्यात् ॥ इति ।

प्रातिभासिकप्रपञ्चापेक्षया सत्ये घटादौ स्वकारणमृदाद्यपेक्षया मिथ्यात्वम्, एवं मृदादीनामपि स्वकारणापेक्षया मिथ्यात्वमिति रीत्या अपरमार्थसत्त्वे स्तरभेदेन सत्त्वभेदाभ्युपगमेन पारमार्थिकसत्तापेक्षया किञ्चिन्न्यूनसत्ताकस्य परिकरादेरङ्गीकारेऽद्वैताव्याकोपात् ।

भगवद्रूप-नामलीला-धामादिष्वपि रसात्मता उक्तैव । सर्वत्रैव चात्र दीपकलिकायामग्नेः गङ्गातरङ्गे गङ्गाया इव च रसस्वरूपस्य ब्रह्मण एव प्राधान्यम् । तदतिरिक्ततयाऽनुपलम्भात् , तस्यैव तदनुविद्धत्वेनोपलम्भाच्च पवन-घृतवर्तिकयोस्तरङ्गकणिकयोरनुपादानत्वेन बहिरङ्गतटस्थहेतुत्ववदत्रापि लीला-

शक्त्यादीनां तटस्थहेतुत्वोपपत्तेः। यथैव पार्थिवत्वाविशेषेऽपि हीरकलोष्टयोः महद्वैलक्षण्यं तथैव शक्तित्वानिर्वाच्यत्वाविशेषेऽपि प्राकृताप्राकृतशक्तिषु शास्त्रयुक्तिसिद्धवैलक्षण्यमभ्युपेयम। तत्र सच्चिदानन्दरससार-सरोवर-समुद्भूत-सरोज-तद्विशेषात्मनां धामादीनामपि निमित्तभूता दिव्यशक्तयस्तु अप्राकृता अन्यसर्वापेक्षयापि विलक्षणा एव।

किञ्च—वेदान्तिनये यथाऽऽकाशस्यैव वाय्वादिक्रमेण घटाद्यात्मना परिणामित्वेन घटत्वं घटावच्छिन्नत्वेन घटाकाशत्वमनवच्छिन्नत्वेन च महाकाशत्वम्, तथैवात्मन एव अव्यक्त-महदादिक्रमेण विवर्ततया बुद्धिदेहाद्यात्मत्वं तदवच्छिन्नत्वेन प्रतिबिम्बितत्वेन वा जीवात्मत्वम्, अनवच्छिन्नतया परमात्मत्वम्। तत्र अबाध्यत्वमेव सत्यत्वम्, बाध्यत्वं च मिथ्यात्वम्। घटादिकार्यं शुक्तिरूप्याद्यपेक्षयाऽबाध्यत्वेन सत्यमपि मृदादिसत्त्वेऽपि बाधदर्शनात् बाध्यत्वेन मिथ्या। एवं मृदाद्यपि स्वकार्यापेक्षयाऽबाध्यत्वात् सत्यम्, कारणपेक्षया बाध्यत्वेन च मिथ्या। एवं महदव्यक्तादिपर्यन्तमापेक्षिक-बाध्यत्वाबाध्यत्वाभ्यां मिथ्यात्व-सत्यत्वव्यवस्थायास्तारतम्यम्। अत्यन्ताबाध्यत्वात्तु सतः परमार्थसत्यत्वम्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इत्यादिश्रुतिभ्यः।

चित्तद्रुतेः कारणानां भेदाद् भक्तिस्तु भिद्यते।

सन्निधानासन्निधानभेदेन शरीरसम्बन्धविशेष - स्पृहयालुत्वलक्षणेन द्विविधेन कामेन जन्यायां द्रुतौ चित्ते या श्रीकृष्णनिष्ठता, सैव सम्भोगविप्रलम्भाख्या रतिः। एवं क्रोधस्नेहहर्षादिजन्यद्रुतिष्वपि रतयो विज्ञेयाः।

कामजे द्वे रती शोकहासभीविस्मयास्तथा।
उत्साहो युधि दाने च भगवद्विषया अमी॥

व्यामिश्रणे पुनः—

शृङ्गार - करुणौ हास्यस्तथा प्रीतिभयानकः।
अद्भुतो युद्धवीरश्च दानवीरश्च मिश्रिताः॥

इत्यादिभिः स्पष्टम्। विशेषतो भक्तिफलसम्बन्धे इमा अपि कारिका अनुसन्धेयाः—

राजसी तामसी भक्तिरदृष्टफलभावभाक्।
दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते॥
शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु।
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु॥
दृष्टादृष्टफला भक्तिः सुखव्यक्तेर्विधेरपि।
निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा॥

राजसी-तामस्योरपि भक्त्योः कथं न दृष्टफलव्यक्तिरित्याह—

रजस्तमोऽभिभूतस्य दृष्टांशः प्रतिबध्यते ।
शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥
तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ।
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥ इति ।

चैद्यादीनां तीव्रवातस्थित-प्रदीपज्वालावद् रजस्तमःप्रकर्षेण स्वप्रकाशानन्दाकाराऽपि मतिसन्ततिः सुखव्यक्तिपदास्पदं न भवति । प्रतिबन्धक्षये तु व्यज्यत एव सुखम् । द्रुतौ सत्यामेव भक्तिः, तदभावादेव वेनस्य न भक्तत्वम्, न वा किञ्चित्फलभाक्त्वम् । चैद्यो भगवतः सत्त्वाभ्युपगन्ता, वेनस्तु भगवत्सत्त्वानभ्युपगमान्नास्तिक एवासीदिति कुतस्तत्सम्बन्धः, कुतस्तरां द्रवता, कुतस्तमां भक्तिः ? रजस्तमोविहीना सुखाभिव्यञ्जकत्वेन भगवद्विषया मतिरेव रतिः । तत्समुच्छेद-तारतम्येनैव रतेरपि तारतम्यम् । यथा—

विरहे यादृशं दुःखं तादृशी दृश्यते रतिः । इति ।

मृदुमध्याधिमात्रत्वात्तत्रापि भेदः । वैकुण्ठ-मथुरा-द्वारका-वृन्दावनादिभेदेन व्रज-वन-निकुञ्जादिभेदेन वा प्रकाशभेदोऽपि । पुनश्च शुद्ध व्यामिश्रितादिभेदैरनेके भेदाः । भक्तिरसामृतसिन्धूज्ज्वलनीलमण्यादिषु ये विषया विस्तरेणोक्तास्त इह सूत्रभूताभिः कारिकाभिरुक्ताः । विशेषतो वेदान्त-साङ्ख्य-मीमांसादिशास्त्र तदविरुद्धयुक्तिभिः सर्वे विषया उपपादिताः । अद्वैतसिद्धिकाराणां श्रीमधुसूदनसरस्वतिपादानामपि सिद्धान्ताविरोधिनी स्वारसिकी भक्तिरासीत् । गूढार्थदीपिकासंग्रहे तैरेवोक्तम्—

अद्वैतत्वादिवत् तेषां स्वभावो भजनं हरेः । इति ।

साधनाभ्यासपाकभेदेन 'तस्यैवाहं ममैवासौ सोऽहमित्येवेति भावत्रैविध्यमपि तदभिमतम् । न च भक्तेषु तृतीयादर्शनम्; 'कृष्णोऽहं पश्यत गतिम्, अहं ब्रह्म परं धाम, मधुरिपुरहमिति भावनशीला' एवमादिषु तद्दर्शनात् । मामेकं शरणं व्रज इत्यस्यापि अन्तिमभाव एव तात्पर्यम्—मां प्रत्यक्चैतन्याभिन्नं परमात्मानमेकमद्वितीयं त्रिविधभेदशून्यं शरणं ( शरणं गृहरक्षित्रोरिति कोशानुसारेण ) आश्रयम्, घटाकाशस्य महाकाशमिव तरङ्गस्य जलराशिमिव रक्षितारम्, नैनमविदितो देवो भुनक्ति इति श्रुत्यनुसारेण प्रत्यगभिन्नतया विदितस्य निरावरणस्यैव परस्य अविद्यातत्कार्यात्मकप्रपञ्चापनोदनेन रक्षितृत्वमिति रक्षितारं वा व्रज अवगच्छ निश्चिनु इति तदर्थोपपत्तेः ।

अपि—च यथा प्रतीचः पराभिन्नत्वेनैव पूर्णत्वं तथैव परस्यापि प्रत्यगभिन्नत्वेनैवापरोक्षत्वम् अनौपाधिकानतिशयपरप्रेमास्पदत्वञ्चोपपद्यते । ताटस्थ्ये

तदनुपपत्तेः। आत्मनस्तु कामाय सर्वं प्रियं भवति इति श्रुत्या प्रत्यक्शेषत्वेनैव सर्वस्य प्रेमास्पदत्वं बोध्यते। तथा च रोगापनयनाय गुडूच्यादिपानस्य प्रेमास्पदत्ववत् आत्मकल्याणकरत्वेनैव भगवतोऽपि सोपाधिकप्रेमास्पदत्वे भगवद्भजनस्यापि गुडूचीपानाद्यविशेषापत्तिः। तद्वदेव सातिशयप्रेमास्पदता च। आत्माभिन्नत्वे तु तत्प्रेम नान्यार्थमिति अनौपाधिकानतिशयपरप्रेमास्पदत्वोपपत्तिः। द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्व जाते इति श्रुतिरपि न भेदपर्यवसायिनी। किन्तु दुर्लभे अत्यौत्कण्ठ्यलक्षणभक्त्यपेक्षसौलभ्यसम्भावनाजननाय सम्बन्धविशेषान् बोधयन्ती विरमति। तत्र सुपर्णत्वेन जीवेशयोर्भक्तभगवतोः साजात्यम्, सखायेति सख्यम्, समानं वृक्षं परिषस्व जाते इति सादेश्यम्, सयुजेति सायुज्यम् अर्थात् तादात्म्यं बोधितम्।

यत्साक्षादपरोक्षाद् ब्रह्म इति श्रुत्या ब्रह्मणोऽवेद्यत्वेनैव अपरोक्षतोक्ता। प्रतीचोऽतिरिक्तस्य तटस्थस्य न तत् कथमप्युपपद्यते, आत्मभिन्नस्य प्रमाणाधीननिष्पत्तिकत्वात्। स्वप्रकाशत्वेन नितरां स्वतो भासमान एव स्वारसिकोऽनतिशयश्च प्रेमा। अत एव श्रीशुकेन कृष्णस्य आत्मत्वमेवोक्तम्—

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया॥ इति।

तत एव ब्रह्मविदामपि चेतस्सु बलात्तत्स्फुरणम्—

यावन्निरञ्जनमजं पुरुषं जरन्तं
सञ्चिन्तयामि सकले जगति स्फुरन्तम्।
तावद् बलात् स्फुरति हन्त हृदन्तरे मे
गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः॥

क्लेशे क्रमात्पञ्चविधे क्षयं गते यद् ब्रह्मसौख्यं स्वयमस्फुरत्परम्।
तद् व्यर्थयन् कः पुरतो नराकृतिः श्यामोऽयमामोदभरः प्रकाशते॥
वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात्।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने॥

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु यत्किमपि तन्नीलं महो धावति॥
अद्वैतवीथीपथिकैरुपास्याः स्वाराज्यसिंहासनलब्धदीक्षाः।
शठेन केनापि वयं हठेन दासीकृता गोपवधूविटेन॥

इत्यादयः स्वभावोक्तयः ।

ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीयवार्ताम् ।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्ये प्रायशोऽजितजितोऽप्यसि तैस्त्रिलोक्याम् ॥

भक्तिर्ज्ञानाय कल्पते । यमेवैष वृणुते तेन लभ्यः ।

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥
तेषामेवानुकम्पार्थं - महमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम् ॥
तथाऽपरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्त - चेतसाम् ।

तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् :
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात् पार्थ मय्यावेशितचेतसाम् ॥

इत्यादिवचनकदम्बैर्ज्ञानस्य भक्तिपुत्रत्वोक्त्या चेदमवगम्यते यत्केषाञ्चित् भगवत्स्वरूपगुणनामश्रवण-कीर्तन-ध्यान - सराधनादिभिः सुमुखभगवदनुग्रहेण भगवत्स्वरूपसाक्षात्कारो भवति । केषाञ्चिच्च वेदान्तश्रवणादिभिः साक्षात्कारः । तत्र पूर्वेषां तु 'स्वभावो भजनं हरे'रित्युक्तिः । उत्तरेषां कृते भक्तियोगविधानार्थं भजनीयस्वरूपेण भगवदवतरणम् । यथा—

तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥ —इत्युक्तेः ।

न परं क्षीरनीरवत् आत्मानात्मविवेकनिपुणानां साङ्ख्यवादिनां हंसानाम्, अपि तु सत्यानृतविवेकबाधितानृतानाम् अवशेषिताद्वयानन्द-ब्रह्माधिष्ठानानां

परमहंसानाम् आरब्धदुरदृष्टरहितानाममलात्मनां परवैराग्यवतां भजनीय-स्वरूपोपस्थापनायैव औपनिषदस्य परमतत्त्वस्यैव दिव्यलीलाशक्त्याऽवतरणम्। न च तदतिरिक्ते तद्भजनीयतासम्भवः; बाधितत्वेन मिथ्यात्वावगमात्।

न च औपनिषदपरमपुरुषस्यापि स्वात्मत्वादेव कुतोऽन्यभजनीयापेक्षा, परमानन्दस्वरूपाया निरुपमसुखसंविद्रूपायास्तुरीयपुमर्थभूतायाः पञ्चमपुमर्थ-रूपाया वा भक्ते रसास्वादनाय तद्द्वारा ज्ञाने शोभातिशयाधानेन परमहंसानां श्रीपरमहंसत्वाय च तदपेक्षणात्। तथा चोक्तम्—

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्। इति।

न च प्रत्यक्चैतन्याभिन्न-परमानन्दघन-ब्रह्मसाक्षात्कारेणैव निभृत-चेतसां तद्व्युदस्तान्यभावानां कुतो रूपान्तरं णावतीर्णे ब्रह्मण्यपि रत्यतिशयः,

तस्यारविन्दनयनस्य पदारविन्द-किञ्जल्कमिश्रतुलसीमकरन्द-वायुः।
अन्तर्गतः स्वविवरेण चकार तेषां सङ्क्षोभमक्षरजुषामपि चित्ततन्वोः॥
परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया।
गृहीतचेता राजर्षे आख्यानं यदधीतवान्॥
अजितरुचिरलीलाकृष्टसारः :···

इत्यादिवचनशतैस्तथाऽवगमात्।

न चानधिगतगमक एव शब्दो न त्वकृतकारकः। नहि शब्दशतमपि घटं पटयितुमीष्टे। तथा च चमत्कृतिवैशेष्यमन्तरेण अक्षरब्रह्मजुषां कुतो रूपान्तरे रत्यतिशय इति वाच्यम्; सच्चिदानन्दब्रह्मापेक्षया सच्चिदानन्दरससार-सरोवरसमुद्भूतसरोजे सगुणब्रह्मणि चमत्कृतिवैशेष्योपपत्तेः। यथा इक्षु-रसाभिन्नत्वेऽपि शर्करा-सिता-कन्दादिषु चमत्कृतितारतम्यम्, तथैवात्रापि बोध्यम्। अत एव कृष्णचन्द्रस्य आनन्दकन्दत्वोक्तिः। सच्चिदानन्दरससारसिन्धू-द्भव-चन्द्रस्वरूपत्वात् चन्द्रत्वोक्तिश्च। काष्ठगताव्यक्ताग्न्यपेक्षया व्यक्ता-ग्नेरिव जलापेक्षया तदुपल इव च निर्गुणापेक्षया सगुणे चमत्कृतितारतम्यम्। बीजाङ्कुराद्यपेक्षया रसालस्येव सुरससुगन्धीक्षुदण्ड-चन्दनखण्डयोर्यदि तदनुरूप-शोभनफलपुष्पोद्गमो भवेत् तदा तत्रावश्यं चमत्कृतिविशेषो भवेत्। तथैव इहाप्यवधेयम्।

यद्यपि पूर्वोक्तयुक्त्याऽधिष्ठानस्य औपनिषदपरमपुरुषस्य अनतिशयत्वमेव; तथापि दिव्यलीलाशक्त्या प्रारब्धावशिष्टोपाधिदशायां वैशेष्यानुभवे बाधा-नुपपत्तेः। नेत्रदृष्टादित्यापेक्षया दूरवीक्षणादि - विशिष्टयन्त्रोपनेत्रादिदृष्टा-ऽऽदित्य इव निवृत्तिकान्तः करणदृष्टब्रह्मापेक्षया दिव्याह्लादिन्यादिशक्ति-व्यवहितान्तःकरणदृष्टब्रह्मणि विशेषानुभवे सिद्धान्ताविरोधात्। सर्वोपाधिबाध-

दशायामनतिशयत्वोपपत्तिरपि निराबाधैव। श्रीकृष्णस्य अविकृतब्रह्मरूपता भगवत्पादैरप्यङ्गीकृता—

ब्रह्माण्डानि बहूनि पङ्कजभवान् प्रत्यण्डमत्यद्भुतान्
गोपान् वत्सयुतानदर्शयदजं विष्णूनशेषांश्च यः।
शम्भुर्यच्चरणोदकं स्वशिरसा धत्ते च मूर्तित्रयात्
कृष्णो वै पृथगस्ति कोऽप्यविकृतः सच्चिन्मयो नीलिमा॥ इति।

एतेन—

ब्रह्मानन्दो भवेदेष द्विपरार्धगुणीकृतः।
नैति भक्तिरसाम्भोधेः परमाणुतुलामपि॥
त्वत्साक्षात्करणाह्लादविशुद्धाब्धिस्थितस्य मे।
सुखानि गोष्पदायन्ते ब्राह्माण्यपि जगद्गुरो॥
न परिलपन्ति केचिदपवर्गमपीश्वर ते।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्।

एवमादिवचनान्यपि व्याख्यातानि। ब्रह्मणः परमार्थतोऽनतिशयत्वेऽपि विशुद्धशक्तिसाहकार्येण चमत्कृतितारतम्यानुभवोपपत्तेः। ब्राह्माण्यपि सुखानि गोष्पदायन्ते। द्विपरार्धगुणीकृतो ब्रह्मानन्दो भक्तिरसाम्भोधेः परमाणुतुलामपि नैतीति तु शक्तिसहकृतान्तःकरणव्यङ्ग्यभगवति तद्रहितान्तःकरणाभिव्यङ्ग्यब्रह्मापेक्षया वैशिष्ट्यवर्णनपराणि। तादृशासङ्ख्यकार्यब्रह्मापेक्षया वैशिष्ट्यवर्णनपराणि वा। भावोद्रेकनिबन्धनानि वा। शुक-सनकादि-शङ्कर-सुरेश्वर-पद्मपाद-चित्सुख-सर्वज्ञात्म-श्रीधरस्वाम्यादीनां परस्सहस्राणां ब्रह्मविद्वरिष्ठानामपि तादृशमकैतवमेव प्रेम, एकभक्तिर्विशिष्यते इति श्रीमुखेनापि तत्समर्थनात्। ब्रह्म तं परादाद् देवास्तं परादुः, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद इत्येवमादिभिरनात्मत्वेन कस्यचिद्दर्शनमनर्थाय, किमुत भगवतोऽनात्मत्वेन दर्शनम्? व्यवधानासहिष्णुः प्रेमा व्यवहिते असन्निहिते न स्वाभाविकोऽकैतवश्च। तत एव परस्य सर्वान्तरत्व-परमसन्निहितत्व-परमसन्निहितत्व-प्रत्यक्त्वाद्युक्तिः।

कैतवरहितं प्रेम न तिष्ठति मानुषे लोके।
यदि भवति कस्य विरहो सति विरहे को जीवति॥

इति च प्रसिद्धिः। तस्मात् सिद्धान्तानुसारेण भक्तिपथप्रदर्शनमत्यावश्यकमिति अनुसन्धायैव आचार्यैर्भक्तिरसायनं रचितम्। अस्माभिरपि तमेव राजमार्गमनुसृत्य यथामति प्रथितो भक्तिरसार्णवः सशक्तिकस्य भगवतः सुखशयनागारो जायतामिति संप्रार्थ्य विरम्यते।

●

# शुद्धिपत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २७ | ब्रह्मात्म | ब्रह्म, आत्म |
| २ | ५ | तोभदः | तोर्भेदः |
| | १४ | वानाद्यौ | वा ? नाद्यौ |
| | २३ | ज्ज्योतिस्था | ज्ज्योतिःस्था |
| | २९ | नात्रोपपत्तिः । | नात्र प्रसक्तिः, |
| ५ | २७ | सिद्धं | सिद्ध |
| ६ | १५ | मपि च | मपि न |
| पृ० | पंक्ति | अशुद्धम् | शुद्धम् |
| ७ | ४ | उद्भतरूपत्वेन | उद्भूतरूप-वत्वेन |
| | १० | कर्तृर | कर्तुर |
| | ३२ | साहश | ताहश |
| ८ | ५ | घटदि | घटवदि |
| ९ | ११ | सजातीय | सजातीयादि |
| १२ | १२ | कृष्णत्व | कृष्णपरत्व |
| | १६ | ऋतूरनु | ऋतूँरनु |
| | १७ | तवेतत् = तव सख्यम् । | तवेत् = तव । सख्यम् । |
| १४ | ५ | सर्वथैव | सर्वदैव |
| | १७ | षुण्वति | षुण्वन्ति |
| १५ | ३ | मपहाय | मपसार्य |
| | ३१ | अनूप | अपूप |
| १६ | ११ | शनै मन्दं | शनैर्मन्दं |
| | २२ | वित्करत् | कुवित्करत् |
| १७ | १३ | नासु | नासुः |
| १८ | ७ | वासु इति | नासुरिति |
| | ११ | बहव्यः | बह्व्यः |
| २० | ११ | एवम् 'अपरिनिष्ठतत्व | 'एवमपरिनिष्ठितत्व |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १८ | शक्त्यन | शत्यन |
| २३ | १० | तत्र एत | वत्र एत |
| | १२ | सवषां | सर्वेषां |
| २५ | ८ | सूतः शृंगः | सनः । शृंगः |
| | ९ | निर्गता मिति | निर्गतमिति |
| | १० | महामतेः | मह्यागतेः |
| | २६ | गोशब्द | गोपशब्द |
| २६ | २ | दीर्घतमो द्रष्टा | दीर्घतमोद्दष्टा |
| | १४ | वनि त्वे | वनित्वे |
| | | पर्यृषति | पर्यूषति |
| २७ | २८ | पंक्तिश्छन्द | पंक्तिच्छन्द |
| २९ | ६ | पप्रच्छ | प्रयच्छ |
| ३१ | १० | नाम सुपा | नामसु पा |
| | ११ | महीयते स्तूयते | स्तूयते |
| ३२ | २ | कपे मम | कपेमंम |
| | ७ | मध्यमे न | मध्यमेन |
| | ९ | सुखाचमकां | सुखाचयकरं |
| | | दयिमति | रयिमति |
| | २२ | अवश्यान् | अवश्यायान् |
| | २४ | सुपुत्रे | सुपुत्रेण |
| | २६ | नोऽश्वि | नोरश्वि |
| ३३ | २ | रसात् | रसान् |
| | ४ | मध्यस्थानां | मध्यस्थाना |
| | ६ | कमन्य | कमन्यँ |
| ३४ | ४ | तौघो | तयोर्घ्नौ |
| ३५ | ७ | माष्टेः | मार्ष्टेः |
| ३९ | ६ | आशीर्वादादीनि | शीर्षादीनि |
| | २८ | आत्मजाते | आत्मजातेन |
| ४० | १ | अवेण | अुवेण |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १९ | वाचकम् । बो | बौ |
| ४१ | २४ | देशं अन्य | देशमन्य |
| ४२ | १७ | प्रादुर्भवति | प्रादुर्भावयति |
| पृ० | पं० | अशुद्धम् | शुद्धम् |
| ४४ | ११ | विष्वङ | विष्वङ् |
| | २८ | वस्तुं | वस्तु |
| ४६ | १४ | तूष्णीं भव | तूष्णीं किं भव |
| | २६ | रण्यान् | रण्यान् |
| ४७ | १९ | देवत्यत्वं | दैवत्यं |
| | २० | ध्यक्षा: | ध्यक्ष: |
| ४८ | २१ | नन्यांश्च | नन्यांश्च |
| ५१ | ६ | द्रव्यात्याग | द्रव्यत्याग |
| ५२ | ३३ | धीरो: | धीरो |
| ५४ | १ | भवति | भवसि |
| | २ | मादत्त | मादत्ते |
| | १९ | रुतोऽपि | रुतापि |
| | २० | उभावुभौ | उभा उभौ |
| ५५ | २० | भावार्थंतु प्रल- | भावार्थकप्रत्य- |
| | २२ | क्षिपन्ति | क्षियन्ति |
| | | विश्रोतत्यम् | विश्रोतव्यम् |
| ५६ | ११ | द्यावापृथिवीं | द्यावापृथिवी |
| | १४ | भुवनानु | भुवनानि |
| | २१ | भूतानि अनुप्रविश्य- | भुवनानि भूत- |
| | २२ | अमू | अमूं |
| | २५ | आमृण्याख्य | आम्भृण्याख्य |
| ५७ | ५ | कामरूपेण | कामेशरूपेण |
| ६४ | २७ | विभावा | विभावा |
| | ३२ | भावा रस: | भावो रस: |
| ६८ | १५ | श्रुतोक्षित | श्रुतेक्षित |
| | १६ | ध्रियाऽस्त | ध्रियात |
| | | तत्तद्वापु: | तत्तद्वपु: |
| | २४ | सार | कथासार |
| ६९ | २८ | भूमि: | भूमं: |
| ७७ | २८ | मानृण्य | मासृण्य, |
| ८० | २७ | लौकिक्यासु | लौकिकीषु |
| ८६ | २३ | भीत्समान: | भीप्समान: |
| ८७ | १६ | शाक्ताश्च | शाक्ता: |
| | | गाणपत्या: | गाणपत्याश्च |
| | २७ | कतेव | कतैव |
| ८८ | ५ | उरीक्रियते । | ऊरीक्रियते, |
| | १७ | भगद्भोग्या | भगवद्भोग्या |
| ९० | १० | विप्रलम्भं | विप्रलम्भ |
| | २२ | स्वात्मभूतैव | स्वात्मभूतैव । |
| ९२ | १ | धुता: | धुता |
| | ३१ | उभयोभय | उभय उभय |
| ९३ | १७ | रक्षात्मक: | रसात्मक: |
| | २१ | तन्त्राक: | तन्त्रताक: |
| ९५ | ७ | दधत्य | दधात्य |
| १०१ | ४ | ह्लादत्व | ह्लादत्वं |
| | ५ | ब्रह्मणा | ब्राह्मणा |
| | ३२ | मणि स्पर्शेन | मणिस्पर्शेन |
| १०२ | १ | सौवर्णं सुवर्णमेव | सौवर्णं सौवर्णं |
| | १९ | सचिदा | सच्चिदा |
| १०३ | ८ | तम्यवत् । ताप | तम्यवत्ताप |
| १०७ | २१ | त्मोपेक्षया | त्मापेक्षया |
| ११० | ९ | भगवत्तात | भगवत्त्वात्तु |
| ११३ | ८ | रूपेणा पूर्वं | रूपेण पूर्वं |
| | १७ | शब्दित | शब्दित: |
| | २९ | तृप्तं | तप्तं |
| ११४ | २६ | योरेक्य | यौरैक्यं |
| ११५ | २९ | तत: | तप: |
| | ३३ | तदुक्तम् | यथा |
| ११६ | ७ | प्रियस्तत्त | प्रियस्तत्त्व |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | ८ | दशो वासो | दशोर्वासो |
| | ३२ | प्रमयन्त्रितो | प्रेमयन्त्रितो |
| ११७ | ६ | रसमयो | रसमयो |
| ११८ | १ | तत्रत्यो | तत्रत्यो |
| | २५ | कोमलो | कोमलौ |
| ११९ | १५ | दम्पत्योः | दम्पत्यो |
| | ३१ | वर्णान | वर्णन |
| १२१ | १४ | न्द्रियाऽना | न्द्रियादिना |
| | १८ | अवाचनीयैव | अवाचीनैव |
| १२२ | ७ | तदुक्तम् | यथा |
| १२५ | २० | तदुक्तम् | यथा |
| १२६ | ४ | यत्रो | यत्र |
| | ३१ | नयात् | नया |
| १२७ | १६ | सौन्दयोः | सौन्दर्ययोः |
| | २६ | वाऽऽनन्द | वा नन्द |
| | | कामेश्वरीत्वम्, | कामेश्वर-कामेश्वरीत्वम् |
| १२८ | १२ | तदुक्तम् | यथा |
| | ३२ | भावात् मूलं | भावादमूलं |
| | | सर्वमूलस्य | सर्वमूलस्या |
| १२९ | ३३ | तथा चोक्तम् | यथा |
| १३० | १६ | ( वृ० श० ) | ( वृ० श० ) ( वृन्दावनशतकम् ) |
| १३२ | ३० | एके | एकं |
| १३३ | ५ | गम्भीर | गम्भीरो |
| | १० | बद्धोऽनियत | बद्धो नियत |
| १३४ | २४ | आस्वादयन्ति | आस्वादयन्ति च। |
| १३५ | २१ | राधेव | राधैव |
| १३६ | ५ | शालिनी | शालिनि |
| | ९ | अङ्कास्थिते | अङ्कस्थिते |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १० | त्याकस्मात् | त्यकस्मात् |
| | १८ | लीलयां | लीलायां |
| | १९ | भोक्तुस्तृप्ता | भोक्तुरतृप्ता |
| | ३१ | (शतपथ १३.६.१) | + |
| | ३२ | सम्बन्धेनै क | सम्बन्धे नैक |
| १३८ | २ | अयित्व | अयत्व |
| | २० | चैव | च |
| १३९ | २८ | तच्च | सा च |
| | | भावना प्रकर्ष | भावनाप्रकर्ष |
| १४३ | १५ | पुरुषं | पुरुषः |
| | १८ | वान्यान् | वान्यात् |
| | ३१ | व्यापक: | व्यापकः |
| | २४ | तटस्थस्यैवेते | तटस्थस्यैवैते, |
| | | न ममैवेते | न ममैवैते |
| | २५ | तटस्थस्यैवेते | तटस्थस्यैवैते |
| १४६ | १४ | विनाशोऽपि | विनाशेऽपि |
| | २६ | प्रशसा | प्रशंसा |
| | ३३ | नियतरुपा | नियतरूपा |
| १४८ | ७ | अभिनया | अभिनयाः |
| | १९ | विशेष्य | विशेषण |
| १४९ | १२ | चिवमु | चिरमु |
| १५० | १७ | यादग | यादग् |
| | २६ | युञ्ज्यत | युज्यत |
| | २८ | अन्तरामो | अन्तरायो |
| | ३० | कारणपेक्षया | कारणापेक्षया |
| १५१ | २७ | विभावत्व | विभावत्वं |
| १५२ | ५ | मानत्वापा | मानत्वोपा |
| | १८ | कल्पेन | कल्प्येन |
| १५३ | २७ | रूपश्च | रूपञ्च |
| १५४ | १५ | मुज्वज्लम् | मुज्ज्वलम् |
| | २३ | चन्द्रदः | चन्द्रकः |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | २८ | चन्द्रकार्थ | चन्द्रकार्थः |
| १५५ | ११ | तदुक्तम् | यथा |
| | २२ | त्मकाः | त्मकानि |
| | २५ | प्रतीकभतौ | प्रतीकभूतौ |
| १५६ | २ | दर्दु राणञ्च | दर्दु राणाञ्च |
| | ५ | वदस्य | वहस्य |
| १५७ | २ | चेतस्याश्लेषजं | चैवाश्लेषजं |
| | ३० | माधवावे | माधवावेव |
| १५८ | ५ | सनाशनात् | सनाशयात् |
| | २७ | रतन | स्तन |
| | ३० | लिङ्गय | लिङ्ग्य |
| | ३१ | संस्पृशन्नापि | संस्पृशन्नपि |
| १५९ | ४ | प्रेयांसं मार्द | प्रेयांसमार्द |
| | १६ | रससिंधु | रससिन्धु |
| | २६ | प्रकृति | प्रकृति |
| | २७ | रसालें | रसालं |
| | २८ | समात्वा | समास्वा |
| १६० | ३ | कातर्य्य | कातर्य |
| | ५ | निभर | निर्भर |
| | ६ | द्रात्री | द्रात्रि |
| | ९ | भवति | भवति । तदुक्तम्— |
| | १२ | रिष्वङ्ग | परिष्वङ्ग |
| १६१ | १ | प्रमतत्व | प्रेमतत्त्व |
| | ६ | दृष्टिनैवा | दृष्टिनैंवा |
| | ७ | ऽुत्तररामचरिते स्वप्नवासवदत्ते | |
| | १७ | तप्ताङ्गारकं जघ्वा वै | जग्ध्वा सुतप्तमङ्गारं |
| | २९ | यतन्न | यतो न |
| १६२ | २ | समौ तौ स्यातां हि | समौ हि तौ स्यातां |
| | १२ | तदुक्तम् | यथा |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | २२ | दिव्य | दिव्य |
| | ,, | स्वरूपभूतम् । | ते स्वरूपभूता । |
| | २३ | प्रतिबिम्बिता | प्रतिबिम्बितौ |
| १६४ | २२ | तदुक्तम् | यथा |
| | २३ | सुखित्वर्थ- | सुखित्वार्थं |
| | ३२ | स्वरूपिणः | स्वरूपिणौ |
| १६५ | १० | सविधाय | संविधाय |
| | १३ | तयोः सौख्यसुखित्वं दम्पतीसुख- हि तेन तासां सौख्यत्वं सखीनां सुसिद्ध्यति | तेन सिद्धयति |
| १६६ | ४ | शक्तिः | शक्ती |
| | २७ | मधुकर | मधुकरः |
| | २९ | सखीसु | सखीषु |
| १६८ | १९ | तददेव | तद्वदेव |
| १६९ | ९ | श्रीमाधवतद् | श्रीमाधवस्तद् |
| | १० | तेन । स्वतो विराजन्ते | तेन स्वतो विराजते |
| | ३० | तदुक्तम् | यथा वा |
| १७० | १५ | पारतन्त्र्य | पारतन्त्र्यं |
| | २५ | प्रम्णः प्राखय | प्रेम्णः प्राखर्यो |
| १७१ | १६ | शक्त्यचिछन्न | शक्त्यवच्छिन्न |
| | २६ | घटाकारे | घटाकारेण |
| १७२ | १० | ह्यपथा भवन्ति | ह्ययथाभवन्ति |
| | २० | पेरूणापि | रूपेणापि |
| १७३ | १६ | श्रोतव्य | श्रोतव्यः |
| १७५ | ५ | मधू-स्नेह | मधु-स्नेह |
| | १३ | इति । स्कान्दे | इति स्कान्दे । |
| १७६ | ९ | अनेकविधा | अनेकविधाः |
| | १० | स्वकीयाश्च । | स्वकीयाः |
| १७८ | २९ | स्वकर्तृकंस्नपन-भोजन-तर्पणा-प्रेन्तरा | स्वकर्तृकस्नपन-भोजन-तर्पणा-दिकमन्तरं |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | ३२ | प्रष्ठाय | प्रेष्ठाय |
| १७९ | २१ | प्रेमाल्पत्वरा- ऽनन्यत्व | प्रेमाल्पत्वा- ऽनन्यत्व |
| १८० | ३ | देव ते अहमस्ति | देवते अहमस्मि |
| | १४ | साधको | साधवो |
| १८२ | ३१ | नुभावास्यु | नुभावाः स्यु |
| १८३ | ७ | बीजभिक्षुः | बीजमिक्षुः |
| | १८ | बिस्मयः | विस्मयः |
| | २१ | तातादिवन् | तानाविदन् |
| | २७ | मूर्च्छननं | मूर्च्छनम् |
| | २८ | शालिनी | शालिनि |
| १८४ | ६ | सुखं भवति। | सुखं भवति |
| | १८ | संतापान् | संतापात् |
| १८८ | ,, | मार्जनीः | मार्जनी |
| १८९ | १३ | विवधनेन्दु | विवर्धनेन्दु |
| | २७ | पङ्क्तिशोभां धन्य | पङ्क्तिशोभां धन्यः |
| १९३ | ८ | दधत्य | दधात्य |
| | १३ | यैनिपीतं | यैर्निपीतं |
| १९४ | १९ | आस्ते | आस्से |
| | २२ | रन्घ्रेण | रन्ध्रेण |
| | २० | कोलाहलपर्णः | कोलहलपूर्णः |
| | २४ | विसिस्मिये | विसिस्मियाते |
| | ३२ | प्रेर्णचञ्च मपूलमञ्चल- | प्रेमपूर्णचञ्चल- मञ्चला |
| १९६ | १० | सवा | सर्वा |
| | २९ | मार्जयति | मार्ष्टि |
| १९७ | २७ | रूपिणो मना | रूपिणोर्मना |
| १९८ | ३ | वास्तु | वस्तु |
| | ४ | विभेदो | विभेदो |
| | १२ | लीलयां | लीलायां |
| | १३ | प्रमसन्दाकिनी | प्रेममन्दाकिनी |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९९ | ११ | ज्वालं | ज्वालां |
| २०० | १६ | दव्य | दिव्य |
| | २१ | सङ्कुचति | सङ्कुचति |
| २०१ | १५ | प्यनुरज्जन्ति | प्यनुरज्यन्ति |
| | १९ | शय्याया | शय्यायां |
| | २८ | छविमयो | छविमयीं |
| २०३ | १० | वल्लयो | वलयो |
| २०४ | १२ | क्षणं यस्यावतिष्ठते महो | |
| | १३ | द्यानस्य सन्निधौ। तस्यां पुष्पाणि पत्राणि सर्वाण्यपि पीतान्येव भवन्ति | × |
| २०४ | १४ | स्वर्णानि भवन्ति हि | स्वर्णवर्णानि भान्ति हि |
| २०६ | ११ | ददा | कदा |
| | २५ | मचनं नवेद्यं | मचनं नैवेद्यं |
| २०८ | १ | मार्जितमिव, लावण्येन अनुलिप्तमिव, सौन्दर्येण | मार्जितमिव लावण्येन, अनुलिप्तमिव सौन्दर्येण, |
| २०९ | १६ | कुब्जाः कन्याका परोढाश्च | कुब्जा कन्यकाः परोढाश्च |
| | २४ | निमलैः | निर्मलैः |
| | २६ | उद्वत्तनं | उद्वर्त्तनं |
| २१२ | ४ | दिव्यया | दिव्यया |
| | १३ | प्रेयकौटल्य | प्रेमकौटल्य |
| | २० | लीलविषयिण्यो वृत्तय | लीलाविषयिण्यो वृत्तयः |
| | २५ | यशकर्णा- | यशःकर्णा- |
| २१३ | १२ | मनसा | महसा |
| | २३ | कुन्दवीर | कुन्दकरवीर |
| २१५ | १ | तद्यगल | तद्यगलः |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | २१ | सरिनीरा | सरिन्नीरा |
| २१७ | २३ | आविद्यका | आविद्यिका |
| | २४ | साकारत्व, | साकारत्वेन |
| | २६ | श्रुयते | श्रूयते |
| | ,, | पृथिव्यादीन | पृथिव्यादीनां |
| | ५ | तेजोमयनन्द | तेजोमयानन्द |
| | २४ | जालैदलङ्कृ | जालैरलङ्कृ |
| २२० | ५ | सङ्कुला | सङ्कुला |
| | २४ | पुरुष.त् | पुरुषान् |
| २२२ | ६ | नन्द्र | नन्द |
| | २५ | दर्चिमंणि | दर्चिमंणि |
| २२३ | ७ | खल्वमभिम | खल्वभिम |
| २२४ | ११ | प्रमोदवुद्ग | प्रमोदावुद्ग |
| | २५ | श्रीविग्रहघन | श्रीविग्रहात् |
| | २६ | द्रेकेण च | द्रेकेण |
| २२६ | २७ | कैवल्यच्छा | कैवल्येच्छा |
| | २८ | गीतोक्तचित्त-बडिश | भागवतोक्त-चित्तबडिश- |
| २२७ | १२ | दङ्ध्र् ययः | दङ्ध्रयः |
| | २३ | सार्वज्ञ्यः | सार्वज्ञ |
| २२८ | १८ | श्रीत्रिपुरारहस्येऽपि | बोधसारेऽपि |
| २२९ | १२ | ख्यात्रपि | ख्यातिरपि |
| २३० | १ | त्युक्त | इत्युक्त |
| | २ | दपोहे | तदपोहे |
| | ८ | लब्धाभाव | लब्धभाव |
| २३२ | ६ | भत्ति | भक्ति |
| २३४ | २८ | मन्यथाकतु | मन्यथाकर्तु |
| २३५ | ८ | हृवते | हृदये |
| | २८ | भानावरण | भग्नावरण |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३६ | १४ | सम्भवात् | सम्भवः |
| | २१ | कमि"त्यापद्येत । | क"मिति, |
| | ३१ | रसश्च | रसो |
| २३७ | ५ | आवश्यकत्वात् । | आवश्यकत्वमेव । |
| | १२ | भूतेप्राकृत | भूतेऽप्राकृत |
| | २३ | प्राकृतत्वं उच्यते । अप्राकृतस्तु | प्राकृतत्वम् । उच्यतेऽप्राकृतस्तु |
| | २७ | तूभयोरेव | तूभयोरेव |
| २३८ | ११ | स्वतिपादैः | स्वतीपादैः |
| | २७ | स्वतिपादैः | स्वतीपादैः |
| २३९ | २० | कृष्णानाम | कृष्णनाम |
| | २२ | कच्चूर | कर्चूर |
| २४० | २ | वर्तिनीः | वर्तिनी |
| २४१ | ७ | दत्त | दत्तं |
| | १५ | सत्व | सत्त्व |
| २४२ | ६ | प्रविष्टामन्य | प्रविष्टायामन्य |
| | ११ | समुद्राश्च | समुद्रांश्च |
| | २३ | तन्मय जगत् | तन्मयं जगत् |
| | २६ | भगद्रूप | भगवद्रूप |
| २४४ | १३ | कारणपेक्षया | कारणापेक्षया |
| २४५ | १४ | मात्रत्वातत्रा | मात्रत्वात्तत्रा |
| | १६ | स्वतिपादा | स्वतीपादा |
| | ३२ | पूर्णत्व | पूर्णत्वं |
| | ३३ | प्रमास्पद | प्रेमास्पद |
| २४७ | २५ | सराधना | संराधना |
| | १० | चतसां | चेतसां |
| २४८ | १२ | वित्ततन्वोः | चित्ततन्वोः |
| २४८ | २२ | परादाद्याऽन्य | परादाद्योऽन्य |
| | २५ | परमसन्निहितत्व | × |

सूचना—पृ० २१७ तः २३९ पर्यन्तं ९-१०-११ प्रकरणेष्वपि ८ मप्रकरण शीर्षकमेव पृष्ठसंख्या सहमुद्रितम् । तत् शोधयित्वा पठनीयम् ।

# पुस्तक प्राप्ति-स्थान

१–श्री सन्तशरण वेदान्ती
धर्म-संघ
दुर्गाकुण्ड, वाराणसी ।

२–श्री बाबूलाल गनेड़ीवाले
कमला स्टोर
काटन स्ट्रीट, कलकत्ता ।

३–श्री मोतीलाल बनारसीदास
चौक, वाराणसी ।

४–श्री मास्टर खेलाड़ीलाल एण्ड सन्स
कचौड़ीगली, वाराणसी ।

५–श्री भारती विद्या प्रकाशन
कचौड़ीगली, वाराणसी ।